हतां वनतनाद्यनिमामिति नस्य लोपः वङ्कमूर्द्धावङ्कमस्तकान् एवं द्विमूर्द्धान् चिमूर्द्धान् द्विचेमूर्द्धेइति षः म्बोर्लोपेतावितिं नस्य लोपः वङ्कशब्दोविपुलार्थस्तुद्धादिसंख्यार्थकोवा अतएव भीमान् भयङ्करान्॥ ४१॥

तैर्वृक्णरुग्णसंभुग्नचुषाभिन्नविपन्नकैः। निमग्नोद्विग्नसंह्रीणैः पप्रे दीनैश्च मेदिनी॥ ४२॥

ज०म० तर्वृ। तैः राक्षसैर्मेदिनी पप्रे पूरिता प्रापूरण इत्यस्मात्कर्मणि लिट् वृक्णैः छिन्नैः रुग्णैः भग्नहस्तपादैः सम्भुग्नैः वक्रीकृतदेहैः चुषैः सम्पिष्टशरीरैः भिन्नैः विदारितैः विपन्नकैः नष्टैः अनुकम्पार्थां कन् निमग्नैः परिभूतैः उद्विग्नैर्भीतैः संह्रीणैर्लज्जितैः वयमपीदृशीन्दशां प्राप्ता इति दीनैः हा मातः हा भ्रातरित्येवमाषमाणैः तत्र वृश्चिरुजिभुजिमस्जिविजिभ्योनिष्ठायामोदितश्चेति नत्वम् चोःकुरिति कुः चुदिभिदिपदिभ्योरदाभ्यामिति दस्य च नः संह्रीणइति नुदविदेत्यादिना दीङ्क्षये इत्यस्य स्वादय ओदित इत्योदितश्चेति नत्वम्॥ ४२॥

भ० तैरित्यादि। तैराक्षसैर्मेदिनी पप्रे परिता पृल्पिपूर्त्तौ कर्मणि ठी कीदृशैः वृक्णैः छिन्नैःवृस्चेःकङ्पेति क्तस्य नलं कङ्च चस्य कत्वे तस्मिन्नित्यस्य ग्रस्य सले स्वादेःसेर्लोपः ग्रहस्तपादोरिति जिः रुग्णैर्भग्नहस्तपादैः रुजोभ्रोभङ्गे ओदित्वात् सूल्वादोरिति क्तस्य नः जस्य गत्वविधानं मग्नस्य दोर्भिर्भुवनस्य भारमित्यत्र व्याख्यातं संभुग्नैर्वक्रीकृतैः भुजोभ्रोवक्रणे पूर्व्ववत् चुषैः संपिष्टदेहैः चुदिरसंपेषणे

दाकत्वात् स्वाद्योरिति क्तस्य दस्य च नः पूर्वोऽदान्तेत्यादिना पूर्वस्य णत्वे ष्टुभिरिति परस्य नस्य णत्वं भिन्नैर्विदारितैः विपन्नकै र्मृतैः विपूर्वपदिर्मरणे वर्त्तते स्वार्थे कुत्सायां वा कः निमग्नैर्भी त्या गुप्तैः रुधिरप्रवाहे मग्नैर्वा उद्विग्नैर्भीतैः ओविजीभयचलन योः संक्षीणैः योद्धुमसामर्थ्यात् लज्जितैः ह्रीलिलज्जायां ह्रीघ्राधौ न्देति क्तस्य नः दीनैः सुतादिदुःखान्वितैः ओदीङ्क्षये ॥ ४२ ॥

केचिद्वेपथुमासेदुरन्ये दवथुमुत्तमं। सरक्तं वमथुं केचिद्भ्राजथुं न च केचन ॥ ४३ ॥

केचित्। तेषां मध्ये केचित् वेपथुं कम्पम् टुवेपृकम्पने आसेदुः प्राप्ताः अन्ये दवथुमुपतापमुत्तममत्यन्तं टुदुउपतापे केचिद्वम थुञ्छर्दनं सरक्तं सशोणितं टुवमुउद्गिरणे भ्राजथुं शोभां नैव के चन न केचिदपि टुभ्राजृदीप्तौ सर्वत्र ड्वितोऽथुच् ॥ ४३ ॥ ज॰म॰

केचिदित्यादि। तेषां मध्ये केचिद्राक्षसा वेपथुं कम्पं आसेदुः प्रापुः वपट्टृङ्चलने अन्ये दवथुं उपतापं उत्तमं महान्तं आसे दुः टुदुउपतापे केचित् वमथुं रक्तेन सह छर्दिमासेदुः टुवमउ द्गिरणे केचन भ्राजथुं दीप्तिं नासेदुः टुभ्राजृङ्दीप्तौ सर्वत्र ड्विता ऽथुभावे इति अथुः ॥ ४३ ॥ भ॰

मृगयुमिव मृगोऽथ दक्षिणेर्म्मा दिशमिव दारुवतीं मरावुदन्यन्। रघुतनयमुपाययौ त्रिमूर्द्धा विषभृदिवोग्रमुखं पतत्रिराजं ॥ ४४ ॥

ज॰म॰ मृग। अथैतस्मिन् राक्षसविध्वंसनप्रस्तावे त्रिमूर्द्धः त्रिशिरानाम राक्षसः रघुतनयमुपाययौ उपागतः मृगयुमिव लुब्धकमिव मृगान् यातीति मृगयुः मृगय्वादयश्चेत्यौणादिककुप्रत्ययान्तः दक्षिणेर्म्मा दक्षिणे ईर्म्म व्रणं यस्येति दक्षिणेर्म्मा लुब्धयोग इत्यनिच् यथा मृगोलुब्धकव्रणितदक्षिणाङ्गः तमेव मरणायोपयाति दिशमिव दाहवतीं यथा दिग्दाहवाग्नियुतामरौ निर्जले देशे मृग उदन्यन् उदकपानाभिलाष उपयाति उदकमिच्छति सुप आत्मन इति क्यच् उदकस्योदन्भावः अशनायेत्यादिना निपातितम् तदन्ताल्लट् शतृप्रत्ययः विषभृदिव यथा विषधरः सर्प उग्रमुखभीषणमुखम्पतत्त्रिराजं गरुडमुपयाति तद्वत्समिति राजाहःसखिभ्यष्टच्॥ ४४॥

भ॰ मृगयुमित्यादि। अथ रक्षोवधानन्तरं त्रिमूर्द्धस्त्रिशिरानाम राक्षसो रघुतनयं रामं उपाययौ उपागतः यथा दक्षिणेर्म्मा व्याधेन व्रणितदक्षिणाङ्गोमृगस्तमेव मृगयुं व्याधं याति तद्वत् मृगं यातीति मृगयुर्निपातनात् दक्षिणेऽङ्गे ईर्म्म व्याधघातव्रणं यस्य स दक्षिणेर्म्मा दक्षिणादीर्म्मादन् व्याधव्रणितदक्षिणाङ्गे मृगे इति परसूत्रं लभते ईर्म्मन् शब्दोऽप्यस्ति किम्वा दक्षिणे ईर्म्म व्रणं यस्येति धर्म्मादनित्यस्य योगविभागादन् लुब्धकयोगस्त्वभिधानात् व्रणोऽस्त्रियामीर्म्ममरुरित्यमरः यथा वा उदकपानाभिलाषी मृगो मरौ निर्जलदेशे दाहवतीं दिशं उपयाति उदकं पातुमिच्छतीति धनोदकाशनेति क्यो उनङ् शतृः यथा वा विषभृत् सर्प उग्रमुखं भीषणवदनं पतत्त्रिराजं गरुडं उपयाति॥ ४४॥

शितविशिखनिकृत्तकृत्स्नवक्त्रः क्षितिभृदिव क्षिति कम्पकीर्णशृङ्गः। भयमुपनिदधे स राक्षसानामखिल कुलक्षयपूर्व्वलिङ्गतुल्यः॥ ४५॥

इति भट्टिकाव्ये चतुर्थः सर्गः॥

शित। त्रिमूर्द्धा राक्षसानां भयमुपनिदधे उपनिहितवान् की दृशः शितविशिखैस्तीक्ष्णविशिखैः निकृत्तानि छिन्नानि कृत्स्नानि सर्व्वाणि वक्त्राणि मुखानि यस्य सः क्षितिभृदिव भूधर इव कीदृशः क्षितिकम्पकीर्णशृङ्गः क्षितेर्भूमेः कम्पेन कीर्णानि क्षिप्तानि शृङ्गा नि यस्य क्षितिभृतः अखिलस्य सर्व्वस्य कुलस्य क्षये विनाशे यत् पूर्व्वं लिङ्गन्तेन तुल्यः असावप्यखिलराक्षसक्षयस्य पूर्व्वलिङ्गतुल्यः ॥ ४५॥ जं॰म॰

इति भट्टिकाव्यटीकायां जयमङ्गलाख्यायां प्रकीर्णकाण्डे राम प्रवासश्चतुर्थः सर्गः॥ ४॥

शितेत्यादि। शितविशिखैस्तीक्ष्णवाणैर्निकृत्तानि छिन्नानि कृत्स्ना नि सर्व्वाणि वक्त्राणि मुखानि यस्य स त्रिमूर्द्धा राक्षसानां भयमुप निदधे उपनिहितवान् क्षितिभृदिव पर्व्वत इव क्षितिकम्पात् कीर्णा नि विक्षिप्तानि शृङ्गाणि यस्य स तथा त्रिमूर्द्धः किम्भूतः अखिलकुल क्षयपूर्व्वलिङ्गतुल्यः अखिलस्य कुलस्य क्षयः तस्य यत्पूर्व्वलिङ्गं पूर्व्वचिह्नं भाविक्षयसूचक उत्पातस्तत्तुल्यः केचित्तु अखिलकुल स्य क्षये पूर्व्वलिङ्गं आदिचिह्नं त्रिमूर्द्धस्तादृशः पर्व्वत इत्याहुः ॥ ४५॥ भ॰

इति मदयगीराङ्गमल्लिकात्मजश्रीभरतसेनकृतायां भट्टि टीकायां मुग्धबोधिन्यां प्रकीर्णकाण्डे त्रिमूर्द्धवधोनाम चतुर्थः सर्गः॥ ४॥

निराकरिष्णू वर्त्तिष्णू वर्द्धिष्णू परितो रणं। उत्पतिष्णू सहिष्णू च चेरतुः खरदूषणौ ॥१॥

ज०म० निरा। खरदूषणौ रणम्परितः समन्तात् अभित इत्यादिना द्वितीया चेरतुः भ्रान्तौ निराकरिष्णू शत्रुनिराकरणशीलौ वर्त्तिष्णू अभिमुखं वर्त्तनशीलौ न पलायनशीलौ वर्द्धिष्णू मायया महाप्राणोद्भावनशीलौ उत्पतिष्णू नभउत्पतनशीलौ सहिष्णू शस्त्रप्रहारसहनशीलौ सर्व्वचालङ्कृणीत्यादिना इष्णुच्॥१।

भ० निराकरिष्णू इत्यादि। खरदूषणौ रणं परितः सर्व्वतश्चेरतुः चरगत्यां ठी धिक्समयेति परितोयोगे द्वितीया निराकरिष्णू शत्रुनिराकरणशीलौ वर्त्तिष्णू वर्त्तनशीलौ अर्थात् प्रतियोद्धृसंमुखे रणं परित इति वा अनुषञ्जनीयं वर्द्धिष्णू मायया वर्द्धनशीलौ उत्पतिष्णू आकाशादुत्पतनशीलौ सहिष्णू प्रतियोद्धृशस्त्रघातादिसहनशीलौ सर्व्वत्र जिभ्राजभूषहेत्यादिना कर्त्तरीष्णुः शीलार्थता तु ढघेक्तत्यश्चेति सूत्रे शीलार्थे तृन्नित्युक्तं किन्तु तृण्विधायकसूत्रे शीलार्थता नोक्ता अतएव तृणादयः कतिचित् प्रत्ययाः शीलार्थेऽपि भवन्तीति सूचनात् किम्वा अभिधानाच्छीलार्थतानुक्तावपि न क्षतिः निराकुरुतः शत्रूनित्यादिवाक्यं विधेयं ॥१॥

तौ खड्गमुषलप्रासचक्रवाणगदाकरौ। अकार्ष्टामायुधच्छायं रजःसन्तमसे रणे ॥२॥

ज०म० तौच। रणे रणभूमौ रजःसन्तमसे सङ्गतन्तमः सन्तमसं अव

समन्धेभ्यस्तमस इत्यच् रजसा सन्तमसं अस्मिन् इति रजः सन्त मसन्तस्मिन् रजसा क्ततान्धकारे तौ खरदूषणौ आयुधच्छाय मायुधवाङ्गल्यमकार्ष्टाम् क्ततवन्तौ आयुधानांच्छायेति छाया वाङ्गल्य इति नपुंसकत्वे ह्रस्वत्वं खड्गादीनामौणानान्द्वन्द्वैकवद्भाव ङ्कृत्वा पश्चात्तेन सहिता गदेति शाकपार्थिवादित्वात्सः अन्यथा स मुदायस्य जातिरप्राणिनामित्येकवद्भावेन नपुंसकलिङ्गता स्यात् वाणगदमिति खड्गमुषलप्रासचक्रवाणगदाः करे येषामिति समा से प्रहरणार्थेभ्य इत्यादिना करशब्दस्य परनिपातः॥ २॥

तावित्यादि। खरदूषणौ रणे युद्धे आयुधानां बहूनां छाया मकार्ष्टां क्ततवन्तौ रणपदं रणभूमिवाचकमित्यन्ये सम्यक्तमः सन्तमसं समवान्धात्तमस इति अः रजसा सन्तमसं यत्र रणे आ युधानां बाङ्गल्यात् छायाशब्दस्य नपुंसकत्वमभिधानात् कीदृशौ खड्गादयः करे ययोस्तौ अकार्ष्टामिति क्तञ्चांसि अजवदेति ञिः ॥२॥ भ०

अथ तीक्ष्णायसैर्व्वाणैरधिमर्म्म रघूत्तमौ। व्याधं व्याधममूढौ तौ यमसाच्चक्रतुर्द्विषौ॥ ३॥

अथ। अथैतस्मिन् संग्रामे रघूत्तमौ रामलक्ष्मणौ कर्तृभूतौ कर्म्मभूतौ द्विषाविति सत्सूद्विषेत्यादिना क्विप् यमसाचक्रतुः यमा धीनौ क्ततवन्तौ तदधीनवचन इति सातिः तीक्ष्णायसैर्वाणैः तीक्ष्ण मायसम्फलं येषामिति व्याधं व्याधं विद्ध्वा विद्ध्वा आभीक्ष्ण्ये णमुल् तच्च समानकर्त्तृकयोः पूर्व्वकाल इति वर्त्तते अभीक्ष्ण्ये द्वे भवत इति ज०म०

द्विर्व्वचनं अधिमर्म्मेति विभक्त्यर्थेऽव्ययीभाव अमूढौ सावधानौ रामलक्ष्मणौ मर्म्मवेधमेवाह॥ ३॥

भ॰ अथेत्यादि। तयोर्व्विक्रमानन्तरं रघूत्तमौ कर्तृभूतौ तीक्ष्णाय सैस्तीक्ष्णफलैर्व्वाणैरधिमर्म्म जीवितस्थाने व्याधं व्याधं विद्ध्वा विद्ध्वा तौ द्विषौ खरदूषणौ कर्म्मभूतौ यमसात् यमाधीनौ चक्रतुः रघूत्तमौ किम्भूतौ अमूढौ रणपण्डितौ किम्वा खरदूषणौ अमूढौ अस्त्रवर्षेऽप्यसम्भ्रान्तौ मर्म्मवेधे सावधानौ वा रणपण्डितावपि वा तीक्ष्णमायसमयोविकारः फलं यत्र मर्म्म विध्यतीति कारकार्थेऽव्ययीभावः व्याधंताडे इत्यस्मात् णम्वाभीक्ष्णे इति णम् आभीक्ष्ण्ये द्वित्वं लोकतः सिद्धं कात्स्न्यायत्योः सम्पद्यकादावित्यधीनत्वे चसात् किम्वा देयत्राचेति देयेऽर्थे चकारात् चसात् वा सुद्विषित्यादिना द्विषः क्विप्॥ ३॥

हतबन्धुर्जगामासौ ततः शूर्पणखा वनात्। पारेसमुद्रं लङ्कायां वसन्तं रावणं पतिं॥ ४॥

ज॰म॰ हत। असौ शूर्पणखा हतबन्धुः व्यापादितभ्रातृका सती ततोवनाद्दण्डकारण्यात्रावणम्पतिं प्रभुं शरणञ्जगाम गतवती पारेसमुद्रं समुद्रस्य पारइति पारेमध्येषष्ठ्यावेत्यव्ययीभावः तत्सन्नियोगेन पूर्व्वपदस्यैकारान्तत्वम्प्रासात्सप्तमी नाव्ययीभावादित्यभावःसमुद्रस्य पारे स्थितायां लङ्कायां वसन्तं रावणमिति॥ ४॥

भ॰ हतबन्धुरित्यादि। असौ शूर्पणखा हतबन्धुः सती परेण व्यापादितभ्रातृका सती ततोवनात् दण्डकारण्यात् रावणं पतिं प्रभुं जगाम पारेसमुद्रं समुद्रपारे स्थितायां वसन्तं पारेसमुद्रमित्य

व्ययीभाव एवञ्च निपातनात् चीप्सोर्व्वेति सप्तम्यामः प्रतीति पाठे रावणं प्रति अचीकृत्य जगाम॥ ४॥

संप्राप्य राक्षससभं चक्रन्द क्रोधविक्लवा। नामग्राहमरोदीत् सा भ्रातरौ रावणान्तिके॥ ५॥

सम्प्रा। सा शूर्पणखा राक्षससभं संप्राप्य ढौकित्वा राक्षसानां सभेति सभाराजेत्यादिना नपुंसकता चक्रन्द क्रन्दनकृतवती क्रोधविक्लवा क्रोधविवशा भ्रातरौ खरदूषणावरोदीत् रोदितवती नामग्राहन्नाम गृहीत्वा भ्रातरौ खरदूषणाविति नाम्ना दिशिग्रहोरिति णमुल् अत्र नामग्रहणविशिष्टाया रोदनक्रियाया व्याप्तुमिष्टत्वाद्रुदिः सकर्म्मकः रावणान्तिके रावणसमीपे सप्तम्यधिकरणे चेति चकाराद्दूरान्तिकार्थेभ्यइति सप्तमी तयोः किञ्जातमिति रावणेन पृष्टाह॥ ५॥ ज॰म॰

संप्राप्येत्यादि। सा शूर्पणखा राक्षससभं संप्राप्य चक्रन्द राक्षसानां सभा राक्षससभं क्लीवत्वमभिधानात् क्रोधेन विक्लवा व्याकुला सती भ्रातरौ खरदूषणौ नामग्राहं नाम गृहीत्वा रावणस्यान्तिके समीपे अरोदीत् रुदेर्ण्यां ण्यां रुदादिभ्यस्सिवेरितीम् पूर्व्वं क्रन्दनमुक्तं अत्र नामग्रहणमुक्तमिति भेदः अश्रुविमोचनमात्रे रुदिरकर्म्मकः शब्दयुक्तक्रन्दने तु सकर्म्मकः इति प्राञ्चः भ्रातरौ चक्रन्द आजुहाव क्रन्दिश्चाह्वाने नामग्राहमरोदीदित्यन्वय इति केचित् नामग्राहमिति नाम्नोग्रहणमभिधानात् किम्वा हा खर भ॰

दूषणेति नाम्नोग्राहेणाग्रहणं यन्नेति वा रोदनक्रियाया विशेषणं प्राहोग्रजन्तः ॥ ५ ॥

दण्डकामध्यवात्तां यौ वीर रक्षःप्रकाण्डकौ। नृभ्यां संख्येऽक्षपातां तौ सभृत्यौ भूमिवर्द्धनौ ॥ ६ ॥

ज०म० दण्ड। हे वीर दण्डकात् दण्डकारण्यसन्निवेशात् अध्यवात्ताम् अध्युषितवन्तौ वसनिवासइत्यस्मात्लुङ् हलन्तलक्षणा वृद्धिः सःस्येत्यादिना धातुसकारस्य तत्वम् झलोझलीति सिचोलोपः रक्षःप्रकाण्डकौ प्रशस्तौ राक्षसौ प्रशंसावचनैश्चेति सः ततः स्वार्थे कन् स्वार्थिकाश्च प्रकृतितोलिङ्गवचनान्यतिवर्त्तन्तइति नपुंसको न भवति अन्यथा रूढिशब्दाः प्रशंसावचना आविष्टलिङ्गत्वादन्यलिङ्गेऽपि जातिशब्दे स्वलिङ्गोपादानादेव समानाधिकरणाः स्युः यथा गोप्रकाण्डमिति तौ नृभ्याम्मनुष्याभ्यां सङ्ख्ये युद्धे भूमिवर्द्धनावक्षपाताम् क्षतौ कर्म्मणिलुङ् अचिण्वद्भावे रूपम् वर्द्धत इति वर्द्धनौ नन्द्यादिल्युटोबहुलमिति कर्त्तरि ल्युट् भूमेर्व्वर्द्धनाविति सः भस्मीकृतशरीरस्य भूमौलीयमानत्वात् सभृत्यौ नैकाकिना ॥ ६ ॥

भ० दण्डकामित्यादि। एवंप्रकारेणारोदीदित्यन्वयः वीरेति सोपालम्भसम्बोधनं यौ रक्षःप्रकाण्डकौ प्रशस्तराक्षसौ दण्डकामध्यवात्तां सभृत्यौ तौ नृभ्यां मनुष्याभ्यां संख्ये संग्रामे भूमिवर्द्धनौ अक्षपातां क्षञः कर्म्मणि टौ इगुङ्क्षतीति किलाम गुणः शवसञ्चितिवर्द्धन इति त्रिकाण्डशेषः अरण्ये दण्डकाशब्दः स्त्रीलिङ्गः

कार्य्योध्यायाः पुनरुपगमोद्दण्डकायां वने व इति भवभूतिः दण्ड कानिति पाठे दण्डकारण्यसन्निवेशानित्यर्थः केचित्तु दण्डकाशब्दः स्त्रीलिङ्गबहुवचनान्त एव इत्युक्त्वा दण्डका इति शसन्तं पठन्ति अध्यवात्तामिति अधिपूर्व्वाद्वसेर्ष्टीतां वांसिः सस्यार्द्धे इति सस्य तः अनिमृत्वात् श्रिः रक्षसां मध्ये प्रकाण्डौ प्रशस्तौ एकार्थत्वात् कर्म्मधारयोवा समासे विशेषणमपि परं स्यात् प्रशंसावचनैश्चेति परसूत्रं यद्यपि प्रकाण्डमुद्धतल्लजावित्यमरेणोक्तं दृश्यते च गो प्रकाण्डमित्यादावजहल्लिङ्गता तथापि कप्रत्यये सति स्वार्थिकाः प्रकृतितोलिङ्गवचनान्यतिवर्त्तन्तेऽपीति न्यायात् पुंस्त्वं वस्तुतस्तु पुंलिङ्गोऽपि प्रकाण्डशब्दोऽस्ति निगडाक्रीडनलप्रकाण्डकाण्डा इति पुनपुंसकवर्गे हेमचन्द्रः उद्घप्रकाण्डौ द्वौ प्रशंसायामिति हलायुधः भूमिं वर्द्धयत इति नन्द्यादित्वाद्दनः ॥ ६ ॥

विग्रहस्तव शक्रेण बृहस्पतिपुरोधसा। सार्द्धं कुमा रसेनान्या शून्यस्त्वासीति कोनयः ॥ ७ ॥

विग्र। बृहस्पतिः पुरोधा मन्त्री यस्य शक्रस्य तेन कार्य्येषु पुरा धीयत इति पुरोधाः पुरःपूर्व्वाद्धाञः सर्व्वधातुभ्य असुन् तथा कुमारः कार्त्तिकेयः सेनानीर्य्यस्य सेनान्नयतीति सत्सूद्विषेत्या दिना क्विप् तेन शक्रेण सह सार्द्धं तव विग्रह आसीत् इदानी स्त्वर्थनिपुणाभावात् शून्यस्त्वासि तासस्त्योर्लोप इति सकारलोपः सस्त्वात्कोनयः नय एव न भवतीत्यर्थः तदेव दर्शयन्नाह ॥ ७ ॥ ज०म०

भ॰ विग्रह इत्यादि। अक्षेण सार्द्धं तव विग्रहो विरोधस्तथापि त्वं शून्यः कार्य्याकार्य्यविचाररहित एवासि इति कोनयः न कापि नीतिस्तवेत्यर्थः किम्भूतेन वृहस्पतिपुरोधसा वृहतां देवानां गुरुत्वात्पतिः वृहस्पतिर्मनीषादित्वान्निपातः स पुरोधाः पुरोहितो यस्य कुमारः कार्त्तिकेयः सेनानीः सेनापतिर्यस्य सेनां नयतीति क्विप् कथाद्यनेकाच इति यत्वं लोपोऽव्यस्योरिति व्यस्तोःवौ स लोपः॥ ७॥

यद्यहं नाथ नायास्यं विनसा हतबान्धवा। नाभ्या-
स्यस्त्वमिदं सर्व्वं प्रमाद्यंश्चारदुर्व्वलः॥ ८॥

ज॰भ॰ यदी। विनसा विगता नासा यस्याः नासैव नासिकेति कोषा इति प्रस्त्वे रूपम् तस्या नसादेशस्य विधीयमानत्वात् अत्र सम्भव एव नास्ति विनसेति पाठान्तरम् तत्र विगता चासौ नासिका च विनासिका तत इत्थम्भूतलक्षणायान्तृतीयायां पद्दन्नोमास्हृत्यादिना नसादेशः विगतया नासिकयोपलक्षितेत्यर्थः विगता नासिका अस्या इति वज्रुव्रीहिणा व्याख्याने अज्नासिकेत्यादिना अज् नसादेशश्च प्राप्नुतः तस्य संज्ञाविषयत्वात् उपसर्गाच्चेत्यसंज्ञायां विधीयमानो न भवति वेर्ग्रोवक्तव्यइति ग्रादेशो वाधकः हे नाथ यद्यहं विनसा हतवान्धवा नायास्यन्नायाताभविष्यम् तदा तदिदं सर्व्वम्भ्रात्रोर्म्मधनासाछेदस्य नाभ्यास्यः न ज्ञातोऽभविष्यः क्रियातिपत्तौ लिङ् अज्ञाने कारणमाह प्रमाद्यन् विषयेषु प्रमादङ्कुर्व्वन् चारदुर्व्वलः चारहीनः चाराहि चक्षूराज्ञाः कार्य्याकार्य्यज्ञानाय लोके चरतीति चरः पचाद्यच् चर एव चारः प्रज्ञादित्वादण्॥ ८॥

यदीत्यादि। हे नाथ विनसा हतबान्धवा च सती यद्यहं नाया भ०
यं तदा त्वमिदं सर्व्वं पूर्व्वोक्तं नाप्स्यसः याभ्यां अर्थासम्भवे थीं
अप्राने हेतुमाह प्रमाद्यन् विषयेषु अनवधानतां गच्छन् यन्यो
प्रमादीति प्रमादित्वाद्दीर्घः प्रमादोऽनवधानता चारेण दुर्व्वलो
हीनः राजा चरैर्जगत्कृत्स्नं प्राप्नुयाल्लोकसम्मतैरिति हि शास्त्रं
विनसा इति विगता नासा नासिका यस्याः सा विनसा केचित्तु वि
गतया नासिकया उपलक्षिता विशेषणे तृतीया पादइन्तेति नसा
देश इत्याहुः बन्धुरेव बान्धवः चर एव चारः स्वार्थे ष्णः॥ ८॥

करिष्यमाणं विज्ञेयं कार्य्यं किन्नु कृतं परैः। अप
कारे कृतेऽप्यज्ञो विजिगीषुर्नवा भवान्॥ ९॥

करि। परैः शत्रुभिरपचयचिकीर्षया करिष्यमाणकार्य्यं वि ज०म०
ज्ञेयम् किन्तु कृतमेव यत्तदवश्यमेव विज्ञेयमित्यर्थः त्वम्पुनः परै
रपकृतोऽपि अज्ञोऽविदितस्वरूपः अतोविजिगीषुर्नवा भवान्
सुप्तो न राज्यं सम्भावयतीत्यर्थः॥ ९॥

करिष्यमाणमित्यादि। परैः शत्रुभिः करिष्यमाणमपि कार्य्यं भ०
विज्ञेयं ... र्विजिगीषुणा किन्नु कृतं तदवश्यमेव विज्ञेयमित्यर्थः
परैः कृतेऽपि अपकारे भवान् अज्ञः अतो भवान् नवा विजिगीषुः
जेर्गिःसनयोरिति गिः आनातीति ज्ञः कृगृज्ञाप्रीति कः उस्येची
त्यादिना आकारलोपः आदन्तात् ङेमेष्टसिद्धौ कृगृज्ञादत्वच
ज्ञायहणेन हनजनादित्यस्य उपपदस्यैव विषयः कृगृज्ञा इत्य
स्य तु त्वपपदेऽनुपपदे च विषय इति ज्ञापितं वाशब्द आक्षेपे
प्रश्ने वा॥ ९॥

वृतस्त्वं पात्रेसमितैः खट्वारूढः प्रमादवान्। पान
शौण्डः श्रियं नेता नात्यन्तीनत्वमुन्मनाः ॥ १० ॥

ज०म० वृतः। अत्यन्तगामिनीति अवारपारेत्यादिना खः तस्य भा
वोऽत्यन्तीनत्वं नैवात्यन्तीनामत्यन्तगामिनीं श्रियन्नेता न प्राप
णशीलः तृन्निति ताच्छीलिकस्तृण् नलोकेति षष्ठीप्रतिषेधः यद्यपि
महोदयं राज्यमाप्तवानसि तथापि न चिरकालमित्यर्थः यत
स्त्वमुन्मनाः भ्रान्तचित्तः यतः पानशौण्डः पाने प्रसक्तः सप्तमी
शौण्डैरिति सः अतएव प्रमादवान् अतोऽपि खट्वारूढः उत्पथप्र
स्थितः खट्वाक्षेप इति द्वितीया सः तत एव पात्रेसमितैः भोजन
एव सन्निहितैः अनुजीविभिर्वृतः पात्रेसमितादयश्चेति क्षेपे सः
॥ १० ॥

भ० वृतइत्यादि। त्वं श्रियं आत्यन्तीनत्वं अत्यन्तगामित्वं न नेता न
प्रापयिष्यसि नीञोद्विकर्म्मकात् तृण् ढघेकत्यचेत्यादौ शीलार्थे तृ
णवर्जनात् न षी अत्यन्तशब्दात् ढघेकादिति तद्गामिन्यर्थे णीनः
तत्वेत्वजात्याख्यइतिपुम्वत् हेतुमाह पात्रेसमितैर्भोजनपात्र एव
समितैः सन्निहितैः कार्य्यान्तराक्षमैरनुजीविभिर्वृतोवेष्टितः अत्रा
क्षेपे समासो विभक्त्यलोपश्चाभिधानात् खट्वारूढः विपथप्रस्थितः
क्तेन क्षेपे खट्वाया द्वितीया तत्पुरुष इति परे स्मृते समासे सति
मण्डपादिवत् स्वभावादर्थान्तरे वृत्तिः प्रमादवान् अनवधान
तायुक्तः यतः पानशौण्डः पाने प्रसक्तः अतएव उन्मना उद्भ्रा
न्तचित्तः ॥ १० ॥

अध्वरेष्वग्निचित्वत्सु सोमसुत्वत आश्रमान्। अत्तुं महेन्द्रियं भागमैति दुश्च्यवनोऽधुना॥११॥

अन्व। त्वय्येवम्भूतेऽधुना दुश्च्यवन इन्द्रः आश्रमानैति आग ज॰म च्छति आङ्पूर्व्वस्येणः एत्येधत्यूट्स्विति वृद्धिः सोमसुत्वतः सोमं सुनोतीति सोमेसुञ इति क्विप् सोमसुतः सन्ति येष्वाश्रमेष्विति मतुप् तयो मत्वर्थ इति भत्वे तकारस्य जस्त्वन्न भवति झयइति मतोर्व्वत्वम् किमर्थमैतीत्याह अत्तुभक्षयितुमहेन्द्रियभागं महे न्द्रोदेवता अस्येति महेन्द्राद्घाणौ चेति घः क अध्वरेषु यज्ञेषु अग्निचित्वत्सु अग्निश्चितवन्तोऽग्निचितः आहिताग्नयः अग्नौचेरिति क्विप् ते सन्ति येष्विति पूर्व्ववन्मतुप्॥११॥

अध्वरेष्वित्यादि। तवैव प्रमादात् अधुना इदानीं दुश्च्यवन भ॰ इन्द्रः अध्वरेषु यज्ञेषु महेन्द्रियं महेन्द्रदैवतं भागं अत्तुं भक्षयि त्तुं आश्रमानैति आगच्छति स भागोराक्षसग्रास्यएवासीदिति भावः कीदृशेषु अग्निचित्वत्सु अग्निं चितवान् अग्निचिन्मुनिः चास्तु सिति चे.क्विप् ह्रस्वस्यतनृपिति ततोऽस्त्यर्थे मोऽन्मझपाइतुः मदं तमाविति पदत्वनिषेधात् न षपोऽवेजव कीदृशान् सोमसुत्वतः सोमं सुतवान् सोमसुत्यजमानः तद्युक्तान् पूर्व्ववत् क्विवादि सो मोलतासवनं सन्धानं महेन्द्रोदेवता अस्येति विकारसंघेत्यादि ना इयः॥११॥

आमिक्षीयं दधि क्षीरं पुरोडाश्यं तथौषधं। हविर्है यङ्गवीनञ्च नाप्युपघ्नन्ति राक्षसाः॥१२॥

ज॰म॰ आमि। दध्ना सहितं शृतं पय आमिक्षा तस्मै हितमामिक्षीयं विभाषाहविरपूपादिभ्य इति छयतो दधि च क्षीरञ्चेति विभाषा वृक्षेत्यादिना व्यञ्जनत्वादेकवद्भावः पुरोडाशाय हितमौषधनी वारतण्डुलादि पुरोडाशमपूपादित्वाद्यत् ओषधिरेवौषधम् ओषधेरजाताविति अण् तण्डुलानामजातित्वात् स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्त इति नपुंसकलिङ्गता हविः हूयत इति हविः अर्चिशुचीत्यौणादिक इस् हैयङ्गवीनं घृतं ह्योगोदोहस्य विकार इत्यर्थे हैयङ्गवीनसंज्ञायामिति निपातनात् खञ् ह्यियं स्यादेशश्च तानि नाप्युपयन्ति राक्षसाः त्वय्युदासीने सति इदानीन्त्वर्थ्यप्रदर्शनेन प्रोत्साहयितुमाह ॥१२॥

भ॰ आमिक्षीयमित्यादि। अधुना राक्षसा अपि एतानि वस्तूनि न उपयन्ति अपिशब्दः पूर्व्वापेक्षया कानि आमिक्षायै हितं दधि दुग्धञ्च व्यञ्जनत्वे समाहार इति परः स्वमतेऽभिधानात् आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः हितार्थे ईयः तथा पुरोडाशाय हितं औषधं नीवारतण्डुलादि पुरोदश्यते इति पुरोडाशो ऽन्नविकारः पिष्टकादिः निपातनात् ततो हितार्थे यः ओषधिशब्दात् स्वार्थे ष्णः औषधं क्वचित् स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते इति क्लीवत्वं हविर्हव्यञ्च ऊदाने चासुविसितीस् ह्योगोदोहस्य विकारो हैयङ्गवीनं निपातनात् तत्तु हैयङ्गवीनं यत् ह्योगोदोहोद्भवं घृतमित्यमरः ॥१२॥

युवजानिर्धनुष्पाणिर्भूमिष्ठः खविचारिणः
यशङ्कुशो हन्ति कालकल्पशिलीमुखः ॥१३॥

पुव। युवतिः यौवनवती जाया यस्य युवजानिः जायाया निङ् ज०म०
वचिलोपः स्त्रियाःपुंवदिति पुंवद्भावात् स्त्रीप्रत्ययो निवर्त्तते धनु
ष्पाणिः पाणौ धनुर्य्यस्य प्रहरणेत्यादिना परनिपातः भूमिष्ठः
भूमौ तिष्ठतीति भूमिष्ठः नाकाशचरः सुपिस्थ इति कः अम्बाम्बे
त्यादिना षत्वम् कालकल्पशिलीमुखः मृत्युतुल्यशरः रामो राच
सान् हन्ति खविचारिणः आकाशचरणशीलान् सुप्यजाताविति
णिनिः॥ १३॥

युवजानिरित्यादि। भूमिष्ठोऽपि रामः खविचारिणोऽपि यस्य भ०
दुष्टो राक्षसान् हन्ति भूमौतिष्ठतीति सुपिस्थ इति कः षत्वं मनी
षादित्वात् खे आकाशे विचरितुं शीलं येषां ते तथा सुबन्तोपपदे
ताच्छील्येणिनिति परः स्वमते खे विचरन्तीति ग्रहादित्वाणिन् य
स्माद्दृशङ्ग्नीति क्विप्कीदृशो रामो युवजानिः युवती जाया यस्य
स तथा बहुव्रीहौ जायाया इङ्जानस्येति परः स्वमते जाया
समानार्थो जानिशब्दोऽस्ति जनी सीमन्तिनीवध्वोरित्यनुशास
नात् जनीशब्दस्य स्वार्थिकचण्यन्तस्य जानिरिति रूपम्वा पुम्वत्
स्त्युक्तपुंस्क इति पुम्वद्भावः धनुः पाणौ यस्य स तथा षत्वविधानं
गवाचञ्जालैरित्यत्र व्याख्यातं ईषदूनः कालः कालकल्पोयमतु
ल्यइत्य ःतादृशः शिलीमुखोवाणो यस्य स तथा त्यादेस्तोनेरति
कल्पः॥ १३॥

मांसान्योष्ठावलोप्यानि साधनीयानि देवताः। श्र
श्नन्ति रामाद्रक्षांसि बिभ्यत्यश्नुवते दिशः॥ १४॥

मांसा। ओष्ठावलोप्यानि ओष्ठाभ्याञ्छेदार्हाणि शक्यानि ज०म०
वा अर्हार्थे शक्यार्थे वा कृत्यः कृत्यैरधिकार्थवचन इति सः।

साधनीयानि यज्ञस्य साधनाय हितानि तस्मै हितमिति छः साव नीयानीति पाठान्तरम् तत्र सवनं स्नानं तद्योगात्स्नानकोऽपि तथोच्यते तत्र भवः सावनो यज्ञः तस्मै हितानीति छः तानि मांसानि देवता अश्नन्ति भुञ्जते न राक्षसाः रक्षांसि किन्तु रामाद्बिभ्यति वानपुंसकस्येति शतुर्नुमभावपक्षे रूपं दिशोऽश्नुवते व्याप्नुवन्ति ॥ १४ ॥

भ० मांसानीत्यादि। इदानीं देवता मांसानि अश्नन्ति रक्षांसि तु रामाद्बिभ्यति दिशोऽश्नुवते व्याप्नुवन्ति पलायन्त इत्यर्थः कीदृशानि मांसानि श्रोष्ठावलोप्यानि छेत्तुं शक्यानि लुपृछेदने तेभ्याः शक्यार्थे इति शक्यार्थे घ्यण् साधनीयानि स्वर्गादेः साधनाय यज्ञाय हितानि सुरसतायाः साधनं घृतादि तेन संस्कृतानि वा अश्नन्तीति अशभोजने श्नाद्योरित्यालोपः बिभ्यतीति ञिभीलि भीत्यां शतृः श्लादौरेद्विः द्वेः शतुर्नुन् शाविति पक्षे नुमोऽभावः अन्यन्तमिति केचित् तदा अन्तोऽदेरित्यत् अशूङ्व्याप्तिसंघात्योः श्नुश्नोरित्युव् मान्तोऽदनतः ॥ १४ ॥

कुरु बुद्धिं कुशाग्रीयामनुकामीनतां त्यज। लक्ष्मीं परम्परीणां त्वं पुत्रपौत्रीणतां नय ॥ १५ ॥

ज०म० कुरु। कुशाग्रीयाकुशाग्रमिव सूक्ष्मां कुशाग्राच्छ इति इवार्थे छः स्थूलबुद्धिर्माभूदित्यर्थः अनुकामीनतान्त्यज यथेष्टगामिता न्त्यज अवारपारेत्यादिना खः परम्परीणाम्परांश्चापरांश्च अनुभवतीत्यर्थे परापरशब्दात् परोवरेत्यादिना खः परादेशश्च

तां लक्ष्मीङ्कमायातान्त्वम्पुत्रपौत्रीणताम्नय पुत्रांश्च पौत्रांश्चानु भवतीति खः तस्य भावः पुत्रपौत्रानुगामिनीं कुर्वित्यर्थः ॥ १५ ॥

कुर्वित्यादि। त्वं बुद्धिं कुशाग्रीयां कुशाग्रमिव सूक्ष्मां कुरु वि भ० कारसहेति कुशाग्रादिवार्थे ईयः अनुकामीनतां कामस्य अभि लाषस्य अनु पश्चाद्गामितां यथेष्टाचरणं त्यज अनुकामात्तद्गा मिन्यर्थे ढघेकादितीनः परम्परीणां क्रमादायातां लक्ष्मीं पुत्र पौत्रीणतां पुत्रपौत्राधीनतां नय प्रापय परश्च परतरश्च इति द्वन्द्वे परम्परादेशो निपातनात् ततस्तदनुभवतीत्यर्थे पूर्व्वेण ईनः ॥ १५ ॥

सहायवन्त उद्युक्ता बहवोनिपुणाश्च यां। श्रियमा शासते लोलां तां हस्तेकृत्य मास्वसीः ॥ १६ ॥

सहा। याश्च श्रियन्त्वदीयां शौर्य्योपात्तां सहायवन्तः ससहा जं०म० या उद्युक्ता उत्साहवन्तो निपुणाः कुशलाश्चाशासते इच्छन्ति आङःशासुइच्छायामित्यादादिकस्यात्मनेपदिनो रूपम् आत्म नेपदेष्वनत इत्यदादेशः तां हस्तेकृत्य स्वीकृत्य मास्वसीः आश्वाश्यगाकार्षीः चञ्चलत्वात् यदाह लोलामिति क्षणक्षण श्वसजागृणीति वृद्धिप्रतिषेधः इटईटीति सिचोलोपः नित्यं हस्ते पाणाविति गतिसंज्ञायां समासे ल्यवादेशः तां लोलतान्द र्शयन्नाह ॥ १६ ॥

सहायवन्तइत्यादि। सहायवन्तः प्रशस्तसहाययुक्ता उद्यु भ० क्ता उद्योगिनो बहवोनिपुणाः कर्म्मकुशला यां श्रियं आशासते

इत्यन्वितां श्रियं वशीकृत्य स्वीकृत्य मासवीः स्वयार्थं माकार्षीः यतोऽसौ एवं प्रबला प्राङ्ःमासईकाथं अहादिरात्मने पदौ इतिशब्दः प्रत्ययान्तप्रतिरूपकोऽव्ययः स्वीकारे वर्त्तते इत्ये पार्थेप्राध्वमित्यादिना समासः ब्यादनञ्ःक्तोयपे प्राङ्ःमास स्वादिः इमादेः सेम इत्यादौ अयवर्ज्जनान्न ञिः॥ १६॥

लक्ष्मीः पुंयोगमाशंसुः कुलटेव कुतूहलात्। अन्तिकेऽपि स्थिता पत्युश्छलेनान्यं निरीक्षते॥ १७॥

ज०म० लक्ष्मीः। लयैवं न मन्तव्यम् अन्यैः प्रार्थ्यमानापि न मां परित्यजतीति यतः छलेन व्याजेन अन्यन्निरीक्षते किमर्थं पुंयोगमाशंसुः अभिलषन्ती सनाशंसभिक्षउः कुतूहलात् कोऽस्य विशेष इति स्नेहादन्तिके अदूरेऽपि स्थिता पत्युः दूरान्तिकार्थैरित्यादिना षष्ठी कुलटेव बन्धकीव प्रकन्थ्यादिषु दर्शनात्पररूपम् युवजानिरित्युक्तत्व योषित्प्रलोभनायाह॥ १७॥

भ० लक्ष्मीरित्यादि। लोलतां दर्शयति लक्ष्मीः पत्युरन्तिके स्थिता ऽपि सुतरां दूरस्था कुतूहलात् अन्यं पुरुषं छलेन व्याजेन निरीक्षते केनापि छिद्रेण गन्तुमित्यर्थः यतः पुंयोगमाशंसुः अभिलषन्ती एकेन पुंसा तृप्तिर्नास्तीत्यर्थः अतएव कुलटा इव अटतीव कुलान्यटति पचादित्वादच् शकन्ध्वादित्वादकारलोपः सनभिक्षाशंसउरिति आङ्पूर्व्वशंसेरुः॥ १७॥

योषिद्वृन्दारिका तस्य दयिता हंसनादिनी। दूर्व्वाकाण्डमिव श्यामा न्यग्रोधपरिमण्डला॥ १८॥

योषित। योषिद्वार्ता वृन्दारिकाचेति वृन्दारकैत्यादिना स॰म॰ सः रूपेण प्रियेत्याह दयिता प्रिया प्रशंसने कारणमाह हंस इव गन्तुं शीलं यस्याः कर्त्तर्युपमान इति णिनिः दूर्व्वाकाण्डमि व श्यामा दूर्व्वासम्बन्धादिव श्यामा न्यग्रोधपरिमण्डला उपमा नानीत्यादिना सः॥ १८॥

योषिद्वृन्दारिकेत्यादि। प्रलोभनार्थमिदमुच्यते तस्य रामि भ॰ स्य दयिता प्रिया योषिद्वृन्दारिका योषितां स्त्रीणां मध्ये वृन्दा रका रूपवती हंसवन्नदतीति हंसनादिनी कर्त्तर्युपपदाणिनिरिति परः स्वमते यद्यादित्वात् हंसनादिनीशब्दः पारिभाषिकोऽप्यस्ति यथा गत्या नितम्बिनी या तु हंसशीलानुगामिनी। मत्तकोकिलशब्दा सा ज्ञेया हंसनादिनी। दूर्व्वाकाण्डमिव तनुत्वा कृशाङ्गी त्यर्थः दूर्व्वाकाण्डवत् श्यामवर्णेति व्याख्यानं पुराणविरुद्धं तत्र गौरत्वकथनात् श्यामान्यग्रोधपरिमण्डलाशब्दौ रूढौ यथा शीते सुखोष्णसर्व्वाङ्गी ग्रीष्मे तु सुखशीतला। तप्तकाञ्चनवर्णाभा सा स्त्रीश्यामेति कथ्यते। स्तनौ सुकठिनौ यस्या नितम्बे च विशालता। मध्ये क्षीणा भवेद्या सा न्यग्रोधपरिमण्डला अग्निपुराणे स्त्रीपुरुषलक्षणाध्याये न्यग्रोधपरिमण्डललक्षणमुक्तं यथा प्रसारितभुजस्येह मध्यभागद्वयान्तरं। उच्छ्रायेण समं यस्य न्यग्रोधपरिमण्डलइति केचित्तु दूर्व्वाकाण्डमिव न्यग्रोधपरिमण्डला न्यग् रुणद्धीति न्यग्रोधं अधःप्रसृतं परितोमण्डलं नितम्बमण्डलरूपं यस्याः दूर्व्वाकाण्डमपि अधः प्रसरति नोपरिष्टादित्याहुः अन्ये तु न्यग्रोधस्य वटस्य इव परिमण्डलं परिणाहो नितम्बभागे यस्याः एकदेशधर्म्मेणापि समुदायोपमानतादर्शनादित्याहुः

श्यामा अप्रसूतेति केचित् अप्रसूताङ्गनायाञ्च श्यामा सोमलतौषधेः। चित्रतारिवागुन्द्रा, निशाकृष्णा प्रियङ्ग्विति विश्वः ॥१८॥

नास्यं पश्यति यस्तस्या निंस्ते दन्तच्छदं न वा। संशृणोति न चोक्तानि मिथ्याऽसौ विहितेन्द्रियः ॥१९॥

ज०म० नास्य। तस्या आस्यमुखं यो न पश्यति दन्तच्छदं ओष्ठञ्छाद्यते अनेनेति घः छादेर्घेद्व्युपसर्गस्येति ह्रस्व दन्तानाञ्छदंनवा निंस्ते न चुम्बति णिसिचुम्बन इत्यादादिकआत्मनेपदी इदितो नुम् धातोः उक्तानि उदितानि न संशृणोति समोगमित्यादिना तङ् न भवति अकर्मकादित्यधिकारात् मिथ्यासौ विहितेन्द्रियः वृथैव तस्य वेधसा विहितानि इन्द्रियाणि चक्षुरादीनि ॥१९॥

भ० नास्यमित्यादि। यस्तस्या आस्यं मुखं न पश्यति नवा दन्तच्छदं ओष्ठं निंस्ते चुम्बति निषिलङ् चुम्बने नवा तस्या उक्तानि भाषितानि संशृणोति असौ पुरुषः विहितेन्द्रियो विधात्रा कृतेन्द्रियोमिथ्या प्रयोजनाभावात् तस्य चक्षुरादीनि मिथ्येति भावः वृथेति क्वचित्पाठः वृथाविहितानि इन्द्रियाणि यस्य स तथा दन्ताश्छाद्यन्तेऽनेनेति छादेस्त्वमन्कीसघेस्व इति ह्रस्वः घेस्त्वइत्युक्तेर्नान्यन्येतिकृतेति संज्ञायां घप्रत्ययोपाद्यः ओष्ठाधरौ तु रदनच्छदावित्यमरः ॥१९॥

साराऽसाविन्द्रियार्थानां यस्यासौ तस्य नन्दथुः। तस्ये कान्तान्तरैः सार्द्धं मन्येऽहं धिङ्गिमञ्जयुं ॥२०॥

सारो। इन्द्रियार्थानामध्ये सारोऽसौ दयिता इन्द्रियार्थः रूपाद्यतिशययोगात् यस्यासौ संपद्यते तस्य नन्दथुः आनन्दश्चेतसः तल्पे शयनीये यस्य कान्तान्तरैरन्यस्त्रीभिः सार्द्धन्निमज्जथुं शयनं सर्व्वत्र द्विती ऽयुच् तस्य धिक् कुत्सितमहं मन्ये उभयत्र सर्व्वतसोरित्यादिना धिग्योगे द्वितीया तया सार्द्धं शोभनमित्यर्थादुक्तम्भवति ॥२०॥ ज०म०

सार इत्यादि। इन्द्रियस्य अर्था विषयाः स्रक्चन्दनवनितादयस्तेषां मध्ये असौ सीतैव सारः श्रेष्ठा यस्य असौ सीता विद्यते तस्यैव नन्दथुरानन्दः कान्तान्तरैः सार्द्धं तल्पे शय्यायां निमज्जथुं निमज्जनं शयनं धिक् तयैव सार्द्धं युज्यत इत्यहं मन्ये उभयत्र द्विती ऽथुर्भावे धिक्समयेति द्वितीया ॥ २० ॥ भ०

न तं पश्यामि यस्यासौ भवेन्नोद्वेजया मतेः। त्रैलोक्येनापि विन्दस्त्वं तां क्रीत्वा सुकृती भव ॥ २१ ॥

नतम्। सर्व्वथा न तम्पश्यामि जानामि जगति यस्य सम्बन्धिन्याः मतेश्चेतसः उद्वेजया उत्कम्पिकाऽसौ न भवेत् चित्तक्षोभजनिकेत्यर्थः उद्वेजयतीति अनुपसर्गाल्लिम्पेति कर्त्तरि शः कृद्योगे कर्म्मणि षष्ठी तस्मात् त्रैलोक्येनापि त्रयस्त्रैते लोकाश्चेति त्रिलोकाः तएव त्रैलोक्यञ्चातुर्व्वर्ण्यादित्वात्स्वार्थे ष्यञ् स्वार्थिका अतिवर्त्तन्त इति नपुंसकत्वम् तेनापि ताङ्क्रीत्वा लब्ध्वा विन्दस्त्वं सुकृती भव पण्डितो भव श्लाघ्यो वा भव पाण्डित्यमस्य त्रैलोक्यमात्रे ज०म०

चापि स्त्रीरत्नभूता जम्भमिति विन्दतीति तेनैव सूत्रेण मः अन्या अपि स्त्रियः सन्तीति चेदाह ॥ २१ ॥

भ० मतमित्यादि। अयी सीता यस्य मतेरदेऽस्या क्षोभजनिका न भवेत् तं पुरुषं नाहं पश्यामि त्रैलोक्येनापि तां लब्ध्वा त्वं त्रिलोक्या लाभवान् सुकृती च भव सुकृती पुण्यवान् शोभनः कृती पण्डितो वा तल्लाभादेव तव लाभवत्त्वं पुण्यवत्त्वं पाण्डित्यञ्च सफलं अन्यथा निष्फलमिति भावः रुजार्थानामिति ष्ठः स इति परः समतेश्चतिपातीत्यादिना अगेरित्यस्य नञा निर्दिष्टत्वात् व्यभिचारात् मः विद्वत्पक्षे लाभे पूर्व्वेण मः मूर्च्छादित्वान्नुण् त्रिलोक्येव त्रैलोक्यं स्वार्थे ष्यः स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्तेऽपीति वाक्यात् क्लीवत्वं ॥ २१ ॥

नैवेन्द्राणी न रुद्राणी न मनावी न रोहिणी। वरुणानी न चाग्नायी तस्याः सीमन्तिनी समा ॥ २२ ॥

जयम० नैव। तस्यास्तु सीतायाः तुल्यार्थैरतुलोपमाभ्यामिति षष्ठी न काचित्सीमन्तिनी स्त्री तुल्या समा सीमन्तः केशेष्विति पररूपत्वम् अन्यत्र सीमान्तः स विद्यते यस्य इति इनिः इन्द्राणी इन्द्रभार्य्या न समर्थ किम्पुनरन्या तथा रुद्राणी रुद्रभार्य्या वरुणानी वरुणभार्य्या इन्द्रवरुणेत्यादिना आनुक् मनावी मनुभार्य्या मनो रौवेत्यौकारः अग्नायी अग्निभार्य्या वृषाकप्यग्निकुसितकुसिदेत्यादिना ऐरिति सर्व्वत्र पुंयोगादाख्यायामिति ङीष् रोहिणी चन्द्रभार्य्या रोहितशब्दात् वर्णादनुदात्तेत्यादिना ङीप् नकारस्य

वरुणानी न आग्नायीत्यत्र प्रतिषेध एकः पूर्व्वेण योऽन्यः द्वितीयः परेणेति नचाग्नायीति पाठान्तरम् ॥ २१ ॥

नैवेत्यादि । काऽपि सीमन्तिनी स्त्री तस्याः सीतायाः समा तुल्या न सर्व्वत्र नञ्सम्बन्धादिह नञ्सम्बन्ध उपपद्यते इन्द्राणी इन्द्रस्य पत्नी तस्याः समा न एव निश्चये अत्र इन्द्रवरुणभवेत्यादिना पत्यार्थे ङीप् आनुक् च रुद्राणी रुद्रस्य पत्नी पार्व्वती समा न पूर्व्ववत् ङीप् आनुक् च मनावी मनोः पत्नी शतरूपा न समा वारीव स्त्रीत्यादिना निपातः रोहिणी चन्द्रस्य भार्य्या न समा पूर्व्वेण निपातः वरुणानी वरुणस्य पत्नी न समा अत्र इन्द्रेतीप् आनुक् च अग्नायी अग्नेः पत्नी न समा वृषाकप्यग्नीतीप् ऐङ् च केचित्तु इन्द्राणी न समा कीदृशी प्रशस्तसीमन्तयुक्ता एवं रुद्राण्यादावित्याहुः सीमन्तः कथ्यते स्त्रीणां केशमध्ये च पद्धतिरिति हलायुधः मनीषादित्वात्साधुः तस्या इति समार्थैरित्यादिना षष्ठी ॥ २२ ॥ भ०

प्रत्यूचे राक्षसेन्द्रस्तामाश्वसिहि बिभेषि किं । त्यज
नक्तञ्चरि क्षोभं वाचाटे रावणोऽस्म्यहं ॥ २३ ॥

प्रत्यू । राक्षसेन्द्रो रावणः राक्षसीं प्रत्यूचे प्रतिवचनमुक्तवान् आश्वसिहि श्वसत्यत्र रुदादीत्यादिना इट् बिभेषि किं किमर्थं त्रापयस्यत् हे नक्तञ्चरि मद्विषये क्षोभं रोषं त्यज वाचाटे बहुभाषिणि आलजाटचौ बहुभाषिणि यस्माद्रावणोऽहम् अनेनात्मोत्कर्षमावेदयति तमेव स्फुटयन्नाह ॥ २३ ॥ ज०म०

प्रत्यूचेरित्यादि । स राक्षसेन्द्रो रावणः तां शूर्पणखां प्रत्यूचे भ०

प्रत्युत्तरमाह आश्वसिहि खेदं त्यज रक्षोऽयमिति इमम् किं बिभेषि तापसकात् हे नक्तञ्चरि क्षोभं दुःखं मयि रोषं वा त्यज हे वाचाटेव ऊनिन्द्यभाषणशीले हि यस्मात् अहं रावणः प्रसिद्धनामानुवादात् उत्कर्षः सूचितः वाचोऽस्त्यर्थे वोग्मिवाचाटवाचालाइति निपातः वाचाटोबहुगर्ह्यवागित्यमरः रवणस्य विश्रवसोऽपत्यं रावणः विश्रवसौ विश्रवणरवणावपत्यण्णे इति परः स्वमते सर्व्वभूतानि रावयति आक्रन्दयति रावणः नन्द्यादित्वाद्दनः किम्वा हिंसनधर्म्मत्वात् रावणः हिंसार्थरुधातोरनटि रवणं ततः अस्य शीलं इत्यर्थे विकारसंघेत्यादिना ण्णः अत्रापि वा नन्द्यादित्वाद्दनः ततः स्वार्थे ण्णः रुलध्वनौ रुङ्वधे गत्यां ॥ २३ ॥

मामुपास्त दिदृक्षावान् याष्टीकव्याहतोहरिः। आशालाभोन्मुखोदूरात् काचेणानादरेक्षितः ॥ २४ ॥

ज०म० मामु। मामुपास्त सेवितवान् हरिरिन्द्रः दिदृक्षावान् द्रष्टुमिच्छावान् आत्मदर्शनेच्छावानित्यर्थः दूरादेव याष्टिकैः वेत्रग्राहिभिर्व्याहतोऽपसारितः कर्त्तृकरणेकृतेति सः यष्टिः प्रहरणमेषामिति शक्तियष्ट्योरीकक् आशालाभे किमभिधास्यतीत्युत्सुकः उन्मुखः तत्परः सप्तमीति योगविभागात्सः अनादरेक्षितः अवज्ञाविलोकितः काचेण कुदृष्ट्या कापथ्यक्षयोरिति कुशब्दस्य कादेशः यदि तत्पुरुष इत्यनुवर्त्तते तदा कुत्सितमक्षमिति विग्रहः अक्षशब्दस्येन्द्रियसामान्याभिधायित्वेऽपि ईक्षितशब्दोपपदत्वाच्चक्षुषि वर्त्तते अथ तत्पुरुषइति नानुवर्त्तते सामान्ये

नादेशस्तदा कुत्सितमचि यस्येति वज्रश्रीशै वज्रश्रीशेषसक्थ्यक्ष्णो रिति षच् काचेण मयेत्यर्थः॥ २४॥

मामित्यादि। हरिरिन्द्रो मामुपास्त सेवितवान् याष्टीकः रूपं भ॰ यष्ट्या प्रहरतीति याष्टीकः द्वारि नियुक्तः यष्टिप्रहारकपुरुषः ठगे काद्दिति ष्णीकः तेन व्याहतस्ताडितोऽपि दिदृक्षावान् द्रष्टुं इच्छा वान् मदाज्ञाया लाभनिमित्तं उन्मुखः ऊर्द्ध्वमुखः दूरात्समीपग मनायोग्यत्वात् मया तु काचेण कुदृष्ट्या अनादरेणावज्ञया ईक्षि तः अवलोकितः कुत्सितमक्षं काक्षं इन्द्रियसामान्यवाचिनोऽक्ष शब्दस्यात्र प्रकरणाच्चक्षुरेवार्थः कुत्सितमचि यस्येति वा सक्थ्यक्ष्णः षः स्वाङ्गे इति षः काचेदति कोःकादेशः तत्र अक्षद्दति इन्द्रिय वाचकस्यादन्तस्य कृतसमासान्तस्य अक्षिशब्दस्य च ग्रहणं ईष दक्षं काक्षं इति वररुचिः तदा कटाक्षे तात्पर्य्यं कोरीषदर्थे इति कादेशः॥ २४॥

विरुग्णोदग्रधाराग्रः कुलिशोमम वक्षसि। अभिन्नं शतधात्मानं मन्यते बलिनं बली॥ २५॥

विरु। विरुग्णानि अवसन्नानि कुण्ठितानि उदग्राणि महान्ति अ॰म॰ धाराग्राणि यस्य स कुलिशोवज्रः मम वक्षसि पतितः सन् बली आत्मानमभिन्नं शतधा शतप्रकारं सङ्ख्यायाविधार्थे धा बलिन मन्यते अहो बलवानहम् येन शतधा भग्न इति तस्य देवतारूप त्वात् बलमस्त्येव आत्मानं बलिनं मन्यतइवेत्युत्प्रेक्षा॥ २५॥

भ० विस्मय इत्यादि कुलिशमिव आत्मानं वज्रिणं मन्यते कुत इत्याह मम वचसि अतधा अतप्रकारेण अभिन्नं केवलं विस्मयानि भग्नानि उदयानि अहानि धाराणि यस्य तादृशः वज्री वस्तु तोवलवाणम मदवशमक्त्वादेव वलं जानाति मस्तुरवसूचविदा रणादपीदमेव तस्याधिकमुत्कर्षस्थानमित्यर्थः तस्य वताकृपत्वा मननमस्येव उत्प्रेक्षामात्रं वा मन्यत इव इत्यर्थः कृञायाधाप् प्रकारे ॥२५॥

कृत्वा सल्लाद्रुमालानमस्मैरावतं गजं। बन्धनेऽनुपयोगित्वान्नतं तृणवदत्यजं ॥२६॥

ज०भ० कृला। एभ्यानीयतइत्यालानं अधिकरणे ल्युट् विभाषा की यतइत्यालम् कल्पद्रुमा आलानानि यस्यैरावतास्य गजस्त कृत्वा नतमनमुखन्तृणमिव मत्वा सोऽहमत्यजम् त्यक्तवान् बन्धनेऽनुपयोगित्वात् प्रयोजनाभावात् ॥२६॥

भ० कृत्वेत्यादि। कल्पद्रुम एवालानं बन्धनस्तम्भो यस्य तथाभूतं ऐरावतं गजं कृत्वा नतं नम्रं तं अहं तृणवत् अत्यजं अथवा तं गजं तृणवत् न अत्यजं अपि तु अत्यजमेवेति शिरश्चालने नञ् कुत इत्याह बन्धनेऽनुपयोगित्वात् स्वयमेव वशीभूतत्वात् अनुपादेयत्वाद्वा आलीयतेऽस्मिन्नित्यालानं आधारेऽनट् सिद्धोऽयं स्मोक्तोऽवलिनिलथस्तुवा इति पक्षे क्त इरावान् समुद्रः तत्र जात इति ढयेकादिति ष्यः ॥२६॥

आदेशोपुरुषिकां पश्य मम सङ्गलकान्तिभिः। ध्वस्तान्धकारेऽपि पुरे पूर्णेन्दोः सन्निधिः सदा ॥२७॥

आहो। अहोपुरुषस्य भावः मनोज्ञादित्वाद्वुञ् आहोपुरुषिका कार्य्यसिद्धावपि तत्साधने दृप्तिः तांमम शूर्पणखे पश्य सद्रत्नकान्तिभिः ध्वस्तान्धकारेऽपि पुरे पूर्णेन्दोः पूर्णचन्द्रस्य सन्निधिः सदा. सन्निधानस्य पुनस्तेन कृत्यं रत्नप्रभाभिरेव तत्कृत्यस्य कृतत्वात् ॥ २७ ॥ ज०म०

आहो इत्यादि। ममाहोपुरुषिकां पश्य सद्रत्नकान्तिभिः सद्रत्नानां प्रभाभिर्ध्वस्तान्धकारे नाशितध्वान्तेऽपि मत्पुरे सदा पूर्णेन्दोः सन्निधिः एतेन प्रयोजनाभावेऽपि भीत्या पूर्णीभूला चन्द्रस्तिष्ठति देवैरपि भीत्या नासौ पीयते चन्द्रप्रभाणि च रत्नानि मम सन्तीति सूचितं अहमेव पुरुषोयचेति सम्भावनायमाहोपुरुषिका निपातनात् आहोपुरुषिकादर्पाचात्मसम्भावनात्मनीत्यमरः। अहोपुरुषस्य भाव आहोपुरुषिका इति केचित् तदा विकारसंघेतिभावे कप् स्त्रीत्वमभिधानात् काप्यनाशीरकइति अत इत्वं सदेति कुतःकक्रुहेत्यादिना निपातितं ॥ २७ ॥ भ०

हृतरत्नश्च्युतोद्योगी रक्षोभ्यः करदो दिवि। पूतक्रतायीमभ्येति सत्रपः किन्न गोत्रभित् ॥ २८ ॥

हृत। हृतोच्चैःश्रवआदिरत्नो गोत्रभिदिन्द्रः अतएव च्युतोद्योगः दिवि वर्त्तमानोऽपि रक्षोभ्यः करदः राजग्राह्यं वित्तम्प्रयच्छन् पूतक्रतायीं शचीं पूतक्रतोरै चङीप् पुंयोगादाख्यायामिति सत्रपः सव्रीडः किमभ्येति न ढौकते ॥ २८ ॥ ज०म०

हृतेत्यादि। गोत्रभित् इन्द्रो दिवि वर्त्तमानोऽपि सत्रपः सलज्जः भ०

नाभिमुखो

अपि तु तथैव सचपलं हेतुमाह मया शतरत्नः शतं रत्नं यस्य स तथा गलितोद्योगः राक्षसेभ्यः करदः करं राजग्राह्यभागं ददातीति डः पूतक्रतोरिन्द्रस्य पत्नी पूतक्रतायी वृषाकप्यग्नि इत्यादिना ईप् ऐश्च गोत्रान् पर्व्वतान् योभिनत्ति सोऽतिबली यान् इति साभिप्रायं पदं ॥ २८ ॥

अतुल्यमहसा सार्द्धं रामेण मम विग्रहः। त्रपा करस्तथाप्येष यतिष्ये तद्विनिग्रहे ॥ २९ ॥

ज०म० अतु। तदेवंविधस्य मम अतुल्यमहसा अतुल्यतेजसा रामेण सह विग्रहस्त्रपाकरः कृञोहेत्वित्यादिना टः तथापि लज्जार्थं तया एष च यतिष्ये तद्विनिग्रहे विविधनिग्रहविषये तस्य यतिष्ये यत्नं करिष्यामि वर्त्तमानसामीप्ये वर्त्तमानवद्वेति विकल्पेन लटो विधानात् लृडुदाहृतः ॥ २९ ॥

भ० अतुल्येत्यादि। यद्यपि अतुल्यमहसा असदृशतेजसा रामेण सार्द्धं मम विग्रहस्त्रपाकरः तथापि तस्य विविधनिग्रहे एषोऽहं यतिष्ये यत्नं करिष्ये लज्जापनयायेति शेषः त्रपां लज्जां करोतीति हकुञः निग्रह इति विषयसप्तमी निमित्तमात्रेऽपि सप्तमी लोकोपचारादित्यन्ये ॥ २९ ॥

उत्पत्य खं दशग्रीवो मनोयायी मितास्त्रभृत्। समुद्रसविधावासं मारीचं प्रति चक्रमे ॥ ३० ॥

उत्प। उत्क्षिप्यात्मानमाकाशमुत्पत्य मारीचम्प्रति चक्रमे यत अ०म०
मारीचो राघवस्तत्र गत इत्यर्थः अनुपसर्गादेति क्रमेस्तङ् मनो
वदाशु यातुं शीलमस्येति कर्त्तर्य्युपमान इति णिनिः शितास्त्रभृत्
गृहीततीक्ष्णचन्द्रहासः समुद्रस्य सविधे समीपे आवासो यस्य
मारीचस्य सह विधेन सविधमिति व्युत्पत्तिमात्रं शब्दस्तत्समीप
वाची॥ ३०॥

उत्पेत्यादि। एवमुक्त्वा दशग्रीवो रावणः खमाकाशं उत्पत्य भ०
मारीचं प्रति लक्षीकृत्य चक्रमे गतः वागेरिति मं द्वितीयानिमि
त्तकस्य प्रतिशब्दस्य गिलाभावात् मन इव शीघ्रं यातीति मनो
यायीति कर्त्तर्य्युपमाने उपपदे णिनिति परः स्वमते गोत्रादि
लाणिन् व्याघ्रस्यासौ स्याचेति वाक्यं कुर्व्वता कश्चिदुपमानव्यञ्ज
कशब्दाभावेऽप्युपमानं गम्यते इति सूचितं तेन मन इव यायीत्य
र्थो गम्यते शितं तीक्ष्णमस्त्रं बिभर्त्तीति क्विप् समुद्रस्य सविधे समी
पे आवासो यस्य तं। सदेशाऽभ्याशसविधसमर्य्यादसवेशवदित्य
मरः॥ ३०॥

सम्पत्य तन्नीडेऽसौ तं वृत्तान्तमशिश्रवत्। चक्षु
नाथ श्रुतार्थेन तेनागादि दशाननः॥ ३१॥

सम्प। असौ दशग्रीवः तन्नीडे मारीचस्य समीपे अत्रापि सह अ०म०
नीडेनेति व्युत्पत्तिमात्रम् समेत्य यात्वा तं वृत्तान्तं शूर्पणखा
कथितमशिश्रवत् श्रावितवान् शृणोतेर्ण्यन्तस्य लुङि रूपम् तेन
मारीचेन श्रुतार्थेन चक्षुषा वचनशीलेन दशाननः अगादि
उक्तः कर्म्मणि लुङ्॥ ३१॥

भ० संपत्येत्यादि। असौ रावणः तस्य समीडे समीपे संपत्य संगत्य तं मारीचं दृप्तान्तं पूर्व्ववृत्तान्तं अभ्यश्रवत् आवितवान्। समीपे निकटासन्नसन्निकृष्टसनीडवदित्यमरः। अथ अनन्तरं भुताचेंन तेन मारीचेन मरुता भीतेन दमाननोऽगादि उक्तः कर्म्मणि टी ॥ २१ ॥

अन्तर्द्धत्स्व रघुव्याघ्रात्तस्मात्त्वं राक्षसेश्वर। यो रणे दुरुपस्थानो हस्तरोधं दधद्धनुः ॥ २२ ॥

ज०म० अन्त। हे राक्षसेश्वर त्वन्तस्माद्रघुव्याघ्रादन्तर्द्धत्स्व अन्तर्हितोभव व्यवहितो भवेति यावत् दधातेर्लोटि आभ्यस्तयोरित्याकारलोपः अभ्यासस्य दधस्तथोश्चेति भष्भावः अन्तर्द्धौ येनेत्यपादानसंज्ञा यस्मात् रामः रणे दुरुपस्थानः दुःखेन उपस्थीयते उपगम्यत इति आतोयुचेति युच् यतोहस्तरोधन्दधद्धनुः हस्तेन रुध्वा सदैव योधनुर्धत्ते स कथन्दुरुपस्थानो न भवति हस्तमध्ये तृतीयाच्च उपपदे सप्तम्याञ्चोपपीडरुधकर्ष इति णमुल् चकारेण तृतीयायाः समुच्चितत्वात् तृतीयाप्रभृतीन्यन्यतरस्यामिति सः तदेव दुरुपस्थानत्वं स्फुटयन्नाह ॥ २२ ॥

अन्तरित्यादि। हे राक्षसेश्वर तस्माद्रघुव्याघ्रात् त्वं अन्तर्द्धत्स्व स यथा न पश्यति तथा व्यवहितोभव अन्तःपूर्व्वधाञोगीस्वः श्नादीरेदिः श्नभस्वयेत्यादिना से प्रंसः धस्य दस्य श्नमान्तस्येति दस्य धः आद्योरालोप्यइत्यालोपः श्नपश्नसारिति धस्य तः यतोऽपायेत्यादिना अन्तर्द्धौ पञ्चमी हेतुमाह यो रामो दुरुपस्थानः

दुःखेनोपक्षीयते उपगम्यते शत्रुभिः समीपगमनमेवाशक्यं किं पुन र्युद्धमिति भावः आतोऽनोऽदृरिति अनः यतोदृसंरोधं सदा धनुर्दधाति दृसेन दृढा दृसंरोधं आवर्त्तो दृतीयान्ताद्धधोणम् दृति परः तेन सदा खिरतरं धनुर्दधातीत्यर्थः केचित्तु दृसं दृढ़मित्यर्थे स्वाङ्गात् दृधेणम् तेनान्यकर्मानिष्पत्तिरस्य गम्यत दृत्याहुः खमते दृसं दृणद्धि कार्य्यान्तराण्यवर्णयतीति ढान् षण् धनुर्विशेषणं ॥ २२ ॥

भवन्तं कार्त्तवीर्य्योयोहीनसन्धिमचीकरत्। जिगाय तस्य हन्तारं स रामः सार्व्वलौकिकः ॥ २३ ॥

भव। यः कार्त्तवीर्य्यः कृतवीर्य्यस्यापत्यं सहस्रबाहुः भवन्तं हीनसन्धिमचीकरत् हीनेन दुर्ब्बलेन यः सन्धिः तमभवन्तङ्कारितवान् तेन हीनत्वं बलान्निर्ज्जित्य कारित दृति दुरुपस्थानमुक्तम् हृक्रोरन्यतरस्यामिति द्विकर्म्मता तस्य कार्त्तवीर्य्यस्य योहन्ता परशुरामः कृतयोगे कर्म्मणि षष्ठी तेन हि तस्याग्निहोत्रधेनुमपहृत्य गच्छतः परशुना बाहुसहस्रच्छिन्नम् तस्य हन्तारं स रामो जिगाय जितवान् जयतेर्लिटि धातुजकारस्य सन्लिटोर्जे रिति कुत्वम् सार्व्वलौकिकं सर्व्वलोके विदितं लोकसर्व्वलोकाभ्यां ठञ् अनुशतिकादित्वादुभयपदवृद्धिः सार्व्वलौकिक दृति पाठान्तरम् तत्र राम दृति योज्यम् ॥ २३ ॥ 

भवेत्यादि। दुरुपस्थानत्वं स्फुटीकुर्व्वन्नाह यः कार्त्तवीर्य्योऽर्ज्जुनोभवन्तं हीनसन्धिं भग्नसन्धिं अचीकरत् कृतवान् कृञः स्वार्थे 

ञिः पुर्भ्यांञिर्भ्या इत्यस्य योगविभागात् क्वचित्पुरादेरन्यस्माद पि स्वार्थे ञिर्भ्या भवतीति बोध्यं तेन रामोराज्यमकारयदित्या दिप्रयोगाः यद्वा हीनजनेन सह सन्धिं सन्धानं मिलनं कारया मास यद्भयात् भवता हीनजनोऽप्याश्रितइत्यर्थः घोऽञ्जोञेरिति प्रयोज्यकर्त्तुः कर्म्मता कृतवीरस्यापत्यं कार्त्तवीर्य्यः गर्गादित्वात् ष्यः तस्य कार्त्तवीर्य्यस्य हन्तारं परशुरामं स रामोजिगाय जे र्गिःसन्वोः सार्व्वलौकिकं सकलक्षत्रियनाशेन सर्व्वलोकविदि तम् प्रथमान्तपाठे रामविशेषणं तत्र विदितइत्यर्थे ढघेकादिति ष्णकः षित्तेञिरिति सुभगादित्वात् उभयपदेवृद्धिः॥ ३३॥

यमास्यदृश्वरी तस्य ताडका वेत्ति विक्रमं। शूरम्म न्योरणान्नाहं निरस्तः सिंहनर्द्दिना॥ ३४॥

ज॰म॰ यम। तस्य रामस्य विक्रमन्ताडका वेत्ति ज्ञातवती वर्त्तमान सामीप्य इति भूते लट् कीदृशी यमास्यदृश्वरी तच्छरताडिता यममुखन्दृष्टवती मृतेत्यर्थः दृशेः क्वनिप् वनोरचेति ङीब्रेफौ अहमपि शूरम्मन्यः शूरमात्मानम्मन्यमानः आत्ममाने खश्च सिंहनर्द्दिना रामेण सिंहइव नर्दतीति कर्त्तर्य्युपमान इति णिनिः रणान्निरस्तः वहिष्कृत इत्यर्थः॥३४॥

भ॰ यमास्येत्यादि। तस्य रामस्य विक्रमं ताडका वेत्ति जानाति अहञ्च वेद्मि सा किम्भूता यमास्यदृश्वरी यममुखं दृष्टवती मृतेति यावत् चास्मिति दृशेः क्वनिप् नचवसाद्दनइति ङीप् रञ्च अहं किम्भूतः शूरम्मन्यः आत्मानं शूरं मन्यमानः मन्यात्स्वार्थेइति

सम् ग्रिस्वात् रत्ने दिवस्तुतुदेत्यादिना यम् तेन सिंहनर्द्दिना र
णात् निरस्तः निराकृतः सिंह इव नर्द्दतीति मनोयाथीतिवत्
वेत्तीति लोकान्तरस्था ताडका इदानीमपि जानातीत्यभिप्रा
येण वर्त्तमाने क्ती वर्त्तमानसामीप्ये भूतेऽपि क्तीत्यन्ये रणादिति
हेतौ पञ्चमी रणभूमेः सकाशात् वहिष्कृत इति वा ॥ ३४ ॥

न त्वं तेनान्वभाविष्ठा नान्वभावि त्वयाऽप्यसौ। अनु
भूतोमया चासौ तेन चान्वभविष्यहं ॥ ३५ ॥

नत्वमित्यादि। तेन रामेण त्वन्नान्वभाविष्ठाः त्वमनेन नानु ज०म०
भूतः कर्म्मणि लुङ् थासि स्यसिजित्यादिना चिण्वदिट् इत्वं नान्व
भावि त्वयाऽप्यसौ नानुभूतः येनैवमुच्यते अत्र चिण्भावकर्म्मणो
रिति चिण् अनुभूतोमया चासौ चशब्दः पुनरित्यर्थे मया पुनर
सावनुभूतः न शक्योजेतुमिति तेन रामेण चान्वभविष्यहमनु
भूतोऽहम् तेन सह योद्धुमक्षम इति अत्र चिण्वद्भावो न कृतः
किन्तु लुङि उत्तमपुरुषैकवचने वलादिलक्षण इट् तेन वृद्ध्यभा
वात् गुण एवेति ॥ ३५ ॥

नत्वमित्यादि। त्वद्वचने कोग्रहः मत्प्रसिद्धैव सदूरीभविष्य भ०
ति इत्याशङ्कायामिदमुत्तरं तेन रामेण त्वं न अन्वभाविष्ठा
न अनुभूतः कथं त्वत्तोऽस्य भयं स्यात् अनुपूर्व्वोभूधातुः सक
र्म्मकः कर्म्मणि थास् हनयहृहृशग्रहइति पक्षे चिण् त्वयापि असौ
रामो न अन्वभावि न अनुभूतः तेन तत्रावज्ञा न युक्ता कर्म्मणि
टौ तन् असौ मया अनुभूतः तवापि तत्त्वशोऽहमिति मद्वचनं

गृह्णातीति भावः तेनाथ्यहमभ्यभविषि अनुभूतः तेन मद्गमनं व्यर्थं पराजितस्य मम दर्शनेन तस्यावमानप्रसङ्गात् कर्म्मणि टी इण्मिणोरभावपक्षे इदम् ॥ ३५ ॥

अध्यङ् प्रस्त्रभृतां रामोन्यञ्चस्तं प्राप्य मद्विधाः। सकन्याशुल्कमभनक्मिथिलायां मखे धनुः ॥ ३६ ॥

ज०म० अध्यङ्। प्रस्त्रभृतामध्ये रामोऽध्यङ् अधिकः अध्यञ्चेत्याधिक्ये वर्त्तत इति ऋत्विगित्यादिना क्विन् तस्मिन् लुप्ते अनुनासिकलोपे उगिदचामिति नुम् तस्यानुस्वारपरसवर्णत्वे कृते च हल्ङ्यादिसंयोगान्तलोपौ नकारस्य क्विन्प्रत्ययस्य कुरिति कुत्वेन ङकारः तम्मादृशमप्राप्य मद्विधा न्यञ्चो हीनाः निशब्दोऽवाधीभावे वर्त्तते न्यञ्च इति पूर्व्ववत् क्विन् अनुनासिकलोपः नुम् हल्लोपोनास्ति अहल्त्वात् कुत्वंच नास्ति अपदसंज्ञत्वात् योमिथिलायामभङ्क्षुनुरभनक् भग्नवान् सोऽस्मादपि कारणात् प्रस्त्रभृतामध्यङ् भञ्जेर्लङि श्नमलोपः हल्ङ्यादिलोपः कुत्वञ्च कन्याशुल्कमन्यामूभज्जत्वङ्कि यो रौद्रन्धनुरारोपितगुणङ्करोति तस्मै कन्या दीयत इति मूल्यीकृत्य स्थापितम् ॥ ३६ ॥

भ० अध्यङ्कित्यादि। प्रस्त्रभृतां मध्ये रामो अध्यङ् आधिक्येन पूजितः कर्म्मणि क्विप् इसुकलोपोऽणाविति प्राप्तनलोपस्य नेदित्पूजार्थाञ्चोरिति प्रतिषेधः विप्रत्ययोवा ऋत्विगिति अञ्चोः पृथक् ग्रहणात् लुप् प्राक्कङ् वोर्नुः अपेजमनोः स्थानस्य लुप् अध्यङ् अधिकोवा अधिपूर्व्वोऽञ्चतिराधिक्ये वर्त्तते तं प्राप्य मद्विधा मत्

कारकाः पुरुषा न्यञ्चः निम्नञ्चोऽधोभागे न्यञ्चन्ति अधोगच्छन्तीति न्यञ्चो हीना इत्यर्थः कुत इत्याह सरामोमिथिलायां मखे यज्ञे धनुरभनक् भग्नवान् भञ्जेर्थौ रुधादित्वात् नम् नशो नलोपः श्नसोरल्लोपइति दिलोपः भर्क्ति कङ् कन्याशुल्कं कन्यापणं धनुरारोपे सति कन्या देयेति मूल्येन स्थापितं ॥ २६ ॥

संविन्नः सहयुध्वानौ तच्छक्तिं खरदूषणौ। यज्वानश्च सुसुत्वानोयानगोपीन्मखेषु सः ॥ २७ ॥

संवि। नाहमेव रामशक्तिमवैमि अपितु खरदूषणावपि सं विन्नः ज्ञातवन्तौ वर्त्तमानसामीप्यइति भूते लट् सकर्मकत्वात् समोगमीत्यादिना तङ् न भवति तत्राकर्मकादिति वर्त्तते सहयुध्वानौ सह तेन युद्धवन्तौ सहेचेति युधेः क्वनिप् यज्वानश्चाहिताग्नयः सुसुत्वानः सोमयाजिसहिताः सुयजोर्ङ्वनिप् संविदन्तीति वचनविपरिणामेन योज्यम् यानगोपीत् अरक्षीत् मखेषु सरामः लुङि रूपमनया मखद्रुहोराक्षसाः यतोरामस्य शक्तिं ज्ञातवन्तः ॥ २७ ॥ ज॰म॰

संविन्नइत्यादि। न केवलमहमेव वेद्मि खरदूषणावपि तस्य शक्तिं संविन्नः ज्ञातवन्तौ ताडका वेत्तीतिवत् कौ सहयुध्वानौ तेन सह युद्धवन्तौ चासुन्विति क्वनिप् यज्वानश्चाहिताग्नयश्च विदन्ति पूर्व्वेण क्वनिप् बाहुल्याच्च जिः ससुत्वानः सुत्वभिः कृतसोमपानैः संहिताः पूर्व्वेण क्वनिप् सुस्थतम्पितीति तन् तेषां ज्ञाने हेतुमाह मखेषु यज्ञेषु सयानगोपीत् अरक्षीत् तेषां यज्ञे भ॰

राचसहननात् तेऽपि जानन्तीत्यर्थः गुपूरचणे वारे इति आयो ऽभावः पचे ध्वांसिः वेमूरिति पचे इम्॥ ३७॥

सुखजातः सुरापीतो नृजग्धोमाव्यधारयः। अधि लङ्कं स्त्रियोदीव्य मारब्धा बलिविग्रहं॥ ३८॥

ज०म० सुख। यतएवन्दरुपस्थानः स तस्माद्बलिना रामेण विग्रह मारब्धाः माकार्षीः रभेराङ्पूर्व्वात् माङि लुङ् थास् झलोझ लीति सिज्लोपः झषस्तथोर्धोधः झलाञ्जश्झशि किद्वार्य्यमि त्याह अधिलङ्कं लङ्कायामधि विभक्त्यर्थेऽव्ययोभावः स्त्रियोदीव्य क्रीड लोटि रूपम् दिवःकर्म्मचेति कर्म्मसंज्ञायां वाम्शसोरि तीयङ् कीदृशः सुखजातः जातं सुखमस्येति बहुब्रीहिः क्तान्त स्यपामन्तात् यदाह सुरापीतः पीतमदिरः नृजग्धः भुक्तमानुषः निष्ठायामदोजग्धिः पूर्व्ववद्बहुलम् एषु वाहिताग्न्यादिदर्शनात्प रनिपातः माल्यन्धारयतीति माल्यधारयः अनुपसर्गात् लिम्पे त्यादिना शः॥ ३८॥

भ० सुखेत्यादि। रामोदुरुपस्थान एव अतस्तेन बलिना सह विग्रहं युद्धं मारब्धाः माकार्षीः आङ्रभेष्टौ थास् झलस्ता दिति सिलोपः ढभात्तथोरिति यस्य धः अधिलङ्कं लङ्कायामधि कृत्य स्त्रियोदीव्य स्त्रीभिः क्रीड कारकार्थेऽव्ययीभावः दिवसुतु इत्यादिना दिवः श्यन् र्व्वोरुपधायाइति दीर्घः हेर्लोपः दिवोऽर्थेवेति करणे द्वितीया कीदृशः सुखं जातमस्य सुरा पीता येन ना मनु ष्योजग्धोभक्षितोयेन स तथा एषु अग्न्याहितादित्वात् क्ता

न्तस्य परनिपात इति परः स्वमते पूर्व्वपरनिपातयोर्विवक्षा धीनत्वं द्वैकंशोऽव्यय इत्युक्तेः जग्धोऽदोयपिचेति जग्धादेशः माल्यानि धारयतीति माल्हिसातीति शः ॥ ३८ ॥

तं भीतङ्कारमाक्रुश्य रावणः प्रत्यभाषत । यातयामं विजितवान् सरामं यदि किन्ततः ॥ ३९ ॥

तंभी । तम्मारीचम्पूर्व्वोक्तन्निराकुर्व्वन् रावणः प्रत्यभाषत प्रत्युक्त जं॰म॰ वान् लङि रूपम् भीतङ्कारमाक्रुश्य भीतङ्कृत्वा भीतोऽसीति कर्म्म एयाक्रोशे कृञः खमुञ् यातयामङ्गतवयसं यदि विजितवान् रा मोदाशरथिः किन्ततः किं तापसः शूरः ॥ ३९ ॥

तमित्यादि । भीतङ्कारं त्वं भीतोऽसीत्युक्त्वा आक्रुश्य तं मारीचं भ॰ रावणः प्रत्यभाषत प्रत्यूचे भीतंकारमिति कर्म्मण्याक्रोशे कृञो भाषणार्थे क्त्वा चणम् खिदचेति परः स्वमते तमाक्रुश्य प्रत्य भाषत तं किम्भूतं भीतं भययुक्तं पुनः किम्भूतं कारं घोरणे दुरूप स्याम इत्यादेर्विज्ञापयितारं कृकङ्विज्ञाने इत्यस्मात् ण्यन्तात् कभातेऽसीति कर्त्तरि घञ् किम्वा चणम्बेत्यस्य योगविभागात् आक्रोशे चणम् मनीषादित्वात् पूर्व्वपदस्य ह्रीकान्तत्वं किं प्रत्य भाषतेत्याह स राघवोयातयामं वृद्धं रामं जामदग्न्यं विजित वान् ततः किं नहि वृद्धजयेन शौर्य्य ज्ञायते । यातयामस्तु स्यात् परित्यक्तोज्झितेऽपि चेति विश्वः ॥ ३९ ॥

अघानि ताडका तेन लज्जाभयविभूषणा। स्त्रीज ने यदि तच्छ्लाघ्यं धिग्लोकं क्षुद्रमानसं ॥ ४० ॥

ज॰म॰ अघा। तेन रामेण ताडका अघानि व्यापादिता हन्तेः क र्मणि लुङ् लज्जा भयं च विभूषणं यस्याः स्त्रीलाभ शौर्य्यम् एवं विधाया अनेन रामेण यदि गर्ह्यमपि हननं स्त्रीजने श्लाघ्यं श्लाघ नीयम् कृत्यानाङ्कर्त्तरिवेति तृतीया तं धिक् तं लोकं क्षुद्रमानसं हीनमानसम् ॥ ४० ॥

भ॰ अघानीत्यादि। लज्जा भयञ्च विभूषणं यस्याः सा ताडका तेन रामेण अघानि मारिता हन्तेः कर्म्मणि टी रतनोर्यंगिणौ खेर्हौघोञ्जितिचेति घत्वं स्त्रीजने तत्कर्म्म यदि श्लाघनीयं तदा क्षुद्रमानसं हीनचित्तं लोकं धिक् धिक्षमयेति टी ॥ ४० ॥

यज्ञेद्येनर्हिनमसौ शरैर्भीष्मभाययत्। कुब्रह्मयज्ञ के रामो भवन्तं पौरुषं न तत् ॥ ४१ ॥

ज॰म॰ यज्ञे। असौ रामो यज्ञवन्नमीरं शरैरभाययत् भायितवान् णुगात्मनेपदे न भवतः भयहेतोरभावात् अत्र हि शरेभ्यो भयम् न तु रामात् तत् किम्मौरुषमुरुषकारः किमसौ पुवादित्वा दण् गेऽर्नदिनञ्जेद एव नर्दिनं पाचेषमितादित्वात्तः कुब्रह्मयज्ञ के कुत्सिता ब्रह्माणः कुब्रह्माः कुःपापार्थे इति सः कुब्रह्मणाम न्यतरस्यामिति समासान्तष्टच् तेषां कुत्सितो यज्ञः तस्मिन्सति

कुत्सायाङ्कन्. तेन पूरयन्तोऽहं राक्षसेन निरस्तः इत्यमुष्कल मुक्तम्॥४१॥

यद्गद्त्यादि। असौ रामः कुब्रह्मणके यन्नवन्तं शरैरभायत् अत्रासयत् तदपि न पौरुषं कथमित्याह भीरुं भयशीलं अतएव गेहेनर्द्दिनं खगृह एव नर्द्दतीति मत्वादित्वात्पिन् पात्रे समितादित्वात् चेपे समासोविभक्त्यलोपश्चेति परः अभाययदिति भियोन्यन्तात् घी खिभ्योर्बाद्धर्थे जो मञ्चेत्यस्य भीभीष्वेत्यस्य च नात्र विषयः यतः शरेभ्य एवात्र भयं विवचितं नतु प्रयोजकात्कर्त्तुः कुत्सितोब्रह्मा ब्राह्मणः कुब्रह्मः ईषाद्ब्रह्मणः कुमहद्भ्यान्तुवेति पचे षः तस्य कुत्सितोयस्य इति निन्दायां विकारर्थेत्यादिना कः अतएव प्रयोजनाभावात्तत्र समया राक्षसा न गच्छन्ति पुरुषस्य भावः कर्म्म वेति पूर्व्वेण ष्यः॥४१॥

चिरकालोषितं जीर्णं कीटनिष्कुषितं धनुः। किं चित्रं यदि रामेण भग्नं चत्रियकान्तिके॥४२॥

चिर। यदि रामेण चत्रियकान्तिके कुत्सितचत्रियसमीपे भग्नन्धनुः किन्तच्चित्रमाश्चर्य्यं चत्रिया जनकादयः तस्य कुत्साया कन् चत्रियकस्यान्तिके दूरान्तिकार्थयोगे षष्ठीसमासं विधाय पश्चात्सप्तम्यधिकरणे चेति चकाराद्दूरान्तिकार्थेभ्यश्चेति सप्तमी किमिति न चित्रमित्याह चिरकालमुषितमिति कालाध्वनोरिति द्वितीयां विधाय अत्यन्तसंयोगेचेति द्वितीयासः जीर्णञ्च

रकालोषितत्वात् जृष्वयोर्हानौ निष्ठा ऋतइद्धातोः इकोहल्लि चेति दीर्घः रदाभ्यामिति निष्ठानत्वम् कीटैर्घुणैर्निष्कुषितम्चुण्णितं निरःकुष इत्यनुवर्त्तमाने इण्निष्ठायामितीट् ॥ ४२ ॥

चिरेत्यादि। चत्रियकान्तिके कुत्सितानां चत्रियाणां जनकादीनां निकटे यदि रामेण धनुर्भग्नं तदपि किं चित्रं कथं न चित्रमित्याह चिरकालोषितं चिरकालं व्याप्य स्थितं सदाध्वादिव्याप्ताविति द्वितीया तथा समासः ततएव जीर्णं जृजरायां हानौ क्तः ऋदिरणावितोर् व्यंनचृतयोति दीर्घः ल्वाद्योदिति नकारः कीटैर्घुणैर्निष्कुषितं भन्नःखादितं नेमडीत्यादौ निष्कुषवर्ज्जनात् इम् षत्वविधानं गवाचजालैरभिनिष्पतत्व इत्यत्र व्याख्या ॥ ४२ ।

वनतापसके वीरौ विपक्षे गलितादरौ। किं चित्रं यदि सावज्ञौ मम्नतुः खरदूषणौ ॥ ४३॥

ज०म० वन। वने तापसोवनतापसः कुत्सायां कन् तस्मिन् तापसके रामे सावज्ञत्वाद्गलितादरौ विपक्षे किमयङ्करिष्यतीत्यमुद्धैव योधितवन्तौ खरदूषणौ यदि मसतुः मृतौ कोदोषः किञ्चित्रं चिपतेर्लुङ्लिङोश्चेति नियमात् लिव्यात्मनेपदन्न भवति ॥ ४३ ॥

भ० वनेत्यादि। खरदूषणौ यदि मसतुः तदापि किञ्चित्रं नैवाश्चर्य्यमित्यर्थः तपःशीलस्तापसः वने कुत्सितस्तापसो वनतापसको रामस्तस्मिन विपचे किमयं करिष्यतीति मत्वा गलितादरौ

वीरावपि शाक्यौ विपक्षादराभावात् युद्धेऽपि सावहेलो सृड्ड्तीक्ष्णमिति नियमात् नवशःपमे इति भितोऽन्यलात् शाः परस्मैपदं ॥ ४३ ॥

त्वञ्च भीरुः सुदुर्ब्बुद्धे नित्यञ्च रणकाम्यसि। गुणांश्चापकुषेऽस्माकं स्तौषि शत्रूंश्च नः सदा ॥ ४४ ॥

त्वञ्च। हे दुर्ब्बुद्धे त्वम्पुनः भीरुश्च भवसि नित्यञ्च रणकाम्यसि ज०म० आत्मनोऽनिशं रणमिच्छसि आत्मेच्छायाङ्काम्यच् अस्माकञ्च सतो गुणानपकुषे अपनयसि कुङ् अपनये आदादिकः ङित्त्वात्तङ् शत्रूंश्च नोऽस्माकं स्तौषि स्तौतेः उतोवृद्धिर्लुकि हलि ॥ ४४ ॥

त्वञ्चेत्यादि। हे दुर्ब्बुद्धे मारीच त्वं भीरुश्च भवसि रणकाम्यसि च आत्मनो रणमिच्छसि च तेः काम्यच्खेच्छायां भीरोर्युद्धेच्छाऽनुचितैव युद्धे पराजयोऽवश्यं एवमस्माकं गुणांश्चापकुषे शौर्य्यादीन् अपनयसि कुङ्लत्वार्थे सदा नोऽस्माकं शत्रून् स्तौषि ष्टुञ् स्तुतौ रपिद्धस्तुतोऽदेर्ग्निः ॥ ४४ ॥

शीर्ष्च्छेद्यमतोऽहं त्वां करोमि क्षितिवर्द्धनं। कारयिष्यामि वा कृत्यं विजिघृक्षुर्व्वनौकसौ ४५ ॥

शीर्ष। यतएवंविधस्त्वन्दुष्टः अतोऽहं त्वामोद्वितीयाया इत्या ज०म० ष्टमिकसप्तेन लादेशः शीर्षच्छेद्यं शीर्षच्छेदार्हं शीर्षच्छेदायत्

च्छितिवर्द्धनङ्करोमि शिरश्छित्वा व्यापादयामीत्यर्थः अथवा कृत्य करणीयं विभाषाकृवृषोरिति क्यप् कारयिष्यामि हृक्रोरिति द्विकर्म्मकता विजिघृक्षुः विग्रहीतुमिच्छुः सनिग्रहगुहोश्चेतीट् प्रतिषेधः रुदविदेत्यादिना सनः कित्त्वे ग्रहिज्येत्यादिना सम्प्रसारणम् होढः एकाचो वशोभष् षढोःकसि वनौकसौ रामलक्ष्मणौ वनमोकोगृहं ययोः नलोकेति कर्म्मणि षष्ठ्याः प्रतिषेधः॥ ४५॥

भ॰ शीर्षेत्यादि। अतः कारणात् अस्मद्भ्रातृपकृत्वात् ग्रचुस्तव नाश शीर्षच्छेद्यं शीर्षच्छेदार्हं त्वां चितिवर्द्धनं मृतं करोमि शिरश्छित्वा मारयामीत्यर्थः शीर्षच्छेदमर्हतीत्यर्थे दण्डादिति यः किम्वा छिदोण्यत् शीर्षे छेद्यः शीर्षं छेद्यं यस्येति वा विग्रहः अथवा कृत्यं कार्य्यं त्वां कारयिष्यामि यदि जीवनेच्छास्ति तदा मत्कृत्यं कुर्व्वितिभावः कृवृषमृजेति पक्षे क्यप् णोऽजौऽजेरिति प्रयोज्य कर्त्तुः पक्षे कर्म्मत्वं वनमेव ओको ययोस्तौ रामलक्ष्मणौ विग्रहीतुं योधयितुं अभिभवितुं वा इच्छुरहं ग्रहेः सन् नेमुगुहपक्ष इति इत्निषेधः ग्रहस्वपप्रच्छांजि: ॥ ४५ ॥

तमुद्यतनिशातासिं प्रत्यवाच जिजीविषुः। मारीचोऽनुनयंस्त्वासादभ्यमित्र्यो भवामि ते ॥ ४६ ॥

ज॰म॰ तमु। तं रावणं एवमुक्तवन्तं निशात इति शाछोरन्यतरस्यामिती त्वाभावपक्षे रूपं उद्यतः उत्थापितः निशातस्तीक्ष्णोऽसिर्येन तम्मारीचस्त्वासात् प्रत्युवाच वचनमुक्तवान् अभ्यमित्र्योभवामि

ते अमित्रस्याभिमुखमभ्यमित्रमाभिमुख्येऽव्ययीभावः अभ्यमित्र मलङ्गामीत्यस्मिन्नर्थे अभ्यमित्राच्छचेति चकाराद्यत्खौचेति यत् त्वदमित्राभिमुखङ्गच्छामीत्यर्थः अनुनयन् अनुकूलयन् किमर्थं जिजीविषुः जीवितुमिच्छुः ॥ ४६ ॥

तमित्यादि। मारीचोजिजीविषुर्जीवितुमिच्छुः सन् चाशात् भ० अनुनयन् तं रावणं प्रत्युवाच चाससहेतुमाह उद्यत उत्थापितो निशातस्तीक्ष्णोऽसिर्येन तं निशातेति छाशोर्वेति श्यतेः पचे न क्तिः किं प्रत्युवाचेत्याह अहं तेतव अभ्यमित्र्यः शत्रुभिमुखगामी भवामि अमित्रस्य अभिमुखं अभ्यमित्रं आभिमुख्येऽव्ययीभावः अभ्यमित्र शब्दादिदं गच्छतीत्यर्थे विकारसंघेति यः ॥ ४६ ॥

हरामि रामसौमित्री मृगोभूत्वा मृगद्युवौ। उद्यो गमभ्यमित्रीणो यथेष्टं त्वञ्च सन्तनु ॥ ४७ ॥

हरा। अहम्मृगोभूत्वा रामसौमित्री हरामि देशान्तरम्मा ज०म० पयामि आखेटकाभिरतत्वात् यदाह मृगयुवौ मृगैर्दीव्यत इति क्विप् च्छ्वोःशूडनुनासिके चेति चकारात् क्वौ च ऊट् यणा देशः भवक्मृगद्युताविति पाठान्तरम् तत्र द्युअभिगमने स्र गान् द्योति अभिगच्छतीति क्विप् त्वञ्च यथेष्टं यथारुचि तमु द्योगं सन्तनु विस्तारङ्कुर्मित्यर्थः तनोतेर्लोटि उतश्चेति हेर्लुक् अभ्यमित्रीणः अमित्राभिमुखमलङ्गामी अभ्यमित्राच्छचेति चका राद्यत्खौचेति खः ॥ ४७ ॥

भ॰ हरेत्यादि । उभार्थं दर्शयन्नाह अहं मृगीभूत्वा रामसौमित्री हरामि अन्यत्र नयामि यतस्तौ मृगयुवौ मृगयारसिकौ मृगैर्दीव्यत इति क्विपि कृते मृगयुवाविति वक्ष्योट् घोरिपुवपि मृगद्युताविति पाठे द्युलभिसर्पणे इत्यस्मात् क्विपि सञ्चतनृपितीति तन् मृगाभिगामिनावित्यर्थः ततस्त्वमपि अभ्यमित्रीणोऽयथेष्टमुद्योगं यन्तनु तनदुन्नविस्तारे हेर्लोपोऽस्योम्नोश्चेति हिलोपः अभ्यमित्रीण इति अभ्यमित्र्यवत् ॥ ४७ ॥

ततश्चित्रीयमाणोऽसौ हेमरत्नमयो मृगः । यथा
मुखीनः सीतायाः पुप्लुवे बहु लोभयन् ॥ ४८ ॥

ज॰म॰ ततः । उक्तानन्तरमसौ मारीचो मायामृगीभूतः सन् हेमरत्नमयः रत्नञ्च हेमचेति विगृह्य मयड्वैतयोर्भाषायामिति विकारे मयट् निर्मलत्वात् सीताया अग्रतो यथामुखीनः प्रतिबिम्बाश्रय इव भूत्वा पुप्लुवे भ्रमतिस्म इवशब्दलोपो द्रष्टव्यः यथामुखन्दर्शनमिति यथामुखसम्मुखस्य दर्शनः खः बहु लोभयन् सुष्ठु स्पृहाञ्जनयन् यतश्चित्रीयमाणः आश्चर्यम्भवन् हेमरत्नमयत्वात् नमोवरिवश्चित्रङः क्यच् चित्रङ आश्चर्ये ङकार आत्मनेपदार्थत्वात् शानच् अवयवकृतं लिङ्गं समुदायस्य भवतीति ॥ ४८ ॥

भ॰ ततइत्यादि । ततोऽवधानानन्तरं असौ मारीचो मायया हेमरत्नमयो मृगः सन् सीताया यथामुखीनोऽग्रतः स्थायी भूत्वा बहु

लोमयम् चक्षुःस्पृहां जनयन् पुप्लुवे भ्रमतिस्म प्लुङ्गतौ द्वौ चित्रं करोतीति चित्रीयमाणः चित्रङ्श्चाश्चर्य्ये कण्ड्वादित्वात् क्यः ङित्वादात्मनेपदं हेम रत्नस्य प्रस्तुतं यत्रेति प्रस्तुतार्थे मयट् बाहुल्यात् विकारइत्येके मुखस्य सदृशं यथामुखं दर्पणादिस्थ प्रतिविम्बमुच्यते सादृश्येऽव्ययीभावः मृगस्य रत्नमयत्वेन स्वच्छ तया यथा मुखं दृश्यतेऽत्रेति विकारसंघेत्यादिना तदत्र दृश्यते इत्यर्थे ईनःवस्तुतस्तु उपचारात् यथामुखीनशब्दोऽभिमुखमात्रेऽपि वर्त्तते सीताभिमुखोभूत्वेत्यर्थः ॥ ४८ ॥

तेनादुद्यूषयद्रामं मृगेण मृगलोचना। मैथिली विपुलोरस्कं प्रावुवूर्षुर्मृगाजिनं ॥ ४९ ॥

तेना। तेन मृगेण मैथिली सीता राममदुद्यूषयत् क्रीडितु जंगमिकन्तुमयुक्तवती गृहाणामयमिति इवन्तस्य दिवेः सनीवन्तेत्यादिना यदा नेट् तदा च्छ्वोःशूट् द्विर्व्वचनम् तस्मात्सनन्तण्य न्तात् लङि रूपम् मृगलोचना मृगस्य लोचने इव लोचने यस्याः मध्यपदलोपी सः विपुलोरस्कं विस्तीर्णवक्षस्थलमुरःप्रभृतिभ्यः कप् किमर्थमदुद्यूषयत् मृगाजिनमृगचर्म्म प्रावुवूर्षुः प्रावरितुमिच्छुः प्राङ्पूर्व्वस्य वृङ इट्सनिवेत्यनिट्पक्षे अज्झनगमां सनीति दीर्घः उदोष्ठ्यपूर्व्वस्येत्युत्वम् रपरत्वं र्वोरुपधायादीर्घ इकः द्विर्व्वचनम् इणकोरिति षत्वम् रेफस्येण्ग्रहणेन ग्रहणाद्द्वयोष्ठ्योऽपि वकार ओष्ठ्यग्रहणेन गृह्यते ॥ ४९ ॥

भ० तेनेत्यादि। मैथिली मृगाजिनं मृगस्य चर्म्म प्रावुवूर्षुः प्रावरीतुं परिधातुमिच्छुः सती तेन मृगेण रामं प्रदुघूषयत् क्रीडितुमिच्छामकारयत् दिवेः सन् भ्रस्जश्रिस्वृयूर्णुभरदरिद्रेत्यादिना पक्षेऽनिम् पूर्णाजिमीति गुणाभावे छ्वोःशूठाविति वस्य ऊलं ततोद्वित्वं ञिःप्रेरणे दिवेरकर्म्मकत्वात् घोर्ञोर्ञेरिति प्रयोज्यकर्त्तुः कर्म्मत्वं सा कीदृशी मृगस्येव लोचने यस्याः सा तथा रामं कीदृशं विपुलं प्रकीर्णमुरोवक्षःस्थलं यस्य तं उरःप्रभृतितः कोवङ्कश्रीत्वाविति परः समते स्वार्थे कः प्रावुवूर्षुरिति वृञ्वरणे सन् घोंऽज्झनिङ्गमां स्याद्‌दृदुरिति पक्षेऽनिम् दन्त्योष्ठ्यस्यौष्ठ्यकार्य्यत्वात् ऋदिरणावूर्लोष्ठ्यादिति उर् व्यञ्जनचतयीति र्घः॥ ४९॥

योगक्षेमकरं कृत्वा सीतायां लक्ष्मणं ततः। मृगस्यानुपदी रामो जगाम गजविक्रमः॥ ५०॥

ज०म० योग। ततोदुघूषानन्तरं रामोजगाम योगक्षेमौ शरीरस्थितिपालने करोतीति क्षञोहेत्वित्यादिना हेतौ टः ग्रहणवता तदन्तविधेरभावात् क्षेमप्रियमद्रेण्चेत्यण्‌खचौ न भवतः सीतायाः स्थितिपालनहेतुभूतं लक्ष्मणं कृत्वा रामः मृगस्यानुपदी अन्वेष्टा अनुपद्यन्वेष्टेति निपातनात्साधुः गजविक्रमः गजगमनमिव गमनं यस्येत्यर्थः॥ ५०॥

भ० योगेत्यादि। ततोऽनन्तरं लक्ष्मणं जानक्या योगक्षेमकरं

त्वला गजविक्रमो हस्तिपराक्रमो हस्तिगमनतुल्यगमनोवा रामो मृगस्यानुपदी सन् जगाम फलपुष्पादेरलब्धस्य साधनं योगः शरीरादेर्लब्धस्य पालनं चेमः तौ करोतीति लुकुष्टः अनुपदं यातीति वाक्यात् इन् अनुपदमनुगमनं विद्यतेऽस्येति नैकाजादिति इन् अन्वेष्टर्य्यनुपदादिनिति परसूत्रं ॥ ५० ॥

स्थायं स्थायं क्वचिद्यान्तं क्रान्त्वा क्रान्त्वा स्थितं क्वचित्।
वीक्षमाणोमृगं रामश्चित्रवृत्तिं विसिष्मिये॥५१॥

स्थायम्। मृगश्चित्रवृत्तिमद्भुतशरीरचेष्टं वीक्षमाणोरामो ज॰म॰ विसिष्मिये विस्मितः स्मिङोङित्त्वादात्मनेपदं षोपदेशत्वाभावे णः परस्य सस्य षः चित्रवृत्तितां दर्शयन्नाह स्थायं स्थायं स्थित्वा स्थित्वा क्वचित्प्रदेशे यान्तं क्रान्त्वा क्रान्त्वा क्वचित्प्रदेशे उत्प्लुत्योत्प्लुत्य स्थितम् आभीक्ष्ण्ये णमुलि क्त्वाच्लेणमुलौ द्विर्व्वचनञ्च ॥ ५१ ॥

स्थायमित्यादि। मृगं वीक्षमाणो रामोविसिष्मिये विस्मितः भ॰ स्मिङश्चां रूपं षोपदेशत्वात् खरित्वात् फलं अुध्वोरितीयः विस्मये हेतुमाह चित्रवृत्तिं आश्चर्य्यचेष्टं चित्रवृत्तित्वं दर्शयति स्थित्वा स्थित्वा क्वचित् गच्छन्तं णमुलाभीक्ष्ण्यपूर्व्वकाले इति णमुल् आभीक्ष्ण्ये द्वित्वं लोकतः सिद्धमिति स्मारं स्मारं नमतीत्युदाहरणेन ज्ञापितं क्वचित् क्रान्त्वा क्रान्त्वा उत्प्लुत्य उत्प्लुत्य स्थितं क्रमोर्गी वेति पक्षे दीर्घः॥ ५१ ॥

चिरं क्लिशित्वा मर्म्माविद्रामोविलुभितप्लवं । शब्दा यमानमव्यात्सीत् भयदं क्षणदाचरं ॥ ५२ ॥

ज०म० चिरम् । रामः क्षणदाचरमारीचमव्यात्सीत् विद्धवान् व्यधे लुङि हलन्तलक्षणावृद्धिः मर्म्माविद्रामः मर्म्माणि विध्यतीति क्विप् नहिवृतीत्यादिना पूर्व्वपदस्य दीर्घत्वं चिरं क्लिशित्वा महान्तङ्का लमायस्य अत्यन्तसंयोगे द्वितीया क्लिशः क्त्वानिष्ठयोरिति विक ल्पेनेट् तत्र रलोव्युपधादिति कित्वविकल्पे मृडमृदेत्यादिना कित्त्वं विलुभितप्लवं व्याकुलितगमनं लुभोविमोहन इतीट् विमो हनं व्याकुलीकरणम् शब्दायमानं शब्दङ्कुर्व्वाणं शब्दवैरेति क्यङ् भयदङ्क्षिशाचरं शब्दविशेषणं वा ॥ ५२ ॥

भ० चिरमित्यादि । रामश्चिरकालं क्लिशित्वा आर्त्तोभूत्वा भयदायकं क्षणदाचरं तं राक्षसं अव्यात्सीत् व्यधोताडे टी पूक्लिशुदितइम् इति क्लिशेः पक्षे इम् सेमचुधेत्यादौ क्लिशवर्ज्ज नात् न गुणः मर्म्माणि विध्यतीति क्विप् जिः वीरुद्धोधक्कावित्ति दीर्घनिर्द्देशात् क्वचित् क्विवन्ते पूर्व्वपददीर्घत्वं स्यादिति सूचितं आङ्पूर्व्वस्य रूपं वा मर्म्मावित् मर्म्मज्ञोवा वेत्तेरूपं विलुभितप्लवं मर्म्मताडनात् व्याकुलगतिं लुभश्वविमोहने विमोहनं व्याकुलीक रणं क्षुधवसपूजेत्यादिना इम् शब्दायमानं शब्दं कुर्व्वाणं शब्द सुखकष्टादेरिति क्यः भयदमिति मृगस्य शब्दक्रियाया वा विशे षणं ॥ ५२ ॥

श्रुत्वा विस्फूर्जथुप्रख्यं निनादं परिदेविनी । मत्वा कष्टश्रितं रामं सौमित्रिं गन्तुमैजिहत् ॥ ५३ ॥

श्रुत्वा। विस्फूर्जथुप्रख्यं वज्रनिर्घोषतुल्यं टुओस्फूर्जावज्रनिर्घोषे ड्वितोऽथुच् निनादं शब्दं नौगदनदेति विकल्पनात् पक्षे घञ् श्रुत्वा मैथिली कष्टश्रितं कृच्छ्रप्राप्तं रामं द्वितीयाश्रितेत्यादिना सः मत्वा बुद्ध्वा कृच्छ्रप्राप्तेन रामेण मृतमिति परिदेविनी परिदेवन शीला शङ्कमाना सम्पृचानुरुधेत्यादिना घिनुण् सौमित्रिङ्ग न्तुमैञ्जिहत् ईहाञ्चकारितवती ईहेर्ण्यन्तात् लुङि द्विर्वचनेऽचीति स्था निवद्भावादजादेर्द्वितीयस्येति हिशब्दस्य द्विर्वचनम् अभ्यास कार्य्यञ्च ॥ ५३ ॥ अ०म०

श्रुत्वेत्यादि। विस्फूर्जथुप्रख्यं वज्रनिर्घोषतुल्यं निनादं श्रुत्वा कष्टश्रितं कष्टं प्राप्तं रामं मत्वा परिदेविनी परिदेवनशीला अर्थात् सीता सौमित्रिं गन्तुं ऐजिहत् चेष्टामकारयत् ईहङ्चे ष्टायां णिःप्रेरणे अङि द्वित्वं ड्वोस्फूर्जावज्रनिर्घोषे दीर्घवाणि त्यके ड्वितोऽथुर्भावे ॥ ५३ ॥ भ०

एष प्रावृषिजाम्भोदनादी भ्राता विरौति ते। भ्रा तेयं कुरु सौमित्रे भयात्त्रायस्व राघवं ॥ ५४ ॥

एष। एष ते भ्राता रौति उतोवृद्धिरित्यौकारः प्रावृषि जातः प्रावृषिजः सप्तम्याञ्जनेर्डः प्रावृड्ित्यादिना सप्तम्या अलुक् सचाम्भोदस्येति विशेषणमिति सः तद्वन्नदतीति कर्त्तर्य्युपमाने णिनिः तस्मात्सौमित्रे भ्रातेयं भ्रातिभावन्तत्कर्म्म वा कुरु कपिभ्रा त्योर्ढक् तेन भयात्त्रायस्व राघवम् ॥ ५४ ॥ अ०म०

भ० एषइत्यादि। हे सौमित्रे एष ते तव भ्राता किरौति शब्दा यते हलध्वनौ रपिङ्कुलुतोऽदेर्मिः प्रावृषि वर्षाकाले जातः प्रावृ षिजः हनजनादिति डः सरसिजमित्युदाहरता क्वचित् समासे विभक्तेरलुगिति सूचितं अम्भोददातीति अम्भोदः पूर्व्ववत् डः प्रावृषिजश्चासौ अम्भोदोमेघश्चेति सइव नदतीति ग्रहादित्वा णिन् त्वं भ्रातेयं भ्रातिकर्म्म कुरु किम्वदित्याह भयाद्राघवं चाय स्व त्रिकारसंघेत्यादिना कर्म्मण्यर्थे भ्रातेः ण्येयः ॥ ५४ ॥

रामसंघुषितं नैतन्मृगस्यैव विवञ्चिषोः। रामस्व
नितसङ्काशः स्वान इत्यवदत्स तां ॥ ५५ ॥

ज०म० राम। रामसङ्घुषितं रामशब्दितमेतन्न भवति घुषिरवि शब्दार्थः तस्य निष्ठायां रुष्यमलरेत्यादिना विकल्पेनेट् मृगस्य विवञ्चिषोः छलयितुमिच्छोः वञ्चु गतौ भौवादिकः तस्यानेकार्थ त्वात् प्रलम्भनइति चौरादिकस्याण्यन्तस्य वा प्रयोगः येषामनि त्यण्यन्ताश्चुरादयइति दर्शनं तेषां मतेनाचापि सिध्यति एष स्वानोध्वानः स्वनहसोर्वेति पक्षे घञ् कीदृशः रामस्वनितसङ्का शः रामशब्दानुकारीति तां सीतां एवमवदत् उक्तवान् सल क्ष्मणः ॥ ५५ ॥

भ० रामेत्यादि। सलक्ष्मणस्तां सीतां इत्यवदत् किम्वदित्याह एतन्न रामसंघुषितं घुषरवे विवञ्चिषोर्म्मञ्चयितुं छलयितुमिच्छो र्मृगस्यैव एष स्वानः शब्दः रामस्वनिततुल्यः वञ्चकत्वञ्चने कित्वात् चौरादिकः वञ्चनं प्रलम्भनं युर्भोज्भिर्व्वेति ज्यभावपक्षे

रूपमिदं केचित्तु वस्त्रगत्यां चौरादिकोधातोरनेकार्थत्वात् प्रस
भनेऽपि वर्त्तत इत्याहुः स्वनशब्दे भावे क्ते स्वनितं घञि स्वानः
॥ ५५ ॥

आप्यानस्कन्धकण्ठांसं रुषितं सहितुं रणे। प्रोर्णु
वन्तं दिशोवाणैः काकुत्स्थं भीरु कः क्षमः ॥ ५६ ॥

आप्या। प्यैङ्वृद्धौ अस्मादाङ्पूर्व्वात्संयोगादेरातोधातो ज॰म॰
र्य्यण्वत इति निष्ठातोनः ओप्यायीवृद्धावित्यस्य वा रूपम्
ओदितश्चेति निष्ठानत्वं पीभावस्तु आङ्पूर्व्वस्य त्वन्धूधसोरिति वच
नात् इह न भवति आप्यानस्कन्ध इति आप्यानं स्थूलं स्कन्ध
कण्ठांसं यस्य काकुत्स्थस्य वाहुशिरोंऽसः तस्य पश्चिमोभागः
स्कन्धः तं रुषितं क्रुद्धं रणे संग्रामे सहितुं हे भीरु कातरे कः क्षमः
शक्तः अपि तु न कोऽपीत्यर्थः क्षमेः शक्नोत्यर्थत्वात् तदुपपदे शक
धृषेत्यादिना तुमुन् तीषसहेत्यादिना वेट् ककुत्स्थस्यापत्यं का
कुत्स्थः शिवादिभ्योऽण् कस्मान्न क्षम इत्याह प्रोर्णुवन्तन्दिशोवाणैः
यतः सर्व्वा दिशः वाणैः छादयन्तं ऊर्णोतेः शतरि उवङ् क्षमत
इति क्षमः पचाद्यच् ॥ ५६ ॥

आप्यानेत्यादि। हे भीरु कातरस्वभावे रणे रुषितं क्रुध्यन्तं का भ॰
कुत्स्थं रामं सहितुं अभिभवितुं कः क्षमः शक्तः न कोऽपीत्यर्थः
क्षमसहलुभरुषेत्यादिना उभयत्र पक्षे इट् क्षमेः पचादित्वादच्
ककुत्स्थस्यापत्यं इति शिवादित्वात् ष्णः आप्यानं स्थूलं स्कन्धक
ण्ठांसं यस्य तं ओप्यायीङ् वृद्धौ ओदित्वात् स्वाद्योदिति क्तस्य
नकारः ध्योर्लोपो वलि ये इति वलोपः आङोऽन्धूधसोरिति निय

मात् न यादेश: पैङ्क्त्वद्वावित्यस्य रूपं वा अंसोभुजशिर: वाचे दिश: प्रोर्णुवन्तं आच्छादयन्तं ॥ ५६ ॥

देहं विभ्रक्षुरस्ताग्नौ मृगः प्राणैर्दिदेविषन्। ज्याघुष्टकठिनाङ्गुष्ठं राममायान्मुमूर्षया ॥ ५७ ॥

ज०म० देहम्। एष मृगोराममायात् आगतवान् यातेर्लङि रूपम् किमर्थं देहं शरीरं अस्ताग्नौ अस्ते अग्नाविव विभ्रक्षुः भ्रष्टुमिच्छुः भ्रस्जेः सनीवन्तर्द्धेत्यनेनेड्भावपक्षे स्कोःसंयोगाद्योरित्यनेन सलोपे षत्वकुत्वयोश्च रूपम प्राणैर्दिदेविषन् क्रीडितुमिच्छन् दिवः कर्म चेति चकारात् करणसंज्ञा सनीवन्तेतीट् पक्षे रूपम् ज्यया गुणेन घुष्टौ निघृष्टौ ततएव कठिनौ अङ्गुष्ठौ सव्यापसव्यकर्षणाद्यस्य घुषिरविशब्दनइति निष्ठायामनिट् मुमूर्षयः मर्त्तुमिच्छया मृङ् सनि उदोष्ठ्यपूर्व्वस्येत्युत्वम् अः प्रत्ययात् ॥ ५७ ॥

भ० देहमित्यादि। एष मृगोमुमूर्षया मर्त्तुमिच्छया राममायात् आगच्छत् याप्रापणे षो मृङः सनि धौऽज्झनिङ्गमामिति दीर्घे च्छादिरणाविति उर् रामस्य अस्त्रमग्निरिव तत्र स्वदेहं भ्रष्टुमिच्छुः भ्रस्जः सनि भ्रस्जग्रिस्वृयूर्णुभरइति इमोऽभावपक्षे स्वादेः वोलोपः शच्छ्राजिति षङ् षढोःकःसे प्राणैर्दिदेविषन् क्रीडितुमिच्छन् इवन्तत्वात् पूर्व्वेण पक्षे इम् ज्याघुष्टोधनुर्गुणनिष्पिष्टः कठिनाङ्गुष्ठोयस्य तं रामं घुषशब्दे क्षुब्धवाढेत्यादिना निपातः निपातात् निष्पेषणार्थोऽपि गम्यते गुणनिष्पेषेऽङ्गुष्ठकाठिन्यं युक्तं निपातोऽपि शब्दार्थ एव इति चेत् ज्यया घुष्टः शब्दितः सुशब्दितः कठिनाङ्गुष्ठोयस्येति ॥ ५७ ॥

अत्रून् भीषयमाणं तं रामं विस्मापयेत कः। मास्म भैषीस्त्वयाद्यैव कृतार्थोऽद्रक्ष्यते पतिः॥ ५८॥

अत्रून्। तं रामं अत्रून् भीषयमाणभीतान् कुर्व्वाणं भियोहे जं०म० तुभये षुक् भीस्म्योर्हेतुभयइति तङ् विस्मापयेत कः क्षुभितचित्त कुर्य्यात् नैवेत्यर्थः नित्यं स्मयतेरिति णावात्वम् अर्तीत्यादिना पुक् निमन्त्रणे नियोगे वा लिङ् पूर्व्ववदात्मनेपदं तस्मात्मास्म भैषीः माभूर्भीता स्मोत्तरे लङ्चेति चकारात् लुङ् सिचि वृद्धिः त्वया अद्यैव कृतार्थः पूर्णमनोरथः पतिर्द्रक्ष्यते दृशेः कर्म्मणि लृट्॥ ५८॥

अत्रूनित्यादि। अत्रून् भीषयमाणं भीतान् कुर्व्वाणं रामं को भ० विस्मापयेत क्षुभितहृदयं कुर्य्यात् न कोऽपीत्यर्थः स्मिभ्योर्घात्वर्थं मस्त्रेति स्मिधातोरिकार आ मस्त्र भीर्भीष्वेति भियः पक्षे भीषा देशः तस्मात् त्वं मा भैषीः भयं न कुरु मास्मेनघोव्याविति टौ अजवदेति त्रिः मायोगे अमागमाभावः त्वया अद्यैव कृतार्थः कृतकृत्यः पतिर्द्रक्ष्यते दृशः कर्म्मणि तौ वर्द्धोऽकिण्मसदूति रेफः॰॥ ५८॥

यायास्त्वमिति कामोमे गन्तुमुत्सहसे न च। इच्छुः कामयितुं त्वं मामित्यसौ जगदे तया॥ ५९॥

याया। तदन्वेषणाय यायास्त्वमिति कामोऽभिलाषः काम जं०म० प्रवेदने कच्चिति इत्यकच्चित्युपपदे लिङ् न च गन्तुमुत्सहसे अक

धृषेति तुमुन् तस्मात्त्वमात्मानं कामयितुमिच्छुः एवंवादीत्यसमान कर्त्तृकेषु तुमुन् विन्दुरिच्छुरिति निपातनात्साधुः इत्येवमसौ लक्ष्मणो जगदे गदितस्तया सीतया ॥ ५९ ॥

भ० याथा इत्यादि। त्वं रामान्वेषणाय याथा इति मे मम कामोऽभिलाषः कामोऽस्त्यकथितीति त्वं मत्तु गन्तुं उत्सहसे तस्मात्त्वं मां कामयितुं इच्छुः इच्छतीति इच्छुः विन्दिच्छू इति निपातः कमच्छतोगुपूधूपेति कमेर्णिङ् इत्यसौ लक्ष्मणस्तया सीतया जगदे कर्म्मणि ठी ॥ ५९ ॥

मृषोद्यं प्रवदन्तीं तां सत्यवद्योरघूत्तमः। निरगात् प्रत्नुहस्तं त्वं यास्यसीति शपन् वशी ॥ ६० ॥

ज०म० मृषो। माङ्कामयितुमिच्छुरित्येतन्मृषोद्यम् मृषावादं राजसूयेत्यादिना भावे क्यप् यजादित्वात्सम्प्रसारणं प्रवदन्तीं तां सीतां रघूत्तमो लक्ष्मणः शपन् प्रत्नुहस्तं त्वं यास्यसीति शापमयच्छन् भौवादिकोऽत्र शपिर्न दैवादिकः निरगात् निर्गतः तस्मादुटजादित्यर्थात् कथं मृषोद्यमित्याह वशी वशनं वशः इन्द्रियसंयमनं वशिरण्यादेरुपसंख्यानमित्यप् सयस्यास्ति सवशी जितेन्द्रियः अतएव सत्यवद्यः अवितथवादी प्रत्नुहस्तं यास्यसीति सत्यं वदतीति कृत्यल्युटो बहुलमिति कर्त्तरि यत् वदःसुपि क्यप् चेति चकारात् भावे वा यतं विधायार्श आदित्वात् ॥ ६० ॥

भ० मृषोद्यमित्यादि। त्वं प्रत्नुहस्तं यास्यसीति तां सीतां शपन् शापं प्रयच्छन् रघूत्तमो लक्ष्मणो निरगात् निर्गतः इत्यगतो

गाथ्यां भूस्येति सेर्लुक् इच्छुः कामयितुं मामिति मृषोद्यं मिथ्या वादं प्रवदन्तीं मृषोपपदे वदेर्नित्यं क्यप् सेर्व्वदःक्यप्यावित्य नन्तरं मृषोद्यं नित्यमित्युक्तं यहस्यपाद्योरिति जिः सत्यं वदतीति हल्डोः कभावइत्युक्तेः कर्त्तरि यः सत्यवद्यः सेर्व्वदःक्यप्याविति भावे ये सत्यं वद्यं विद्यते अस्येति अर्शआदित्वादद्वा सत्यं वद्यं अस्येति वज्रव्रीहिर्व्वा यद्वा वदनं वत् वदस्थैर्य्ये क्विप् विकारसंघेत्यादिना तत्र साधावर्थे यः सत्यस्य करणे साधुरित्यर्थः वशी जितेन्द्रियः वशइन्द्रियसंयमः सोऽस्यास्तीति नैकाजादिति इन् अतएव सत्यवद्यः॥ ६०॥

कुलकं।

गते तस्मिन् जलमुचिः शुद्धदन्नावणः शिखी। जंजपूकोऽक्षमालावान् धारयो मृदलावुनः॥ ६१॥

गते। तस्मिन् लक्ष्मणे गते सति रावणः सीतामूच इति वक्ष्य अं०म० माणेन सम्बन्धः कीदृशः जलमुचिः स्नातइत्यर्थः शुद्धदन् निर्मलदशनः शुद्धा दन्ता यस्य अग्रान्तेत्यादिना दन्तस्य दत्रादेशः शिखा अस्यास्तीति शिखी परिव्राजकः व्रीह्यादित्वादिनिः जंजपूकः पापाश्रयत्वात् गर्हितञ्जपतीति लुपसदेति यङ् जपजभेत्यभ्यासस्य नुक् यजजपदशां यङ इत्यूकः अक्षमालावान् अक्षसूत्रयुक्तः संसर्गे मतुप् धारयतीति धारयः अनुपसर्गादिति शः कस्य मृदलावुनः नञ्जिलंम्बेर्नलोपश्चेत्यौणादिकजकारे प्रत्यये अलावूः तस्य विकारः फलमिति ओरञ् तस्य फले लुक्

नपुंसकह्रस्वत्वम् स्मृत्पूर्णमलावु इति मध्यपदलोपी सः क्तप्रयोगे कर्मणि षष्ठी इकोऽचिविभक्ताविति नुम्॥ ६१॥

भ० गतेइत्यादि। तस्मिन् लक्ष्मणे गते सति रावणः समागम्य सीतामूचे इति चतुर्थश्लोकेनान्वयः कीदृशः जलशुचिः जलेन शुचिः स्नातत्वात् शुद्धा निर्मला दन्ता यस्येति शुद्धदन् निपातनात् शिखी शिखायुक्तः नैकाजादिति इन् पापाश्रयत्वात् गर्हितं जपतीति जञ्जपूकः गत्यर्थात् लुपेत्यादिना यङ् जमजप जभेति सूत्रेण जागृयङन्तयजजपेति ऊकः यङोलुक् अक्षमालावान् अक्षसूत्रयुक्तः मृदलावुनोधारयः धारयतीति साधि सातिचेतीति शः ढे षी मृच्च अलावुश्च इति समाहारद्वन्द्वे वर्गे क्वचं क्लीवं मृत्पूर्णमलावु मृदलावु वा भवेदलावुरालावुरालावुश्चादलावुचेति शब्दभेदः अलावुस्तुम्बीफलं मृत् तीर्थमृत्तिका ॥ ६१ ॥

कमण्डलुकपालेन शिरसा च मृजावता संवस्य लाक्षिके वस्त्रे मात्राः संभाण्ड्य दण्डवान्॥ ६१ ॥

ज०म० कम। कमण्डलुना कपालेन च जातिरप्राणिनामिति द्वन्द्वैकवद्भावः मृजावता निर्मलेन शिरसा च उपलक्षित इत्यम्भूते तृतीया संवस्य परिधाय वस्त्राच्छादने इति मुण्डमिश्रेत्यादिना णिच् लाक्षिके वस्त्रे लाक्षया रक्ते लाक्षारोचनेत्यादिना ठक् मात्राः कमण्डल्वादिकान् संभाण्ड्य समाचित्य राशीकृत्येत्यर्थः

भाण्डात्समाचयनइति पुच्छभाण्डेत्यादिना णिङ् दण्डवान् गृहीतत्रिदण्डः संसर्गे मतुप् ॥ ६२ ॥

कमेत्यादि। कमण्डलुश्च कपालोभिक्षापात्रञ्चेति समाहार भ॰ द्वन्द्वः तेन उपलक्षितः केचित्तु कं जलं पालयतीति कपालः कमण्डलुश्चासौ कपालश्चेति कर्म्मधारयः तेन उपलक्षितः परिव्राजकोहि दक्षिणकरे सजलं पात्रं धारयतीति भावइत्याङ्कः मृजावता मार्जनायुक्तेन शिरसा उपलक्षितः मृजलूषष्ठुद्धौ षित्त्वात् भीषिचिन्तीत्यादिना ङः स्त्रीलिङ्गत्वञ्च विशेषणे तृतीया लाक्षिके वस्त्रे संवस्य परिधाय ञिःकत्त्वादेरिति वस्मात् समाच्छादने परिधाने च ञिः संपूर्व्वस्यैव तदभिधानशक्तिः प्रकृत्यर्थपरित्यागस्तु धातोः स्वभावात् यदुक्तं विशेषकर्म्मसम्बन्धात् प्रकृतेस्तु गतार्थतेति लाक्षया रक्ते लाक्षिके विकारत्येत्यादिना तेन रक्तेऽर्थे ष्णिकः मात्रां परिच्छदं कमण्डलुप्रभृतिं संभाण्ड्य समाचित्य युगद्दहनार्थं राशीकृत्य भाण्डानि संचिनोतीत्यर्थे पूर्व्ववत् ञिः प्रकृत्यर्थत्यागः संपूर्व्वतानियमश्च मात्रा कर्णविभूषणे। अक्षरावयवे वृत्ते मानेऽल्पे च परिच्छदेइति विश्वः दण्डवान् गृहीतदण्डः ॥ ६२ ॥

अधीयन्नात्मविद्विद्यां धारयन्मस्करिव्रतं। वदन् वल्गङ्गुलिस्फोटं भूक्षेपञ्च विलोकयन् ॥ ६३ ॥

अधी। मा कुरुत कर्म्माणि शान्तिर्व्वः श्रेयसीत्येवञ्चोषयन्ति ज॰म॰ ये ते मस्करिणः परिव्राजकाः तेषामेतमक्रमसौ धारयन्

मस्करमस्करिणाविति परिव्राजके क्षुट् आत्मविदां योगिनां विद्यामुपनिषदमधीयन् जपन् ईङ्‌धार्य्योरिति ःःङोधारेश्च शतृ भवति कर्त्तरि शतृप्रत्ययः अन्तरा वक्ता प्रभूतं वदन् अङ्गुलिस्फोट मुनः स्फोटिकान्द्‌त्वा भ्रूक्षेपस्य विलोकयन् भ्रुवावुत्क्षिप्योत्क्षिप्य विलोकयन् उभयत्रापि स्वाङ्गेभ्रुवदति णमुल् ॥ ६२ ॥

भ० अधीत्यादि। आत्मविदां योगिनां विद्यामुपनिषदं अधीयन् पठन् धारीङोरकृच्छ्रे शतृरिति परस्मं स्मरते कचिदभिधानात् आत्मनेपरस्मैपदिनोः परस्मैपदात्मनेपदिता मस्करिणः परिव्राजकस्य व्रतं धारयन् अङ्गुलीस्फोटं अङ्गुलीं स्फोटयित्वा वक्ता वदन् मितभाषितया वक्ता हस्तसंज्ञयैव वदतीति भावः भ्रूक्षेपं भ्रुवमुत्क्षिप्य विलोकयन् ऋजुतया कटाक्षाद्यभावदर्त्या मयः उभयत्र पोष्यमाणात्स्वाङ्गाक्षमिति परः वक्ता अङ्गुलेः स्फोटो यत्र वदनक्रियायां भ्रुवोः क्षेपोयत्र विलोकनक्रियायां स्फोटक्षेपौ णमुलौ ॥ ६२ ॥

संदिदर्शयिषुः साम निजुन्हुषुः त्रपाटतां। चंक्रमावान् समागत्य सीतामूचे सुखाभव ॥ ६४ ॥

ज०म० संदि॥ इह भयमाभूदिति साम सान्त्वं सन्दिदर्शयिषुः सन्दर्शयितुमिच्छुः वदन् वक्रङ्गुलिस्फोटमिति योऽयं हृग्रेर्णन्तसनन्तले रूपं त्रपाटतां राक्षसत्वनिजुन्हुषुर्निन्होतुमिच्छुः धारयन्मस्करिव्रतमिति योऽयम् म्होतेरजन्तगमांसनीति दीर्घः कुटिलं क

मवत्स्वङ्गमा क्रमेर्नित्यङ्कौटिल्ये गताविति यङ् नुगत इत्यभ्यासस्य नुक् अःप्रत्ययादित्यकारः अतोलोपः यस्य हलः टाप् सा यस्यास्ति चङ्क्रमावान् कुटिलगतिमानित्यर्थः समागत्य ढौकित्वा सीता मूचे किमित्याह सुखाभवेति अनुकूला भवेत्यर्थः यदहमार्थये तत्र प्रतिकूला न भवेति भावः सुखप्रियादानुलोम्यइति डाच्प्रत्ययः वीगे डाच् ॥ ६४ ॥

सन्दीत्यादि। साम सान्त्वं संदर्शयितुमिच्छुः इशेर्न्यन्तात् भ॰ मन् अपाटतां राक्षसभावं निह्नोतुमिच्छुः ह्नुङ्ल्चार्थ्ये सनि घीं ऽज्झनिङ्गमामिति र्घः चंक्रमावान् कुटिलगतियुक्तः अमेध्यादि खलपरिजिहीर्षया चित्तशाठ्यं वा कौटिल्यं गत्यर्थाङ्लुपेति यङ् ञमजपेति खेर्नुण् यङोलुक् अस्यादः ततोवतुः ईटञ्सः सन् समागम्य सुखाभव यदहं याचे तत्रानुकूला भवेति सीतामूचे सपत्रनिष्यमेत्यादिना सुखादानुकूल्ये डाच् यद्यपत्र तीयसम्बवीजे त्यादिसूत्रात् क्ञोत्यनुवर्त्तते तथापि मण्डूकप्लुताधिकारात् चिः छभ्यस्सभूततद्भावइति सूत्रात् छभ्यस्तित्यस्यानुवर्त्तनं बोध्यं प्रयोगदर्शनात् कृत्तीक्ञोति लिपिकरप्रमादात् वाऽक्ष्यार्थं वा किम्वा सुखं विद्यते यस्यादित्यर्शआदित्वात् अः ततश्चाप् ॥ ६४ ॥

सायन्तनीं तिथिप्रण्यः पङ्कजानां दिवातनीं। कान्तिं कान्त्या सदातन्या ह्रेपयन्ती शुचिस्मिता ॥ ६५ ॥

सायम्। कान्तिमिति वक्ष्यमाणेन सम्बन्धः सायन्दिनावसानन्तत्र ज॰भ॰ भवाङ्कान्तिम् यदा षोऽन्तकर्मणीत्येतस्मात् घञ्प्रत्ययान्तः तदा

सायश्चिरेति टुच्युलौ तुट् च मकारान्तत्वञ्च निपात्यते यदा सायंशब्दोमकारान्तः तदाव्ययत्वादेव प्रत्ययागमौ स्यातां कस्येत्यपेक्षायां तिथिप्रण्यः चन्द्रमसः पञ्चदश कलाः तासां वृद्धि ह्रासाभ्यां पञ्चदशतिथीः प्रणयति प्रवर्त्तयति सत्सूद्विषेति क्विप् उपसर्गादसमासेति णत्वम् एरनेकाचइति यणादेशः पङ्कजा नाञ्च कान्तिङ्कीदृशीन्दिवातनीन्दिवाभवां कान्त्या त्वदीयया श दातन्या सदाभवया ह्रेपयन्ती लज्जयन्ती दिवातन्याः सायन्त न्याश्च सदाभवत्वात् जिह्रीतेरर्त्तीत्यादिना णौ पुक् शुचिस्मिता शुभ्रहासा ॥ ६५ ॥

भ० सायमित्यादि। का त्वमेकाकिनीति द्वितीयश्लोकेन सम्बन्धः तिथिप्रण्यश्चन्द्रस्य सायन्तनीं दिनावसानभवां कान्तिं तथा पङ्क जानां पद्मानां दिवातनीं दिनभवां कान्तिं स्वकान्त्या ह्रेपयन्ती लज्जयन्ती कीदृश्या सदातन्या सर्व्वकालस्थितया चन्द्रपद्मयोस्तु प्रभा न सदा तिष्ठतीति लज्जाहेतुः पञ्चदशतिथीः प्रणयति प्रव र्त्तयतीति तिथिप्रणीश्चन्द्रः तस्य ह्रासवृद्धिभ्यामेव ज्योतिःशास्त्रे तिथिनिरूपणात् त्रासुषिति क्विप् प्राग्वन्नोणइति णत्वं कव्याद्यने काचइति यत्वं तिथिप्रणीर्दशविपत्निशामणिस्त्रिनेत्रचूडामणिर त्रिनेत्रभूरित्यमरः मन्मथेनार्पिता छाया सैव कान्तिरिति स्मृते र्ति परिभाषिता कान्तिः सीतायाः चन्द्रपद्मयोस्तु शोभामात्रं कान्तिरिति बोध्यं त्यजाद्यश्चिरदक्षिणेत्यादिना सायंदिवासदा शब्देभ्यस्तनट् भवार्थे शुचिस्मिता शुद्धहासा स्मितन्त्वदृष्टदशने हासे इति वैजयन्ती ॥ ६५ ॥

का त्वमेकाकिनी भीरु निरन्वयजने वने। क्षुध्यन्तो ऽप्यघसन् व्यालास्त्वामपालां कथन्न वा ॥ ६६ ॥

कालम्। का त्वन्देवी मानुषी राक्षसी वेति एकाकिनी असहाया एकादाकिनिच्चासहायइति आकिनिच् भीरु इत्यामन्त्रणभयप्रकृतित्वात् स्त्रीणाम् निरन्वयानिरनुगमाजनायस्मिन्वने यत्र न कथञ्चिन्मनुष्याणां सम्भवः क्षुध्यन्तोऽपि बुभुक्षमाणाअपि दिवादित्वात् यत् व्यालाहिंस्राव्याघ्रादयः कथं वा त्वान्नाघसन् न भक्षितवन्तः अदेः लुङ्सनोर्घस्लृ लृदित्वाच्च्लेरङ् क्षुध्यन्तोनाघसन्निति पाठान्तरम् तत्र कथन्न वा अपरिचितानेवाघसन् इति योज्यम् अपालां सतीं अविद्यमानः पालोयस्याइति पालरक्षण इति चौरादिकः पालयतीति पालः पचाद्यच् यदा प्रयोजकविवक्षा तदा पातेर्लुगागमो णौ वक्तव्यइति लुक् ततः पचाद्यच् ॥ ६६ ॥ 

का त्वमित्यादि। हे भीरु वने एकाकिनी का त्वं देवी मानुषी अन्या वा वने किम्भूते निरन्वयजने निरन्वयानिःसम्बन्धाजनायत्र भीरु इति सम्बोधनं भयप्रकृतित्वान्नारीणां जातिभेदस्य प्रत्यक्षत्वाद्वा एकादाकिन्नसहायेऽभिधानात् क्षुध्यन्तोबुभुक्षमाणाव्यालाव्याघ्रादयोहिंस्राः अपालां पालकारक्षितां त्वां कथं नाघसन् न भक्षितवन्तः घस्लृदःसन्घस्लृघञ्चोति अदघ्यां घस्लृदनुबन्धात् च्लेःसलिच्युदिति ङः क्षुधबुभुक्षायां दिवादिः पालरक्षणे चौरादिकः पचादित्वादन् व्यालोदुष्टगजे सर्पे श्वापदेनान्यवत्सल इति मेदिनी ॥ ६६ ॥ 

हृदयङ्गममूर्त्तिस्त्वं सुभगम्भावुकं वनं। कुर्व्वाणा भीममप्येतद्ददाभ्यैः केन हेतुना॥ ६७॥

ज०म० हृद।केन हेतुना इदं वनमभ्यैः अभिगतासि वद कथय अभि पूर्व्वादिणो लङ् मध्यमपुरुषैकवचनं आडजादीनाम् आटश्चेति वृद्धिः हृदयङ्गच्छति या मूर्त्तिः शरीरमत्यन्तसौन्दर्य्यात् गमेश्चेति खच् सा एवम्विधा मूर्त्तिर्यस्याः सा त्वम्भीममप्येतद्वनं सुभगम्भावुकं सर्व्वस्यैवाप्रियं प्रियङ्कुर्व्वाणा असुभगं भूत्वा सुभगं भवतीति कर्त्तरि भुवइति खुकञ्॥ ६७॥

भ० हृदयेत्यादि। केन हेतुना त्वं एतद्वनं अभ्यैः अभिगता इति वद अभिपूर्व्वादिणोऽद्यस्तः सिप् लुगह्योऽपः धीटोथीस्विति अम् आदिर्गचोरिति णुः भूयोऽम् त्वादयोऽर्थार्थैकर्मोरिति हतीया हृदयङ्गमा मूर्त्तिर्यस्याः सा तथा लावण्यातिशयात् हृदयं गच्छतीति तृभूत्त्वदृत्यादिना खः नाम्नीत्यस्य व्यभिचारो वाङ्त्वात् भीममप्येतद्वनं सुभगम्भावुकं कुर्व्वाणा प्रागप्रियं प्रियं भवतीति भुवो चेखिष्णुखुकञाविति खुकञ्॥ ६७॥

सुकृतं प्रियकारी त्वं कं रहस्युपतिष्ठसे। पुण्यकृच्चाटुकारस्ते किङ्करः सुरतेषु कः॥ ६८॥

ज०म० सुकृतं। सुकृतम्पुण्यकारिणं शोभनं कृतवानिति सुकर्म्मपापेत्यादिना क्विप् कं रहसि विजने त्वमुपतिष्ठसे उपसिष्ठसि सकृतकरणेतङ् प्रियकारी अनुकूलवर्त्तिनी सती प्रियमनुकूलङ्करोतीति

चेमप्रियमद्रेऽणचेति अण् टिड्ढाणञित्यादिना ङीप् पुण्यकृत् कृतपुण्यः तस्य पूर्व्ववत्क्विप् चाटुकारः प्रियवाक्यकरः नशब्दश्लो केत्यादिना ट प्रतिषिद्धेऽणेव भवति ईदृग्रसे किङ्करः दासः दिवा विभेति टः किंयत्तद्वहुषु कृञोऽज्विधानमिति तत्स्त्रीविषये द्रष्टव्यम् सुरतेषु शोभनरतेषु नपुंसके भावे क्तः अनुदा त्तेत्यादिनानुना सिकलोपः अनेनोभयत्रचिरात्ख्याता ॥ ६८ ॥

सुकृतमित्यादि। त्वं प्रियकारी अनुकूलवर्त्तिनी सती कं सुकृ तं पुण्यकारिणं पुरुषं रहसि विजने उपतिष्ठसे सङ्गच्छसि मैत्रा ध्वसङ्गाराधद्दति सङ्के मं शोभनं करोतीति त्वासुमिति क्विप् प्रियङ्करोतीति चेमप्रियमद्रात्कुर्व्वा इति खाभावपचे ढात्पण् क्तः पुण्यकृत् ते तव सुरतेषु शोभनरतेषु किङ्करोदासः सन् चाटुकारः प्रियवाक्यकारी पुण्यं करोतीति क्विप् रमेर्भावे क्तः वनतनाद्यनिमामिति मलोपः चाटु करोतीति क्वचिदपवादवि षयेऽप्युत्सर्गो ऽभिनिविशतद्दति न्यायात् सुकृद्दति टविषयेऽपि ढात्पण् किमित्यव्ययं तस्मात् कञ्ष्टः ॥ ६८ ॥ भ॰

परिपर्य्युदधेरूपमाद्यलोकाच्च दुर्लभं। भावत्कं दृष्टवत्स्वेतदस्माखधि सुजीवितं ॥ ६९ ॥

परि। एतद्रूपभावत्कभवत्यारदमिति भवतष्ठक्छसाविति ठक्छसौ ठक्छसोश्लोपसंख्यानमिति पुंवद्भावः इसुसुक्तान्तात्कः दुर्लभम्परिपर्य्युदधेः अपपरीवर्जनइति कर्म्मप्रवचनीयसंज्ञा याम्द्वितीयायामाङ्मायामप्रत्ययपाङ्परिभिरिति पञ्चमी अप ज॰म॰

परिवर्हिरञ्चवःपञ्चम्यादति विभाषासमासश्च असमासपचे परे र्वर्जनदतिद्विर्व्वचनम् उदधिं वर्जयित्वा चतुरुदधिमेखलायाभुवि दुर्लभमाद्युलोकाच स्वर्गलोकान्तञ्च यावत् दुर्लभमचापि पूर्व्ववत्पञ्चमी तादृशन्दृष्टवत्त्वस्मास्तु अधि सुजीवितमस्मद्विषयो अधिकोन सुजीवितम् अहो वा सुजीवितमिति अहो शब्दार्थे अधिशब्दोवर्त्तते ॥ ६८ ॥

भ॰ परीत्यादि। एतत् भावत्कं भवदीयं रूपं दृष्टवत्सु अस्मासु अधि सुजीवितं अधिकं शोभनं जीवनं विषये सप्तमी यद्वा अधि केशार्थोपाधिभ्यामिति स्वाम्यर्थेनाधिना च योगे सप्तमी तेनास्मत्स्वामिकं सुजीवितमित्यर्थः त्वामपश्यतम्मु जनस्य तन्नास्तीति भावः भवत्यादृदमित्यर्थे विकारमंघेति कर्ण्पुम्वत्स्युत्पुंस्कः स्त्रियामित्यादौ तलशसन्ततरादावित्यस्य तद्धितसंज्ञके त्वपर्य्यन्तप्रत्ययं शसन्ततरादौचेति देवोदासचक्रवर्त्तिव्याख्यानात् पुंवत् ये तु त्वतौभावदृत्यनेन कृतयोस्तलयोरेवमित्याऊस्तन्मतेऽभिधानात् योगविभागात् किम्वा पुम्वत्स्रेरिति पुम्वत् भवच्छब्दस्य स्त्रिसंज्ञायां पठितत्वात् पुम्वत्भ्रेरित्यत्र कोर्लुक्त्येचेत्यस्मात्त्येचेत्यनुवर्त्तते वृत्तौ त्येचेति यन्न दृश्यते तल्लिपिकरप्रमादात् ग्रन्थगौरवाद्वा न लिखितं तदनुवृत्तेर्दुर्निवारत्वेन स्पष्टत्वात्पुम्वत्सर्व्वनाम्नोवृत्तिमात्रे तसादौ चेति परसूत्रं कीदृशं रूपं उदधेः परि परि उदधिं वर्ज्जयित्वा दुर्लभं दुष्प्रापं उदधिपरिच्छिन्नायां पृथिव्यां दुर्लभमित्यर्थः समुद्रे लक्ष्म्या उत्पत्तिः तत्रैव तत्सम्भवो नान्यत्रेति भावः आद्युलोकात् स्वर्गलोकपर्य्यन्तञ्च दुर्लभं उभयत्र अन्यारभ्येत्यादिना पञ्चमी पर्य्याङौ त्यागसीमार्थौ आङ्

भ्याम्निमोक्षोस्यागेऽन्याविव्युक्तः वर्जनार्थपरैर्विभाषया दित्वम भिधानात्॥ ६८॥

प्रपीतमधुका भृङ्गैः सुदिवेवारविन्दिनी। सत्परिमल लक्ष्मीका नापुंस्कासीति मे मतिः॥ ७०॥

आपी॥ परि सर्वतोमार्जनमिति परिमलः कलचपस्येत्यधि अ०भ० कृत्य मृजेष्टिलोपश्चेति कलप्रत्ययश्चौणादिकः इह सुरतोपभो गविमर्दः परिमलोऽभिप्रेतः तस्य लक्ष्मीः तत्कृतत्वात् सती विद्य माना परिमलशोभा यस्याः उरःप्रभृतिभ्यः कप् सा त्वमपुंस्का अविद्यमानभर्त्तृका नासीति मे मतिः पूर्ब्ववत्कप् किमिव सुदिवेवा रविन्दिनी पद्मिनी शोभनन्दिवा नीहाराद्यभावाद्दिवा दिवसं यस्याः सुप्रातेत्यादिना ॰अच् आपीतमधुका भृङ्गैः आपीतमधु यस्याः शेषाद्विभाषेति कप् यथेयं सत्परिमललक्ष्मीका तथात्व मपीति॥ ७०॥

प्रपीत्य। दि। त्वं न अपुंस्कासि किन्तु विद्यमानभर्तृकासीति भ० मेमम मतिः यतः सती परिमलस्य लक्ष्मीर्यस्यास्तादृशी विम र्दोत्थे परिमलोगन्धे जनमनोहरइत्यमरः सुरते भोगविमर्द एव परिमलइति अयमङ्गना पुंस्त्रीभ्यामेकवचनान्ताभ्यां क्रोव ऊभोद्याविति परः स्वमते लक्ष्मीशब्दात् ऋतःकइति कः अपुंस्केति पुंवत्स्युक्तपुंस्कइति ज्ञापकात् ऋतःकइत्यस्य योगविभागेन क्वचि दन्यत्रापि कइति बोध्यं स्वार्थे क्रोवा यथा भृङ्गैः प्रपीतं मधु यस्या

स्तादृशी सुदिवा अरविन्दिनी पद्मिनी तथा लमपि सत्परिमल लक्षीका शोभनं नीहारादिरहितं दिवा दिनं यस्याः सुपूर्व्वाद्दि वाशब्दादृङ्गीषो अदिति परः स्वमते दिवाशब्दात् स्वार्थे ष्णः तस्यानित्त्वविवक्षया न ईप वृद्धिस्य यद्वा शोभने दिवसेइति सप्त म्यन्तं रूपं दिवाशब्दोऽयमव्ययः ॥ ७० ॥

मिथ्यैव श्रीः श्रियम्मन्या श्रीमन्मन्यो मृषा हरिः। सा क्षात्कृत्याभिमन्येऽहं त्वां हरन्तीं श्रियं श्रियः ॥ ७१ ॥

ज०म० मिथ्यै। श्रियः श्रियं रूपसम्पदं हरन्तीमभिभवन्तीं त्वां साक्षात्कृत्य प्रत्यक्षीकृत्य विभाषाकृञीत्यनुवर्त्तमाने साक्षात्प्रभृ तीनि चेति गतिसंज्ञा गतिसमासे ल्यवादेशः अहमभिमन्ये किं मिथ्या श्रीः श्रियमन्या अहमेव श्रीर्नान्येति मन्यमाना श्रीर्मिथ्या नैव श्रीः किन्तु लमेवेति आत्ममाने खश् दिवादित्वात् श्यन् इच एकाचोऽमप्रत्ययवच्चेत्यम्भावः तस्यामः प्रत्ययत्वान्नलोपाभावः न विभक्तौतुस्मादिति वचनात् अचीतीयङादेशः क्विबन्ताधातु त्वन्न जहतीति क्विब्वचीत्यादिना श्रयतेरौणादिकः क्विप् हरि स्त्वात्मानं श्रीमन्तम्मन्यमानो मृषा न श्रीमान् यस्य लं सएव श्री मानित्यहमभिमन्ये॥ ७१ ॥

भ० मिथ्यैवेत्यादि। श्रिया लक्ष्म्याः श्रियं शोभां हरन्तीं जयन्तीं वा त्वां साक्षात्कृत्य अहमेवमभिमन्ये श्रीर्लक्ष्मीर्मिथ्यैवात्मानं श्रियं मन्यते हरिरपि मृषा आत्मानं श्रीमन्तं मन्यते लमेव श्रीस्तदीय शोभाहरणात् लत्पतिरेव लद्योगात श्रीमानिति भावः मन्या

स्वार्थइति खञ् ञित्वात् दिवसुतुदेति यन् खित्यनाजइषइति
एकाजिजन्तत्वात् श्रीशब्दस्य दीर्घान्तत्वं इत्वेपाणीपाध्मित्या
दिना समासपचे त्वादजन्तः क्लीयपि साचादादेरभूततद्भावेऽच्व्जः
क्लीयप् वेति परः॥ ७१॥

नोदकण्ठिष्यतात्यर्थं त्वामैचिष्यत चेत् स्मरः। खेला
यन्ननिशं नापि सजूःकृत्य रतिं वसेत्॥ ७२॥

नोद। स्मरभार्य्या रतिः सापि रूपेण निकृष्टेति दर्शयति जं०म०
चेत् यदि स्मरः त्वामैचिष्यत दृष्टवानभविष्यत् तदा अत्यर्थंनो
दकण्ठिष्यत रतिम्प्रति भृशमुत्कण्ठितोनाभविष्यत् ईचदर्शने
इति कठिशोकइति भैवादिकात् क्रियातिपत्तैः लृङ् नापि र
तिं स्वभार्य्यां सजूःकृत्य सहायीकृत्य वसेत् अपितु परित्यजेत्
अत्र क्रियातिपत्तिर्न विवचिता किन्तु हेतुहेतुमद्भावः नापि
रतिं सजूःकृत्य वसेत् यदि त्वामीचेतेति हेतुपदमभ्यूह्य हेतुम
द्भावदर्शनात् ऊर्य्यादिषु सजूःसहार्थइति वचनात् गतिसंज्ञा
खेलायन् अनिशं क्रीडन् सर्व्वदा खेलाशब्दात् कण्ड्वादित्वात्
यक्॥ ७२॥

नोदित्यादि। रतिरपि न ते तुल्येति दर्शयन्नाह स्वयं भ०
कामश्चेत् यदि त्वां ऐचिष्यत तदा अत्यर्थं न उदकण्ठिष्यत
रतिं प्रति भृशमुत्कण्ठितोनाभविष्यत ईचङ्दर्शने कठिङ्शा
ध्याने उभयत्र ध्वर्थासम्भवे यो नापि रतिं स्वभार्य्यां सजूःकृत्य

सहायीकृत्य अनिशं निरन्तरं खेलायन् क्रीडयन् वसेत् तां परि त्यजेदेव यदि त्वां पश्येत् इति हेतुपदमत्र बोध्यं भव्येवाफलहेतो रित्यस्य योगविभागाल्लतेऽपि स्त्री भव्येऽपि न चतिः विलासार्थात् खेलाशब्दात् कण्ड्वादित्वात् करोत्यर्थे क्यः सजुःशब्दोऽयमव्ययः सहायार्थे वर्त्तते शाकपार्थिवादित्वात् हस्तेपाणौशाब्दं इत्यादिना समासः॥ ७२॥

वल्गूयन्तीं विलोक्य त्वां स्त्री न मन्तूयतीह का।
कान्तिं नाभिमनायेत को वा स्थाणुसमोऽपि ते॥ ७३॥

ज०म० वल्गु। त्वां वल्गूयन्तीं शोभमानां विलोक्य न मन्तूयति स्त्रीह का इह जगति का स्त्री न मन्तूयेत् न कुप्येत् सर्व्वदा कुप्यत्येव ईर्ष्यायुक्तत्वात् स्त्रीणाम सम्भावने लिङ् वल्गुमन्तुशब्दाभ्यां कण्ड्वा दित्वाद्यक् कोवा कोनाम स्थाणुसमोऽपि काष्ठतुल्योऽपि गुणदो षानभिज्ञत्वात्ते तव कान्तिं विलोक्य नाभिमनायेत पूर्व्वमदृष्ट त्वादनभिमनाः सन् अभिमनाः सचेताभवेत् पूर्व्ववल्लिङ् अभि मनसोभृशादित्वात्क्यङ् सलोपश्च महादेवतुल्योवा आस्ता मन्यः सोऽपि तावदभिमनायते॥ ७३॥

भ० वल्गित्वत्यादि। इह जगति का स्त्री वल्गूयन्तीं शोभमानां त्वां विलोक्य न मन्तूयति न ईर्ष्यति स्वपतिवैराग्यशङ्कया सर्व्व व कुप्यतीत्यर्थः वल्गुमन्तुभ्यां कण्ड्वादित्वात्क्यः धोऽज्यरे कोवा स्थाणुसमोऽपि महादेववज्जितेन्द्रियोऽपि काष्ठवन्नीरसोऽपि वा

नव कान्तिं विलोक्य न अभिमनायेत प्रीतमनाम भवेत् अपि तु सर्व्वएवाभिमनायेत भृशादेश्च्व्यर्थे वेति चादिकोक्यः सलोपश्च घौ ऽज्यरे प्रौढ्यासम्भावने इति खी॥ ७३॥

दुःखायते जनः सर्व्वः सएवैकः सुखायते। यस्यो त्सुकायमाना त्वं न प्रतीपायसेऽन्तिके॥ ७४॥

दुःखा॥ सएवैकोजनः सुखायते सुखं वेदयते यस्यान्तिके ज॰म॰ समीपे न त्वम्प्रतीपायसे न प्रतिकूलवर्त्तिनी भवसि उत्सुकायमा ना उत्कायमाना सती यस्य पुनरन्तिके उत्सुकायमाना प्रतीपा यसे ससर्व्वोजनः दुःखायते दुःखं वेदयते सुखदुःखशब्दाभ्यां सुखादिभ्यः कर्त्तृवेदनायामिति क्यङ् उत्सुकप्रतीपशब्दाभ्याम्भृ शादित्वात्॥ ७४॥

दुःखेत्यादि। यस्यान्तिके समीपे त्वं उत्सुकायमाना उत्सु भ॰ कीभवन्ती न प्रतीपायसे न प्रतिकूलीभवसि सएवैकोजनो जग ति सुखायते सुखमनुभवति अन्यः सर्व्वोजनोदुःखायते दुःखमनु भवति सुखदुःखशब्दाभ्यां शब्दसुखकष्टादेरिति वेदे ज्ञः केचित्तु सुखदुःखयोस्तदाश्रयेऽपि वर्त्तमानत्वात् असुखःसुखीभवति अदुः खोदुःखीभवति इत्यर्थे डाच् लोहितादेःपश्चेति ञमाङः उत्सु कप्रतीपाभ्यां भृशादित्वात् च्व्यर्थे ज्ञः केचित्तु प्रतीपशब्दात् घान्तकीत्यादिना आचारे ञमाङः॥ ७४॥

कः पण्डितायमानस्त्वामादायामिषसन्निभां। त्त्रस्यन् वैरायमाणेभ्यः शून्यमन्ववसद्वनं॥ ७५॥

ज०म० कः पं। पण्डितायमानः अपण्डितः कथमपि पण्डितोभवन् भृशादित्वात्क्यङ् त्वामामिषसन्निभां सर्व्वजनप्रार्थनीयत्वात् आदाय गृहीत्वा कः शून्यं वनमन्ववसत् शून्ये वने अवसदित्यर्थः उपान्वध्याङ्वस इति कर्म्मसंज्ञा कीदृशः त्रस्यन् बिभ्यत् वैरायमाणेभ्य. वैरङ्कुर्व्वाणेभ्यः शब्दवैरेत्यादिना क्यङ् भीत्रार्थानामित्यपादानसंज्ञा॥ ७५॥

भ० करत्यादि। कः पण्डितायमानः अपण्डितः पण्डितोभवन् आमिषसन्निभां लोभ्यद्रव्यतुल्यां त्वां आदाय गृहीत्वा शून्यं वनं अन्ववसत् वसतिस्म कर्मक्रियेत्यादिना डे ढं पण्डिताद्भृशादित्वात् ङ्यः वैरायमाणेभ्यः वैरं कुर्व्वाणेभ्यः त्रस्यन् शत्रुभयाभावे एवं वर्त्तुमनुचितमिति भावः वैरात् शब्दादित्वात् शब्दसुखकष्टादेरिति क्तौ ङ्यः यतोऽपायभीति अपादानसंज्ञा आमिषं पलले लोभ्ये सम्भोगोत्कारयोरपि। आमिषं सुन्दराकारे रूपादिविषयेऽपि चेति विश्वः॥ ७५॥

ओजायमाना तस्यार्घ्यं प्रणीय जनकात्मजा। उवाच दशमद्धानं सादरा गद्गदं वचः॥ ७६॥

ओजा। एवमुक्तवति रावणे जनकसुता दशमूर्द्धानमुवाच दश मूर्द्धानः शिरांसि यस्य तस्यार्घ्यमणीय दत्वा अतिथिरयमिति सम्प्रदानस्य शेषत्वेन विवक्षितत्वात् षष्ठी ओजायमाना ओज इवाचरन्ती कर्त्तुः क्यङ् सलोपश्च ओजसोऽप्सरसो नित्यमिति वचनात् किञ्चिल्लज्जापरित्यागात् तेजस्विनी भवन्तीत्यर्थः किमुवाच वचोवक्ष्यमाणं सादरा सती परिव्राजक इति गद्गदमनभिव्यक्तमसंस्कृतत्वात्॥ ७६॥ ज०म०

ओजेत्यादि। जनकात्मजा सादरा सती तस्य कपटपरिव्राजकस्य अर्घ्यं प्रणीय अतिथिबुद्ध्या दत्वा दशमूर्द्धानं दश मूर्द्धानो यस्य तं रावणं गद्गदं लज्जया अन्तर्भिया वा सम्यगनभिव्यक्तं वचोवक्ष्यमाणं उवाच ओजायमाना किञ्चिल्लज्जापरित्यागात् ओजस्विनीवाचरन्ती ओजःशब्दात् धर्म्मिप्रधानात् आचारे क्यङिति क्यः सलोपश्च भृशादित्वात् च्व्यर्थे वा क्यः तस्य इति सम्प्रदानस्य सम्बन्धविवक्षायां षष्ठी प्रणीयेत्यत्र समीपे स्थापयित्वा इतिवार्थः मूल्येपूजाविधावर्घः अर्घाय इदमित्यर्थे विकारसंघेति यः॥ ७६॥ भ०

महाकुलीन ऐक्ष्वाके वंशे दाशरथिर्म्मम। पितुः प्रियङ्करो भर्त्ता क्षेमकारस्तपस्विनां॥ ७७॥

महा। यदुक्तन्तेन कं रहस्युपतिष्ठस इति अस्य प्रतिवचनं मम भर्त्ता महाकुलीनः महाकुलस्यापत्यमिति महाकुलादञ्खञा ज०म०

विति अञ् किमादित्यवंशसम्भवः किं सोमवंशसम्भवो वा महाकु लस्यापत्यमित्याह ऐक्ष्वाके वंशे इक्ष्वाकूणामयमैक्ष्वाकः दाण्डि नायनेत्यादिना टिलोपनिपातनम् अन्ये तच वन्तीत्याह दाश रथिः दशरथस्यापत्यं यः सम मम भर्त्ता महाकुलीनः कीदृशः पितुः प्रियङ्करः अनुकूलकारी तपस्विनाञ्च क्षेमकारः क्षेमप्रिय मद्रेष्वेति चकारात् खच्॥ ७७॥

भ० महेत्यादि। कं रहस्युपतिष्ठसे इति रावणप्रश्ने उत्तरमिदं मम भर्त्ता दाशरथिः प्राधान्यात् विशेषेण महिम्ना च ज्येष्ठ एव गम्यते दशरथस्यापत्यं इति वाक्याद्यतइति अदन्तत्वात् ञिः णित्त्विः ऐक्ष्वाके वंशे महाकुलीनः इक्ष्वाकुनामा कश्चित् सूर्य्यवंशसम्भवः तस्यापत्यमिति तद्भवे वंशेऽद्रत्यर्थाङ्गम्यते शिवा दित्वात् अणः ओर्लोपोऽकद्रुपापद्वारेषे इत्यत्र एयस्य अस्येति समासात् उकारलोपः ये तु केवलष्णोयप्रत्ययइति व्याचक्षते तन्मते योगविभागात् महाकुले विद्यमानः ढखेकादिति खीनः महाकुलीनइति पाठे अनिच्छविवक्षया न ञिः महाकुलस्याप त्यमिति केचित् पितुः प्रियङ्करः प्रियङ्करोतीति क्षेमप्रियमद्रा त्कर्म्मेति खः तस्य विकल्पपक्षे तपस्विनां क्षेमकारः कुशलकर्त्ता ढातृपण्॥ ७७॥

निहन्ता वैरकाराणां सतां वङ्ककरः सदा। पार श्वधिकरामस्य शक्तोरन्तकरो रणे॥ ७८॥

निह। वैरकाराणां शत्रूणां वैरपूर्व्वात्कृञोनशब्दश्लोकेत्या जं॰म॰ दिना टे प्रतिषिद्धे अचेव भवति निहन्तीति हजन्तस्य प्रयोगः तत्र कर्म्मणि षष्ठी सतान्धर्म्मे स्थितानाम्बहुकरः बहुकार्य्यं करोतीति दिवाविभेति टः स्त्रीविवक्षायान्तु किंयत्तद्बहुष्विति करोतेरच् आङ्परयोः खनिशृभ्यांडिच्चेत्यौणादिकः कुः परशुशब्दः तत्पर्य्यायएवाव्युत्पन्नः परश्वधशब्दः सप्रहरणं यस्य परश्वधात्तस्य तस्य परशुरामस्य सम्भिन्याः शक्तेः सामर्थ्यस्यान्तकरोविनाशयिता अन्तङ्करोतीति पूर्व्ववट्टः रणे सङ्ग्रामे तत्र भवः॥ ७८॥

निहेत्यादि। तथा वैरकाराणां निहन्ता ढाटषण् कर्म्मणि भ॰ षष्ठी सतां साधूनां सदा सर्व्वदा बहूनि कार्य्याणि करोतीति बहुकृत् रणे पारश्वधिकरामस्य जामदग्न्यस्य शक्तेः सामर्थ्यस्य अन्तकरो नाशयिता परश्वधेन परशुना प्रहरतीति ष्णिकः परान् श्यति खण्डयतीति परशुः परश्वधस्येति निपातनात् ॥ ७८॥

अध्वरेष्विष्टिनां पाता पूर्त्ती कर्म्मसु सर्व्वदा। पितुर्न्नियोगाद्राजत्वं हित्वा योऽभ्यागमद्वनं॥ ७९॥

अध्व। इष्टमेभिरिति इष्टिनोयज्वानः इष्टादिभ्यश्चेतीनिः जं॰म॰ किमिष्टवन्तः अध्वरान् कर्म्माणि तत्र क्तस्येन्विषयस्येति कर्म्मणि सप्तमी अध्वरेष्विष्टिनामिति कर्म्मणि षष्ठी क्तयोगे पाता रचिता पूर्त्ती कर्म्मसु सर्व्वदा पृणातेर्निष्ठायामुदोष्ठ्यपूर्व्वस्येत्युत्वम् न

ध्याख्येत्यादिना निष्ठानत्वप्रतिषेधः पूर्त्तमनेनेति पूर्व्ववदिनिः क्लिन्पूर्त्तमिति सर्व्वदा आज्ञादिकर्म्मणि पूर्व्ववत्सप्तमी सराजत्वं राज्यम् हित्वा त्यक्त्वा वनमभ्यागमत् आभिमुख्येन आगतवान् लुङ् ऋरक्लि रूपम् पितुर्नियोगात् नायोग्यत्वात् समे भर्त्तेति योज्यम् ॥ ७९ ॥

भ० अध्वरइत्यादि। तथा अध्वरेषु इष्टिनां यज्वनां पाता रक्षिता पालरक्षणे इष्टं यजनं भावे क्तः ढचेक्ततीति कर्म्मणि षष्ठी सर्व्वदा कर्म्मसु पूर्त्ती पूर्त्तं पूरणं भावे क्तः सूत्वाद्योदित्यादौ पूवर्ज्जनात्र क्तस्य नः वृदुश्रिञ्रूर्णोरिति इमनिषेधः कर्म्मोपादाने ऽपि भावे क्तः अध्वरान् इष्टमेभिः कर्म्माणि पूर्त्तमनेन चेत्यर्थे इष्टादेरिष्टमनेनेत्यादावर्थे कर्त्तरि वाच्ये इन्प्रत्ययोभवेदिति परः खमते क्तेनाढे इति ज्ञापकात् क्तान्तात्कर्त्तरि इन् तद्योगे कर्म्मणि सप्तमी किम्वा इष्टपूर्त्ताभ्यां भावक्तान्ताभ्यां नैकाजादिति अस्त्यर्थे इन् अध्वरकर्म्मभ्यां विषये सप्तमी केचित्तु अध्वरा इष्टा एभिः कर्म्माणि पूर्त्तान्यनेन चेति कर्म्मक्तादिन् कर्त्तरीत्याहुः यः पितुराज्ञया राजत्वं हित्वा त्यक्त्वा वनमभ्यागमत् समे भर्त्तेति योज्यं ॥ ७९ ॥

पतत्रिक्रोष्टुजुष्टानि रक्षांसि भयदे वने। यस्य वाणनिकृत्तानि श्रेणीभूतानि शेरते ॥ ८० ॥

ज०म० पत ॥ यस्य वाणैर्निकृत्तानि छिन्नानि रक्षांसि भयदे वने दीर्घ

निद्रया शेरते समम भर्त्तृति योऽयम् शेरतइति शीङोरुट्
कीदृशानि अश्रेणयः श्रेणयोभूतानि ऊर्य्यादिच्विडाचश्चेति च्वय
न्तानाङ्गुतिप्रादयइति सः च्वौचेति दीर्घः च्वर्थामान्तु श्रेण्या
दयः क्लतादिभिरित्ययं विषयः पतत्रिभिः क्रोष्टुभिश्च जुष्टानि
परिसृतानि ॥ ८० ॥

पतत्रीत्यादि। चक्षन् वैरायमाणेभ्य इति वाक्ये तस्य चाशे भ°
नास्तीत्युत्तरमिदं यस्य वाणैः शरैर्निकृत्तानि खण्डितानि रचां
सि भयदे वने शेरते पतितानि सन्तीत्यर्थः समे भर्त्तृति समन्वः
शीङः की अन्ते शीङोरेणुः मान्तोरम् मान्तोऽदनतः अश्रेणयः
श्रेणयोभूतानि श्रेणीभूतानि च्विः क्षभस्तभूततद्भावइति च्विः
दीर्घस्च त्योवमाचोलोप्यइति च्विलोपः पतत्रिभिः मृगादिभिः
क्रोष्टुभिः शृगालैश्च जुष्टानि परिसृतानि जुषमुदिसेवे ॥ ८० ॥

दीव्यमानं शितान् वाणानस्यमानं महागदाः।
निघ्नानं शात्रवाञ्शामं कथं त्वं नावगच्छसि ॥ ८१ ॥

दीव्य। शितांस्तीक्ष्णान् वाणाम् दीव्यमानं क्षेप्तुं शक्तमच्छीलं अ°म°
वा अनेकार्थत्वाद्धातूनान्दिवेस्ताच्छील्यवयोवचनेत्यादिना चानश्
दिवादिभ्यः श्यन् महागदाः अस्यमानं चेप्तं शक्तमच्छीलं वा
पूर्व्ववचानश् शात्रवान् शत्रून् प्रज्ञादित्वादण् निघ्नानं हन्तुं शक्त
मच्छीलं वा पूर्व्ववत्प्रत्ययः हन्तेर्गमहनेत्युपधालोपः होहन्तो
रिति कुत्वम् एवम्विधं रामङ्कथन्त्वावगच्छसि तेन कर्म्मणा सर्व्व
लोकविदितत्वादिति भावः ॥८१ ॥

भ० दीव्येत्यादि। कथं त्वं राममपि नावगच्छसि न जानासि सर्व्वलोकप्रसिद्धकर्म्मत्वात् तथाहि सितान् वाणान् दीव्यमानं तीक्ष्णैः शरैः क्रीडाशीलं विजिगीषाशीलं वा दिवुजिगीषेच्छापण द्युतौ क्रीडागत्योः दिवोऽर्थवेति करणे द्वितीया नद्यतोर्गदाज्ञस्य मानं क्षेप्तुं शक्तं उत्क्षेपणयोग्ये वयसि वर्त्तमानं वा क्षेप्तुं शीलं यस्येति वा शाक्रवान् निघ्नानं निहन्तुं शक्तं सर्व्वेच शक्तिवयस्ता च्छील्येषतुः शानः हन्तेर्हन्गमित्युक्लोपे हनोघ्नोऽस्रः शत्रुरेव शात्रवः स्वार्थे ष्णः॥ ८१॥

कुलकं।

भ्रातरि न्यस्य यातोमां मृगाविन्मृगयामसौ। एषि तुं प्रेषितोयातोमया तस्यानुजोवनं॥ ८२॥

ज०भ० भ्रात। यद्येवं क्वासावित्याह असौ रामोमाम्भ्रातरि न्यस्य अर्पयित्वा मृगयामाखेटकं यातः मृगैः स्वार्थिकोणिच् अदन्त त्वाच गुणो न भवति तदन्तात्कृञ्ञश्चेति अधिकृत्य परिचर्य्या परिसर्य्या मृगया टाद्यानामुपसङ्ख्यानमिति भावे शप्रत्ययः यक् अलोपाभावस्य टाप् मृगान्विध्यतीति मृगावित् क्वासौ भ्रातेति चेदाह तस्यानुजः कनिष्ठोमया प्रेषितः सन् यातोवनं अनु पश्चा ज्जायतइति अन्येभ्योऽपि दृश्यतइति डः अनौ कर्म्मण्युत्तमकर्म्म ण्यपि भवति किमर्थं एषितुम् तस्यैव ज्ञातुम् इषुगताविय्यस्य रूपम् ज्ञानार्थत्वात् प्रेषितइति तस्यैव रूपम्॥ ८२॥

भ० भ्रातरीत्यादि। तथापि त्वामेकाकिनीं हित्वा त्यक्त्वा कुतोगत

इत्याह असौ रामोमां भ्रातरि न्यस्य समर्प्य मृगयां यातोगतः मृगान् विध्यतीति मृगावित् स कुर्व्वत्याह तस्यानुजोऽपि मया प्रेषितः प्रस्थापितः सन् एषितुं ज्ञातुं अर्थाद्रामं वनं गतः सर्व्वे गत्यर्था ज्ञानार्थाइति वचनात् इष्यसर्पणइत्यस्य ज्ञानार्थत्वं अनु जातोऽनुजः इनजनादिति डः ॥ ८२ ॥

अथायस्यन् कषायाक्षः स्यन्नस्वेदकणोल्वणः। स न्दर्शितान्तराकूतस्तामवादीद्दशाननः ॥ ८३ ॥

अथेति। अथैवमुक्तोजानक्या दशाननस्तामवादीत् उक्तवान् ज०म० आयस्यन् क्रोधाविष्टत्वात् शरीरङ्खेदयन् यसुप्रयत्नइति दैवादिकः परस्मैपदी क्रोधादेव कषायाक्षः वहुव्रीहौ सक्थ्यक्ष्णो रिति षच् स्यन्नैः स्रुतैः स्वेदकणैरुल्वणउद्भटः व्याप्तइत्यर्थः स्यन्दे र्निष्ठायां रूपम् संदर्शितमान्तरमन्तर्गतमाकूतमभिप्रायोयेन सएवम्विधः ॥ ८३ ॥

अथेत्यादि। अथ तयैवमुक्तोदशाननस्तां सीतामवादीत् भ० प्रजवदेति श्रिः कीदृशः आयस्यन् तद्वाक्यैः क्रोधवशात् शरीरं खेदयन् कषायाक्षः क्रोधेन कषाये अक्षिणी यस्य सतथा सक्थ्य क्ष्णः षः स्वाङ्गे स्यन्नैः स्रुतैः स्वेदकणैरुल्वणः उद्भटः व्याप्तइत्यर्थः स्यन्दूङ्स्रुतौ ऊदित्वादेम्त्वे नेमडोश्वीदित्यादिना इमनिषेधः हसुङ्नलोपोऽणाविति नस्य लोपः रदाभ्यामिति तस्य दस्य च नः सन्दर्शितं प्रकटीकृतं आन्तरं अन्तर्गतं आकूतमभिप्रायो येन स तथा ॥ ८३ ॥

कृते कानिष्ठिनेयस्य ज्यैष्ठिनेयं विवासितं। कोनग्न मुषितप्रख्यं वक्तु मन्येत राघवं॥ ८४॥

ज०म० कृते। कनिष्ठाया अपत्यं ज्येष्ठाया अपत्यमिति स्त्रीभ्योढक् कल्याण्यादीनामिनङ् तयोः कल्याण्यादिषु पठितत्वात् कनिष्ठासुतस्य भरतस्य कृते निमित्ते ज्येष्ठायाः सुतः निरुपयोगितया विवासितः विसर्ज्जितः विपूर्व्वस्य वसतेर्हेतुमण्यन्तस्य निष्ठायां रूपम् तन्नग्नमुषितप्रख्यं यथा कश्चिन्मुषितोनग्नोभवति तद्वद्भूतं पूर्व्वकालेति सः तस्याः पूर्व्वापरकालत्वात् राजदन्तादित्वात्पर निपातः ईदृशं राघवङ्कोवक्तु मन्येत स्लाघेत नैवेत्यर्थः॥ ८४॥

भ० कृतेइत्यादि। कोजनो राघवं वक्तु मन्येत स्लाघेत न कोऽपीत्यर्थः किम्भूतं कानिष्ठिनेयस्य कनिष्ठाया अपत्यस्य भरतस्य कृते निमित्तं ज्यैष्ठिनेयं ज्येष्ठाया अपत्यमपि विवासितं पित्रा परित्यक्तं राज्यादवच्छिन्नकृतं वसिर्ज्जिकान्तस्य रूपं ततएव नग्नमुषितप्रख्यं यः कश्चित् प्रथमं मुषितोनिराकृतः पश्चान्नग्नोलज्जितो दिगम्बरीकृतो वा भवति तत्तुल्यं पूर्व्वकालस्यापरकालेनेति कर्म्मधारयार्थं परस्त्वं स्वमते पूर्व्वकालसम्बन्धात् यएव मुषितः परकालसम्बन्धात् सएव नग्नइत्येकार्थताख्येव अभिधानात् पूर्व्वकालीनस्य परनिपातः राजदन्तादित्वादिति परः ज्येष्ठाकनिष्ठाभ्यामावन्तत्वात् वाक्कायतोऽव्यावादेरिति कृतस्य ण्येयस्य कल्याण्यादुभयेत्यादिना इनेयः नग्नेति ओलजजोद्रियि ओदित्वात् श्वस्याधोदिति क्तस्य नकारः मग्नवन्नस्य गत्वं केचित्तु नस्जेर्नस्य निपातनात् तवर्गपञ्चमइत्याहुः॥ ८४॥

राक्षसान् वटुयज्ञेषु पिण्डीशूरान्निरस्तवान्। यद्य
सौ कूपमाण्डूकि तवैतावति कः स्मयः॥ ८५॥

राक्ष। अध्वरेष्विष्टिनामित्यस्योत्तरमाह यद्यसौ राक्षसान् ज०म०
पिण्डीशूरान् पिण्ड्यामेव शूरान् भोजनेएव शूरान् पात्रेसमि
तादयश्चेति सः वटुयज्ञेषु कुब्राह्मणयज्ञेषु निरस्तवान् तिरस्कृ
तवान् हे कूपमाण्डूकि कूपे माण्डूकीव पूर्व्ववत्: ढक्मण्डूकादि
ति चकारादण्वापत्ये एतावति स्वल्पे वस्तुनि तव कः स्मयः नैव
युज्यते मत्पराक्रमे तु युक्तः तत्रापि मम न युक्तं वक्तुमित्याह
॥ ८५॥

राक्षसानित्यादि। अध्वरेष्विष्टिनां पातेत्यस्योत्तरमिदं वट भ०
वो ब्राह्मणास्तेषां यज्ञेषु यदि असौ रामः पिण्डीशूरान् पिण्ड्यां
भोजनएव शूरान् कार्य्याक्षमराक्षसान् राक्षसान् निरस्तवान्
तदा एतावति अल्पेऽपि कार्य्ये हे कूपमाण्डूकि तव कः स्मयो
गर्व्वः विस्मयोवा मण्डूकस्य भेकस्य स्त्र्यपत्यमिति शिवादित्वात् ष्य
कूपे माण्डूकी इव एतेनाल्पदृश्वत्वादन्ये वीरास्त्वया न दृष्टा
इति ते स्मयइति सूचितं कूपमण्डूकीति पाठे जातेरतइतीप्
कूपमाण्डूकीत्यत्र पिण्डीशूरान् इत्यत्र च पात्रेसमितादित्वात्
क्षेपे तत्पुरुषइति परः स्तमते अर्थवशात् क्षेपोगम्यते॥ ८५॥

मत्पराक्रमसंक्षिप्तराज्यभोगपरिच्छदः। युक्तं ममै
व किं वक्तुं दरिद्राति यथा हरिः॥ ८६॥

ज॰म॰ मत्प । राज्यभोगादयः परिच्छदो यस्य मत्पराक्रमेण संचिप्तोऽपहृतो यस्य हरेरिन्द्रस्य सयथा दरिद्राति निरर्थको भवति तन्ममैव किं वक्तुं युक्तमात्मगुणवादस्य लज्जाकरत्वात् दरिद्रातेरादादिकत्वाच्छपोलुक् ॥ ८६ ॥

भ॰ मदित्यादि । मत्पराक्रमेण संचिप्तोऽपहृतो राज्यभोगपरिच्छदो यस्य सयादिर्यस्य तादृशो हरिरिन्द्रो यथा यदि दरिद्राति दुर्गतोभवति तदा किं ममैव वक्तुं युक्तं अपि तु नैवेत्यर्थः आत्मगुणानुवादस्य लज्जाकरत्वात् दरिद्रा धातुदुर्गत्यां ॥ ८६ ॥

निर्लज्जोविमदः स्वामी धनानां हृतपुष्पकः । अध्यास्तेऽन्तर्गिरं यस्मात् कस्तन्नावैति कारणं ॥ ८७ ॥

ज॰म॰ निर्ल । यस्मात् कारणात् धनानां स्वामी धनदः अन्तर्गिरमध्यास्ते अध्यासितवान् गिरेः कैलासस्यान्तर्मध्ये विभक्त्यर्थेऽव्ययीभावः गिरेश्च सेनकस्येति टच् अधिशीङ्स्थासामिति कर्मसंज्ञा तेन तृतीयासप्तम्योर्व्बहुलमित्यम्भावो न भवति नाव्ययीभावादित्यमेव भवति तत्कारणं मम पराक्रमस्यां वा कोनावैति न जानाति कीदृशः निर्लज्जः लज्जातोनिष्क्रान्तः निरादयः क्रान्ताद्यर्थे पञ्चम्येति सः एकविभक्तिचेत्युपसर्जनसंज्ञायां ह्रस्वत्वम् हृतपुष्पकः हृतं आच्छिन्नंपुष्पकाख्यं विमानं यस्य अतएव विमदोऽपि तदर्थः लङ्का पुष्पकञ्च धनदस्यासीत् तच्छित्त्वा अनेन गृहीतमिति ॥ ८७ ॥

निर्लज्ज इत्यादि। धनानां स्वामी कुवेरः यस्मात् कारणात् अन्तर्गिरं गिरेः कैलासस्यान्तर्मध्यमध्यास्तेऽधिवसति तत्कारणं मत्पराक्रमरूपं कोजनोनावैति अपितु सर्व्वएव जानाति कीदृशः कुवेरः निर्लज्जः लज्जायानिष्क्रान्तः पञ्चमीतत्पुरुषः व्यंपूर्व्वमिति निरः पूर्व्वनिपातः निर्गता लज्जा यस्येति वा विमदः विगतोमदो दर्पोयस्य हृतपुष्पकः हृतं पुष्पकं विमानं यस्य ईदृशोऽपि मत्प राक्रमादेवेति भावः अन्तर्गिरमिति सप्तम्यर्थेऽव्ययीभावः झय् मद्दोपौर्व्वमास्याग्रहायणोगिरेर्व्वेति पचे अः कर्म्मक्रियेत्यादिना आधारस्य कर्म्मत्वं॥ ८७॥ भ०

भिन्ननौक इव ध्यायन् मत्तोविभ्यद्यमः स्वयं। क्लिष्णि मानं दधानेन मुखेनास्ते निरुद्यतिः॥ ८८॥

भिन्न। स्वयं साक्षान्मत्तोविभ्यत् त्रसन् यमेविलक्षणात् मुखेन क्लिष्णिमानकृष्णवर्णत्वं वर्णदृढादिभ्यःष्यञ्चेति चकारादिमनिच् दधानेन धारयता इत्यम्भूते तृतीया निरुद्यतिः निरुद्यमः आस्ते उत्पूर्व्वाद्यमेः स्त्रियाक्तिन् अनुनासिकलोपः कीदृशः ध्यायन् चिन्त यन् किममापद्यदद्यमनेन हृतसर्व्वस्वइति भिन्ननौकइव विपन्न पोतवणिगिव उरःप्रभृतिभ्यः कप्॥ ८८॥ अ०भ०

भिन्नेत्यादि। यमः मत्तोविभ्यत् त्रसन् स्वयं ध्यायन् चिन्तयन् निरुद्यतिर्निरुद्यमआस्ते स्वयमिति स्वयमेवात्मनोऽसामर्थ्यं जाना ति नत्वन्येन बोधितइत्यर्थः क्लिष्णिमानं कृष्णत्वं दधानेन मुखेन भ०

उपलक्षितः विशेषणे तृतीया गुणादिमनभावे भिक्षा विशारिता नौर्वस्य ताद्दृशोवणिक् यथा ध्यायति तथा ध्यायन् एकवचना न्तेन नौशब्देन बहुत्रीही करति परः समते स्वार्थे पुंवत्स्यु मपुंस्कदति ज्ञापकात् तमुन्नैरिति अस्मदः पञ्चम्यासम् युष दस्मदीस्वासावित्यादिना मदादेशः गणेशककार्यस्य वाऊस्यात् त्यदांटेरःस्वाविति अनिषेधः जिभोजिभोत्यां म्रदः ऋादीरेडिः ऋदेरित्युक्तेर्न गुण् निरत्पूर्व्वात् यमः क्तौ वनतनाद्यनिमामिति मलोपः एतेन दिक्पतीनां जयाद्दृमेव सुप्रविष्ट्रोमतु तयेत्युक्तं ॥ ८८ ॥

समुद्रोपत्यका हैमी पर्व्वताधित्यका पुरी। रत्न पारायणं नाम्ना लङ्केति मम मैथिलि ॥ ८९ ॥

ज॰म॰ एवं। स्वपौरुषमदर्श्य लोकत्तुमाह समु। हे मैथिलि लङ्केति नाम्ना मम पुरी कीदृशी समुद्र एवोपत्यका आसन्नोयस्याः सा स मुद्रोपत्यका समुद्रस्य पर्व्वतोपत्यकात्वात् समुद्रोपत्यकेति समा से साधुत्वम भवति यतः संज्ञाधिकारात् पर्व्वतस्यासन्ने अधि रूढे उपाधिभ्यां त्यकन्प्रत्ययान्तयोरुपत्यकाधित्यकाशब्दयोः साधुत्वमुक्तम् प्रतिषेधे त्यकन् उपसंख्यानमिति प्रत्ययस्यादिती कारो न भवति हैमी हेमविकारा प्राणिरजतादिभ्योऽञ् पर्व्वता धित्यका चिकूटपर्व्वतस्योपरि स्थिता रत्नपारायणं यत्र रत्ना नाम्यारमवस्थानमयन्ते बुध्यन्ते तत्परीक्षकाः सर्व्वरत्नस्थानमि त्यर्थः। दुर्गावस्थित्यानभिभवनीयतां रत्नोपचयात् समृद्धु ताच्चथयन् प्रलोभयति ॥ ८९ ॥

समुद्रेत्यादि। सम्प्रति सीताप्रलोभनं क्रियते हे मैथिलि लङ्के भ०
ति नाम्ना ख्याता मम पुरी कीदृशी समुद्रोपत्यका समुद्रस्य उप
त्यका समीपे भूमिः पर्व्वतस्य त्रिकूटस्य अधित्यका उपरि स्थिता
अध्युपाभ्यां त्यचादित्वात् त्यचाद्यचिरेत्यादिना भवादित्वात् ऊ
र्द्धासन्नयोस्त्यः ततः स्वार्थे कः स्त्रियामाप् कात्पनाशीरकइत्या
दिना चिपादित्वात् न इत्वं उपत्यकाद्रेरासन्ना भूमिरूर्द्ध्वमधि
त्यका इत्यमरकोषे अद्रेरित्युपलक्षणं समुद्र उपत्यका पर्व्वता
सन्नभूमिर्यस्या इति केचित् एतेन दुर्गमत्वं सूचितं हैमी हेम्नो
विकारः विकारसंघेति ष्णः मनुवर्म्मेत्यादौ विकारस्यावर्ज्जनात्
नलोपनिषेधाभावात् न्वोर्लोपौतावितिं नस्य लोपः रत्नानां पार
मवसानं अयन्ते बुध्यन्ते तत्परीक्षका अत्रेति रत्नपारायणं कज्जल
नद्योघे इति आधारे अनट् स्वभावादजहल्लिङ्गता सर्व्वरत्न
स्थानमित्यर्थः यदाह हलायुधः शाकल्यवचनं प्राज्ञैः पारायण
मुदाहृतमिति॥ ८९॥

आवासे सिक्तसंमृष्टे गन्धैस्त्वं लिप्तवासिता। अर्पि
तोरुसुगन्धिस्रक् तस्यां वस मया सह॥ ९०॥

आवासे। तस्यां पुर्य्यां आवासे गृहे आवसत्यस्मिन्निति अधि अ०म०
करणे घञ् मया सह त्वं वस प्रार्थनायां लोट् सिक्तसंमृष्टे पूर्व्वं
सिक्ते पश्चात्संमृष्टे गन्धैर्लिप्तवासिता सती पूर्व्वं लिप्ता चन्दनादि
भिर्गन्धैः पश्चाद्वासिता धूपिता अगुर्वादिभिः पूर्व्वकालेत्यादिना

वः अर्पिता न्यस्ता उर्व्वी महती सुगन्धिस्रक् सुरभिमाला यस्याः सा त्वं किमिति त्वया सह वसामीति चेदाह ॥ ९० ॥

भ० आवासइत्यादि। तस्यां पुर्य्यां आवासे गृहे मया सह त्वं वस प्रार्थनायां लोट् पूर्व्वं सिक्ते पश्चात् संमृष्टे शोधिते सिक्तसंमृष्टे गन्धैश्चन्दनादिभिर्लिप्तवासिता पूर्व्वं लिप्ता पश्चाद्वासिता धूपैः उभयत्र पूर्व्वपरकालसम्बन्धादेकार्थत्वेन कर्म्मधारयः गन्धयतीति गन्धश्चन्दनादिः वासिता करिणी नार्य्योर्वासितं सुरभीकृते। स्यात् तमाचे खगारावे वासितं वस्त्रवेष्टितइति विश्वः अर्पिता न्यस्ता उर्व्वी महती सुगन्धिः सुरभिः स्रक् माला यस्यां तादृशी च सती सूत्सुरभिपूतेरित्यादिना गन्धादित्प्रत्ययः ॥ ९० ॥

सङ्गच्छ पौंस्नि स्त्रैणं मां युवानं तरुणी शुभे। राघवः प्रोष्यपापीयान् जहीहि तमकिञ्चनं ॥ ९१ ॥

ज०म० सङ्ग। हे पौंस्नि पुमांसमर्हति तद्धिताय वा अर्हार्थे हितार्थे वा स्त्रीपुंसाभ्यान्नञ्स्नञौ स्त्रीप्रत्यये नञ्स्नञीकक्ख्युन्तरुणतलुनाना मुपसंख्यानमिति मां युवानन्तरुणं सङ्गच्छ अङ्गीकुरु गमेः प्रार्थनायां लोट् इषुगमीत्यादिना छत्वम् समोगम्यृच्छेत्यादिना तङ् न भवति सकर्म्मकत्वात् विशेषतः स्त्रैणं स्त्रियै हितमर्हन्तं वा पूर्व्ववत्प्रत्ययः तरुणी युवती सती शुभे कल्याणि शोभतइति इगुपधलक्षणः कः ममापि तादृशोभर्त्तास्तीति चेदाह राघवः प्रोष्यपापीयानिति पापशब्दादतिशायने इयसुन् लुक् मतुपः प्रोष्य पापीयानिति मयूरव्यंसकादित्वात्समासः देशान्तरं यात्वा पापव

त्पर: अतएतमकिञ्चनन्दरिद्रं न विद्यते किञ्चन यस्येति सर्व्व नामाव्ययसंज्ञायाउपसर्जनप्रतिषेधइति वचनान्नाव्ययसंज्ञा तेन न विभक्तिलोप: जहीहि त्यज इत्वस्य जहातेश्चेति वा वचनादि कल्प: ॥ ९१ ॥

भजस्वेत्यादि ॥ हे पौंस्नि हे पुरुषयोग्ये पुरुषहिते वा हे शुभे कल्याणि तरुणी त्वं स्त्रैणं स्त्रीयोग्यं स्त्रीहितं वा युवानं मां भजस्व अङ्गीकुरु विधिनिमन्त्रणेत्यादिना प्रार्थनायां लो सदृशयोराव योर्योगउचितइति भाव: स्त्रीपुंसाभ्यां विकारसंघेत्यादिना स्त्र: नञ्पुंस्त्रियो: तरुणशब्दान्नदादित्वादीप् शोभतेइति शुभा इगु पत्वात् कगृह्यामीजुकइति क: ममापि इदृशोभर्त्तेति चेत् आह राघव: श्रेष्ठपापीयान् देशान्तरं गत्वा पापवज्जर: पापवत् शब्दात् गुणाद्दिष्ठेयसूइति ईयसु: लुक्मददिनामिति वतोर्लुक् ओमंस्त्रडिदिति डित्वात् टेर्लोप: मयूरव्यंसकादित्वादत्र समास इति पर: स्वमते गमकत्वात् असमासत्वेऽपि न क्षति: तमकिञ्चनं दरिद्रं जहीहि त्यज किञ्चनेत्यव्ययेनापि समासे मयूरव्यंसकादि त्वेन निपातनात् वाच्यलिङ्गतेति पर: नञ् तत्पुरुषादर्शआदि त्वादइत्यन्ये न विद्यते किञ्चनमस्येति बहुव्रीहौ नाव्ययकार्य्य मिति केचित् स्वमते द्रविणे किञ्चनं क्लीवइति कोषादनव्ययेन कि ञ्चनशब्देन समास: वस्तुतोऽप्येवमकिञ्चनशब्दोनिर्धनवाची वाच्य लिङ्ग: तथाच कोष: नि:स्वाकिञ्चनदुर्व्विधाइति आद्योरित्यादि ना दाकरत्वं ॥ ९१ ॥

अश्नीत पिबतीयन्ती प्रसिता स्मरकर्म्मणि। वशेकृत्य दशग्रीवं मोदस्व वरमन्दिरे॥ ९२॥

ज०म० अश्नी। अश्नीत पिबतेति मयूरव्यंसकादित्वात्सः तत्र ह्याख्यात माख्यातेन क्रियासातत्य इति पठ्यते सततमश्नीतपिबतेत्येव भृत्य जनानादेष्टुमिच्छतीति सुपश्चात्मनः क्यच् अश्नीतपिबतीयन्ती प्रसि तास्मरकर्म्मणि आधिक्येन प्रवृत्ता कामव्यापारे प्रसितोत्सुका भ्यान्तृतीया चेति चकारात्सप्तमी वशेकृत्यानुवर्त्तिनन्दशग्रीवङ्कृ त्वा साचात्प्रभृतित्वाङ्गतिसंज्ञा मोदस्व हर्षञ्जनय वरमन्दिरे श्रेष्ठगृहे स्थिता॥ ९२॥

भ० अश्नीत्यादि। दशग्रीवं वशेकृत्य आयत्तीकृत्य वरमन्दिरे श्रेष्ठ गृहे त्वं मोदस्व हर्षं जनय वशेइति सप्तम्यन्तप्रतिरूपकोऽव्ययः कृञोपाणावित्यादिना साचादादित्वात् समासः कीदृशी अश्नीत पिबतेति भृत्यजनानादेष्टुमिच्छन्ती अश्नीतपिबतेति सततं नियोगो यस्यां क्रियायां सा अश्नीतपिबता ऐक्यं सोऽव्ययइति समासः तत्र हि सामान्यत्वात् परमात्रस्यैव ग्रहणं तेन क्वचित् स्याद्य न्तस्य क्वचित्त्याद्यन्तस्य क्वचिदुभयस्य चैक्यमिति सम्भं त्याद्यन्त स्यान्यप्रत्ययान्तत्वाभावेऽपि समासे अन्यपदार्थत्वात्स्त्रीत्वं तेनाच क्रियायाविशेषणार्थत्वात् स्त्रियामतश्चाप् क्रेसुंकृत्येचेत्यच स्यादि क्रेरेव ग्रहणमभिधानात् तेन त्यादिक्रेर्न लुक् निपातनाद्रूप सिद्धिरिति परे अश्नीतपिबतामिच्छतीति क्यः स्मरकर्म्मणि काम चेष्टायां प्रसिता तत्परा प्रसितोत्सुकाभ्यांतात्पर्य्ये तृतीया

यन्नन्याविति मरः स्मते विषयविवशा प्रिमवन्धने मः॥ ९२॥

मास्म भूर्ग्राहिणी भीरु गन्तुमुत्साहिनी भव। उद्भासिनी च भूत्वा मे वचःसम्मर्हिनी भव॥९३॥

मास्म। हे भीरु मास्म भूर्ग्राहिणी प्रतिकूला माभूः न यास्यामीत्यमुमर्थङ्गृह्णामीति कृत्वा स्मोत्तरे लङ्चेति चकारात् लुङ् गन्तुमुत्साहिनी उद्युक्ता भव शकधृषेत्यादिना तुमुन् उत्साहिनीति सहोपपदत्वात् ततश्चालङ्कृतशरीरत्वादुद्भासिनी शोभमाना भूत्वा नोऽस्माकं वचःसम्मर्दिनी स्तनाभ्यामुरःस्थलस्य पीडिका भव ग्रहोत्साहोद्भासवमर्दानाङ्ग्रहादिषु पठितत्वात् कर्त्तरि णिनिः च्छेभ्योऽल्लोप्॥ ९३॥ अ०म०

मास्मत्यादि। हे भीरु ग्राहिणी प्रतिकूलार्थग्राहिणी त्वं मास्म भूः न भव गन्तुमुत्साहिनी उद्युक्ता भव उद्भासिनी गन्धालङ्कारादिभिः शोभमाना भूत्वा नोऽस्माकं वचःसम्मर्हिनी स्तनाभ्यामुरःस्थलस्य पीडिका भव सर्व्वत्र यत्रादित्वात् इन् चकारः समुच्चये अस्मद एकत्वे बहुत्वमभिधानात् गौरवव्यञ्जकं॥ ९३॥ भ०

तां प्रातिकूलिकीं मत्वा जिघृक्षुर्भीमविग्रहः। बाहुपपीडमाश्लिष्य जगाहे द्यां निशाचरः॥९४॥

ताम्। यदैवमभिधीयमाना न प्रतिपन्ना तदा तां प्रातिकूलिकीं प्रतिकूलवर्त्तिनीं मत्वा ज्ञात्वा ओजःसहोम्भसा वर्त्तत अ०म०

इत्यधिकृत्य प्रतिकूलं वर्त्ततइत्यस्मिन्नर्थे तत्रत्यनुपूर्व्वेत्यादिना ठक् जिहीर्षुः हर्त्तुमिच्छुः भीमविग्रहः भीषणशरीरः दृष्टराक्षस शरीरस्तु पः सुखेन ह्रियतइति बाहूपपीडमाश्लिष्य बाहुभिरु पपीड्य सप्तम्याञ्चोपपीडइति चकारात् तृतीयान्तउपपदे णमुल् जगाहे रथेनोत्पत्य द्यामाकाशम्निशाचरोगाहते स्म दिवशब्दस्य मानार्थाद्योशब्दश्चौणादिकः गमेर्डोइत्यत्र द्युतेश्चेति वचनात् श्चौ. तोऽम्शसोरित्यालं कालापैस्तु दिव्शब्दादेव व्युत्पादयितुं सूत्र मवधीयते वाम्येति दिव अमि विकल्पेनाकारादेशइति ॥ ९४ ॥

भ० तामित्यादि। उक्तवाक्यानङ्गीकारात् तां सीतां प्रातिकूलि कीं प्रतिकूलवर्त्तिनीं मत्वा जिहीर्षुर्हर्त्तुमिच्छुर्निशाचरोरावणो भीमविग्रहोभयङ्करमूर्त्तिः सन् बाहूपपीडं बाहुभिरुपपीड्य आश्लिष्य तां गृहीत्वा द्यामाकाशं जगाहे गाहङ्विलोडे गतवा नित्यर्थः तृतीयान्तादुपपीडोणमिति परः स्वमते बाहुभ्यामुप पीडः पीडनं यत्रेत्याश्लेषक्रियाविशेषणं उपपीडोघञन्तः द्यामिति द्योशब्दस्य दिव्शब्दस्य वा अमि रूपं प्रतिकूलं यथा स्यात्तथा वर्त्ततइति क्रियाविशेषणस्य कर्म्मत्वात् ठगेकादिति ष्णिकः ॥ ९४ ॥

त्रस्यन्तीं तां समादाय यातोरात्रिञ्चरालयं। तूष्णीं भूय भयादासाञ्चक्रिरे मृगपक्षिणः ॥ ९५ ॥

ज०म० त्रस। त्रस्यन्तीं च तां तद्रूपदर्शनात् समादाय गृहीत्वा याते गच्छतोरावणात् यातेः शतरि पञ्चम्यां रूपम् किम्भूतो

रात्रिञ्चरालयं लङ्कां रात्रौ चरतीति चरेष्टः रात्रे: कृतिविभा षेति मुम् तस्माद्रावणाद्यत् भयन्ततोभयात् तूष्णींभूय तूष्णीमि भुवइति क्वाचेति समासे ल्यवादेश: आसाञ्चक्रिरे आसिताः इया यासश्चेत्याम् मृगपक्षिणः मृगाश्च पक्षिणश्च समानजातीयानामि ति वचनादेकवद्भावोऽत्र न भवति ॥ ९५ ॥

त्रस्यन्तीमित्यादि। त्रस्यन्तीं बिभ्यतीं तां सीतां समादाय गृहीत्वा रात्रिञ्चरस्यालयं लङ्कां याती गच्छतोरावणाद्भयात् मृगाश्च पक्षिणश्च तूष्णींभूय मौनिनोभूत्वा आसाञ्चक्रिरे स्थित वन्तः आसङ्उपवेशे इजादेरित्याम् भस्कन्धामः यातइति शत्रन्तं रात्रौ चरतीति पचादित्वाट्टम् रात्रेर्मनृवाकृति तूष्णीमित्यव्ययं मौनार्थे वर्त्तते व्यस्यन्यनुकारइत्यादिना ऊर्य्यादित्वात् समासे क्वाल्यप्॥ ९५ ॥ भ०

उच्चैरारप्स्यमानां तां क्रपणां रामलक्ष्मणौ। जटा युः प्राप पक्षीन्द्रः परुषं रावणं वदन् ॥ ९६ ॥

एते प्रकीर्णकाः।

उच्चैः। तां सीताञ्जटायुः पक्षीन्द्रः रावणम्परुषन्निष्ठुरं वदन् प्राप प्राप्तवान् कीदृशीं उच्चैरारप्स्यमानां हा राम हा लक्ष्मणेति शब्दौ द्वौ उच्चैर्महता ध्वनिना पुनःपुनारपन्तीमित्यर्थः रपेः शब्दकर्म्मकत्वात् क्रियासमभिहारेयङ् क्रपणान्दीनाम् इति प्रकीर्णकाण्डः प्रथमः समाप्तः ॥ ९६ ॥ ज०भ०

उच्चैरित्यादि। उच्चैर्यथा स्यात्तथा रामलक्ष्मणौ रारप्स्यमानां भ०

हा राम हा लक्ष्मणइति पुनःपुनराक्रयमानां कृपणां दीनां सीतां जटायुः पक्षिराजः प्राप रावणं परुषं निष्ठुरं वदन् वदिर्दि कर्म्मकः रवप्रब्दे मूषस्तूचेत्यादिना यक्। इति गौराङ्गमल्लीक पुत्रीभरतमल्लिकः। प्रकीर्णकाण्डव्याख्यानं मुग्धबोधमतेऽकरोत् ॥ ९६ ॥

## अतःपरं टाधिकारः ॥

द्विषन् वनेचराग्र्याणां त्वमादायचरोवने। अग्रेस रोजघन्यानां माभूः पूर्व्वसरोमम ॥ ९७ ॥

ज०म० इतः परमधिकारकाण्डमुच्यते यत्र प्राधान्येनैकैकमधिकृत्य लक्षणप्रदर्शितम् तदधिकारकाण्डम् शेषलक्षणेषु प्रकीर्णकमेव द्रष्टव्यम् एवञ्च कृत्वा अन्तरान्तरा तत्सूचनार्थंप्रकीर्णकश्लोका भिधानमत्र च काण्डे निर्द्दिष्टसंज्ञकाश्चत्वारः परिच्छेदाः तत्र प्रथमे आद्यं टप्रत्ययमधिकृत्योच्यते सर्गार्थस्य विवक्षितस्यापरि समाप्तत्वात् तमेवाभिसन्धायाह। द्विषन्नित्यादि। एवञ्च कृत्वा मिश्रकउच्यते द्वयोरप्यत्र प्राधान्येन विवक्षितत्वात् परुषं वदन् कीदृशं वे द्विषन्माभूः पूर्व्वसरोममेति ममाग्रतोभूत्वा मागा इत्यर्थः पूर्व्वं सरतीति पूर्व्वे कर्त्तरीति टः यतस्त्वमग्रेसरोजघ न्यानामग्रेसरतीति पुरोग्रतइत्यादिना टः अघन्यइति श्वाद्यादि भ्योयइतीवार्थे यः पापानामग्रगमस्त्वम् कुतः आदायचरोवने आदाय चरतीति भिक्षासेनेत्यादिना वने चरन्तीति वनेचराः

अधिकरणे चरेष्टः तेषामग्र्याः प्रधानास्तेषाम् तानादायचरसि भक्षयसि कर्मणि षष्ठी ॥ ९७ ॥

इतः प्रभृत्यधिकारकाण्डमुच्यते एकैकं विषयमाश्रित्य लक्षण प्रदर्शनं यत्र तदधिकारकाण्डं तत्रापि लक्षणान्तरसम्बन्धात् प्रकीर्णतासीति सूचनार्थं मध्ये मध्ये प्रकीर्णश्लोकाभिधानं विवक्षितस्य सर्गार्थस्यापरिसमाप्तत्वात् सर्गमध्ये काण्डान्तरारम्भेन द्रोषाय एवञ्चायं सर्गोमिश्रकउच्यते द्वयोरप्यत्र प्राधान्येन विवक्षितत्वात्।, अथ टाधिकारः। द्विषन्नित्यादि। परुषं वदन्ति यदुक्तं तत्किमित्याह हे वनेचराग्र्याणां मुनीनां द्विषन् अचो त्वं मम पूर्व्वचरोऽग्रयायी माभूः यतस्त्वं जघन्यानां नीचानां अग्रेसरः प्रथमः वने आदाय गृहीत्वा अर्थात् सीतां चरसि गच्छसीति आदायचरः द्विषन्निति द्विषः अतो वेति परः स्वमते द्विषच्छब्दः शत्रुवाचित्वे रूढएव विद्वेषार्थे तु कोपमवदिति शतृः उभयथा सम्बन्धे षष्ठी वने चरतीति पचादित्वादन् अभिधानात् सप्तम्यलुक् अग्रेभवोऽग्र्यः श्रेष्ठउच्यते रेफान्तपाठेऽग्रशब्दएव श्रेष्ठार्थः तथाच। अग्रमालम्बने प्रान्ते परिमाणे पलस्य च। प्रान्ते समन्तादधिके प्रधाने प्रथमार्धयोरिति विश्वः।, द्रामागेहागित्यादौ यत्वर्ज्जनात् न दाजहत्वं चरेः पूर्व्ववदन् गमकत्वात् इत्तार्घाः सिद्धसंघैरितिवत् क्रियायाः कारकापेक्षायामपि यवन्तेन समासः अविवक्षितकर्म्मत्वात् सापेक्षत्वाभावेन वा समासः असमासेऽपि न क्षतिः मयूरव्यंसकादित्वात् सापेक्षत्वेऽपि समासइति परः अग्रे इत्येकवचनान्तमव्ययं इकु

ष्टइति टः जघनं पश्चाद्भागः तत्तुल्योजघन्यः विकारर्यघेत्यादि ना तुल्यार्थे ण्यः ॥ ९७ ।

यशस्करसमाचारं ख्यातं भुवि दयाकरं । पितुर्व्वाक्यंकरं रामं धिक्त्वां दुन्वन्तमत्रपं ॥ ९८ ॥

ज०म० यश । रामन्दुन्वन्तमुपतापयन्तमत्रपनिर्लज्जन्धिक् त्वां गर्हा टुदुउपतापे इत्यस्य सौवादिकस्य शतरि हुश्नुवोःसार्व्वधातुक इति यणादेशे रूपम् कीदृशं रामं यशस्करसमाचारं समाचरणं समाचारः चरितं भावे घञ् यशस्करोतीति यशस्करः कृञोहेत्वित्यादिना टः विसर्ज्जनीयस्य सः यशस्करणहेतुभूतः समाचारोयस्य ख्यातम्भुवि प्रसिद्धन्दयाकरङ्करुणाकरणशीलं ताच्छील्ये टः पितुर्वाक्यकरम्पितुर्वचनानुष्ठाने अनुकूलं आनुलोम्ये टः ॥ ९८ ॥

भ० यशस्कित्यादि । रामं दुन्वन्तं उपतापयन्तं अत्रपं परस्त्रीहरणेन निर्लज्जं त्वां धिक् धिक्समयेत्यादिना द्वी टुदुउपतापे स्वादित्वात् शतरि नुःश्नुवोरिति वंः रामं कीदृशं यशस्करः समाचारोयस्य तं यशःकरोतीति सकृष्टइति टः अत्र ढांतृष क्षिति सूत्रात् ढादित्यनुवर्त्तते सेतुकस्येति वेः सः कृञोहेत्वादावर्थे टइति परः स्वमते यशस्करी विद्येति निर्द्दिशता विद्याया यशस्करणे हेतुत्वात् हेत्वाद्यर्थः सूचितः अन्यथा विद्येति ग्रहणस्य वैयर्थ्यं स्यात् हेत्वाद्यर्थानुक्तावपि न क्षतिः सम्यगाचरणं

समाचारस्तेषां सम्ऽलनटोऽचे इति सम् भुवि ख्यातं इयाक रणशीलं पूर्व्ववट्टः परमते ताच्छील्यार्थेऽपि पितुर्व्वाक्यानुष्ठाने ऽनुकूलं पूर्व्ववट्टः परमते ऽनुकूलार्थेऽपि वाक्यशब्देनाच तदभि धेयमुच्यते ॥ ९८॥

अहमन्तकरो नूनं ध्वान्तस्येव दिवाकरः। तव राक्षस रामस्य नेयः कर्म्मकरोपमः ॥ ९९ ॥

अहम्। हे राक्षस अहन्तव नूनमवश्यमन्तकरः विनाशयिता जं॰म॰ कीदृशः रामस्य नेयोवश्यः अचोयत् कर्म्मकरोपमः भृतकतुल्यः कर्म्मणि भृताविति टः ध्वान्तस्येव दिवाकरः यथान्धकारस्या न्तकरो दिवाकरः सूर्य्यः तथा अन्तकरदिवाकरौ दिवाविभेति टप्रत्ययान्तौ एवमुक्त्वा सम्पपातेति सम्बन्धः ॥ ९९ ॥

अहमित्यादि। हे राक्षस नूनं निश्चितं अहं तव अन्तकरः भ॰ नाशयिता अन्तं करोतीति टः यथा दिवाकरः सूर्य्यो ध्वान्तस्य अन्धकारस्य अन्तकरः दिवाशब्दोऽयमाधाररूपदिनवचनो ऽव्ययः तेन दिवा दिवसे प्राणिनस्तेष्टायुक्तान् करोतीति दिवादि त्वाट्टइति परः स्वमते दिवाशब्दोऽयंमव्ययः सप्तम्यन्तत्वं प्राथिकं तेन दिवा दिनं करोतीति पूर्व्ववट्टः वाऽव्ययाद्वा दिवा दिवसे करोरश्मिर्यस्य इति केचित् ध्वान्तमिति ध्वनेस्तमसि नि चुभवाढ इत्यादिना निपातः अहं कीदृशः रामस्य नेयः वश्यः वश्यः प्रणे योनिभृतइत्यमरः कर्म्मकरोपमः भृतकतुल्यः कर्म्म करोतीति टः कर्म्मशब्दाद्भृतौ टइति परः ॥ ९९ ॥

सतामरुष्करं पक्षी वैरकारं नराशिनं। हन्तुं कल
हकारोऽसौ शब्दकारः पपात खं ॥ १०० ॥

इति टाधिकारः ॥

ज॰म॰ सता। एवमुक्त्वा असौ जटायुः पक्षी खमाकाशमपपात पतितः किमर्थं नराशनं राक्षसं हन्तुं हनिष्यामीति कीदृशं राक्षसं सता मरुष्करं धर्मे स्थितानामपीडाकरम् अरुःशब्दः पीडोपलक्षण परः दिवाविभेति टः वैरकारं वैरकरणशीलं कलहकारः पक्षी कलहयितुमनुकूलः अनयोर्नशब्दश्लोकेति टे प्रतिषिद्धेऽणेव भव ति कर्मण्यणः प्राप्तिरस्तीति टाधिकारउदाहृतः कियत्खमपपात यावति दूरे शब्दपातस्तावत्खमिति टाधिकारः समाप्तः ॥ १०० ॥

भ॰ सतामित्यादि। एवमुक्त्वा असौ पक्षी जटायुर्नराशिनं रा क्षसं हन्तुं खमाकाशं पपात जगाम कीदृशं राक्षसं सतां साधूनां अरुष्करं व्रणकरं पीडाकरमित्यर्थः पूर्ववट्टः निष्पतन्य इति वत् षत्वं वैरं विरोधं करोतीति वैरकारस्तं ढात्षष्ठित्यस्य कुम्भ कारइत्युदाहरणेन कुम्भादेःकञः षण् अन्यस्मात् सकुष्टइत्यस्य विषयइति सूचितं तेनात्र कुम्भादित्वात् षण् पक्षी कीदृशः कलह कारः कलहं करोतीति पूर्ववत् षण् एवं शब्दकारः शब्दपात मिति पाठे शब्दस्य पातोयत्रेति खविशेषणं यावद्दूरं शब्दगमनं तावद्दूरमित्यर्थः शब्दस्येव पातोगतिर्यत्रेति पतनक्रियाविशेषणं वा द्रुतेन यथा शब्दस्य शीघ्रगमनं तथास्येति ध्वनितं इति। टाधि कारः ॥ १०० ॥

अतः परं प्रकीर्णकाः॥

धुन्वन् सर्व्वपथीनं खे वितानं पक्षयोरसौ। मांस शोणितसन्दर्शं तुण्डघातमयुध्यत॥१०१॥

इतः प्रकीर्णकश्लोकानाह। धुन्वन्नित्यादि। असौ पक्षी अयुध्यत ज०म० युध्यते स्म युधेर्दैवादिकस्य लङि रूपम् तुण्डघातमिति क्रियाविशेषणम् तुण्डेन चञ्च्वाघातो हननं यस्मिन् युद्धे इति करणे हन इति न णमुल् कषादिषु यथाविध्यनुप्रयोगात् अहिंसार्थत्वाच्च तदारम्भस्य यथा पादघातम्भूमिं हन्तीति हिंसार्थानाञ्च समानकर्म्मकाणामित्यनेनापि न भवति समानकर्म्मकताभावात् अकर्म्मकत्वाद्युधेः तेन भावे घञ् धुन्वन् कम्पयन् खे आकाशे पक्षयोर्वितानं सर्व्वपथीनं सर्व्वः पन्था इति पूर्व्वकालैत्यादिना सः ऋक्पूरिति समासान्तोऽकारः सर्व्वपथान् व्याप्नोतीति तत्सर्व्वादेरित्यादिना खः मांसशोणितसन्दर्शं कृत्वा तत्र्वेन मांसं शोणितञ्च दृष्ट्वा कर्म्मणि दृशिविदोः साकल्य इति णमुल् अमैवाव्ययेनेति सः॥१०१॥

अथ प्रकीर्णकाः। धुन्वन्नित्यादि। असौ-जटायुः खे आकाशे भ० पक्षयोर्व्वितानं विस्तारं धुन्वन् कम्पयन् मांसशोणितसन्दर्शं यथा स्यात् तुण्डघातं यथा स्यात् तथा अयुध्यत युध्यौ-ङ्-युद्धे मांसरक्तयोरर्थाद्रावणस्य सम्यग्दर्शोदर्शनं यत्र तुण्डस्याघातो यत्र इति युद्धक्रियाविशेषणं दर्शघातौ घञन्तौ परे तु साकल्येन मांसं शोणितञ्च दृष्ट्वा रावणस्येत्यर्थात् दृशोणम् साकल्ये एवं तुण्डेन हत्वा तुण्डघातं तृतीयान्तादासक्तौ णम् तुण्डघातेन युद्धसम्भवादा

सन्तिरच गम्यतइत्याङः वितानं कीदृशं सर्व्वसायी पन्थाः स्येति सर्व्वपथः पथ्यपुरःसे इति अः सर्व्वपथं व्याप्नोतीति ढघेकादिति ईनः॥ १०१॥

न विभाय न जिह्राय न चक्लाम न विव्यथे। आम्ना नोविध्यमानोऽपि रणान्निववृते न च॥ १०२॥

ज०म० नवि। आम्नानः पक्षी प्रहरन् आङोयमहनइति तङ् न विभाय न भीतः तस्मान्न जिह्राय न लज्जितः सम्यक्मया न हत इति न चक्लाम न क्लान्तः न विव्यथे व्यथोलिटीति सम्प्रसारणम् जितश्रमत्वात् विध्यमानोवा वाशब्दश्चार्थे परेण हन्यमानश्च न विव्यथे न पीड़ां भेजे सत्वाधिकत्वात् रणाच न निववृते न निवृत्तः अभग्नोत्साहत्वात्॥ १०२॥

भ० नवीत्यादि। असौ पक्षी आम्नानः प्रहरन् न विभाय न भीतः मया ताड़ितोऽपि न हतइति न जिह्राय न लज्जते स्म न चक्लाम नायमर्थोबभूव न विव्यथे न पीड़िता भवति स्म विध्यमानः परेण ताड्यमानोऽपि रणात् न निववृते न निवृत्तः अभग्नोत्साहत्वात् सर्व्वत्र ठी व्यथेस्तु व्ययएवेति जिः आम्नानइति आत्मा कुठादव्ठाचाहनयमइति मं किम्बा आम्नानः प्रचुर्हिंसमवक्तः प्रक्रियस्ताङ्क्रीड्ये इति म्रानः॥ १०२॥

पिशाचमुखधौरेयं सच्छन्नकवचं रथं। युधि कद्रुयवंशीमं वभञ्ज ध्वजशालिनं॥ १०३॥

एते प्रकीर्णकाः।

पिशा। युधि सङ्ग्रामे पक्षी रथं बभञ्ज भग्नवान् तस्य पुष्पका ज०म०
दन्यत्वात् तथाहि कद्रथवत् कुत्सितरथमिव रथवदयोस्येति
कदादेशः धुरं वहन्ति धौरेयाश्चाः धुरोयड्ढञौ पिशाच
स्येव मुखं येषान्ते धौरेयायत्र रथे तम्पिशाचमुखधौरेयं सच्छो
भनं शस्त्रकवचञ्च यस्मिन् तम्भीमम्भयानकन्तथा धुर्य्यत्वात् ध्वज
शालिनं ध्वजवन्तं शालिन्छब्दः किन्प्रत्ययान्तस्तदन्तमाह अन्य
स्त्वाह ध्वजेन शालितुं श्लाघयितुं शीलमस्येति णिनिः अनेकार्थ
त्वाद्धातूनामिति। एते प्रकीर्णकाः।॥ १०२॥

पिशाचेत्यादि। जटायुः युधि संग्रामे रावणस्य रथं बभञ्ज भ०
कद्रथवत् कुत्सितरथमिव कत्कचिरथवदइति कुशब्दस्य क
दादेशः कीदृशः पिशाचस्येव मुखं येषां तेऽश्वाधौरेयायत्र
धुरं वहतीत्यर्थे ढयेकादिति ण्येयः सत् शोभनं विद्यमानं वा
छत्रं कवचं वा यस्मिन् छत्रकवचाभ्यां सह रथं बभञ्जेत्यर्थोवा
भीमं भयानकं ध्वजशालिनं ध्वजयुक्तं शालिन्छब्दस्तद्वतायां
अस्त्यर्थे शालिन् प्रत्ययइति वृद्धाः ध्वजेन शलते शोभतेशलादि
त्वाणिन् धातूनामनेकार्थत्वात् शालिरत्र दीप्त्यर्थइति केचित्
ध्वजेन शाडयितुं शीलं यस्येति उभयोरैक्यमिति स्मरणात् शाडृ
श्लाघायामित्यस्य रूपमित्यपरे शलहुकस्य भइत्यस्मात् कमासु
कयनेइत्यस्मादा ओणिविति केचित्। इति प्रकीर्णकाः॥ १०२॥

## अतःपरं आमधिकारः।

संत्रासयाञ्चकारारिं सुरान् पिप्राय पश्यतः। संत्याजयाञ्चकाराथ सीतां विंशतिबाहुना॥१०४॥

ज०म० इतःप्रभृत्याममधिकृत्याह सन्ना। अथैतस्मिन्युद्धप्रस्तावे स पक्षी सीतां विंशतिबाहुना रावणेन त्याजयाञ्चकार त्याजितवान् गत्यादिषु त्यजेरसङ्ग्रहात् तृतीयैवं भवति कस्मात्त्याजितवानित्याह सन्त्रासयाञ्चकारारिं यस्मादरिं रावणन्त्रासितवान् अकर्म्मकत्वात् त्रासेर्ण्यन्तावस्थायामरेः कर्म्मत्वम् आभ्यां हेतुमण्ण्यन्ताभ्याम् कास्प्रत्ययादित्यादिना आम् आमोऽमित्वम व्यवन्तत्वात् आमइति लेर्लुक् अयामन्तेत्यादिना अयादेशः आमकारान्तस्य कृत्संज्ञायां प्रातिपदिकत्वे प्रथमैकवचनम् तस्याव्ययादिति लुक् स्वरादिषु आमश्चामिति पठितत्वादव्ययत्वम् मन्तस्यानभिव्यक्तपदार्थत्वात् कृञ्चानुप्रयुज्यतइत्यादिना लिट्परस्य कृञोऽनुप्रयोगः कर्त्रभिप्रायाभावाभावेऽनुप्रयोगे तङ् न भवति सुरांश्च पश्यतोयुद्धञ्जटायुः पिप्राय प्रीणितवान् अनुत्रासनं सीतात्याजनञ्च देवानाम्प्रीतेः कारणम्॥१०४॥

भ० अथामधिकारः। संत्रेत्यादि स पक्षी अरिं रावणं सम्यक् त्रासयाञ्चकार अतएव पश्यतोयुद्धमवलोकयतः सुरान् देवान् पिप्राय प्रीणितवान् अथ त्रासानन्तरं विंशतिबाहुना रावणेन सीतां संत्याजयाञ्चकार त्यजेर्ण्यन्तौ णौचेरित्यस्य विषयाभावात् प्रयोज्यकर्त्तरि तृतीया त्यजेरकर्म्मकत्वात् प्रयोज्यकर्त्तुः कर्म्मत्वं उभयत्र प्रत्ययान्तत्वात् णिजादीत्वाम् अस्कृञ्चमइति कृञो

ऽनुप्रयोगः ओर्गुरित्यनुस्वारः अपेक्षमनोरिति ञः अत्र विरा मस्रोकारात् अनुस्वारस्य वर्गान्तो वा भवतीति कालापाः पिप्रा येति अनेकाचधातोराम् नानेकाच इत्युपन्यस्तं विशतिवाङ्मा इति साभिप्रायपदेन द्वावयवस्य चाधाधिक्यं अट्टायोर्व्याधिक्य मु सूचितं ॥ १०४ ॥

असीनो रावणः कासाञ्चक्रे शस्त्रैर्निराकुलः। भूय स्तं वेभिदाञ्चक्रे नखतुण्डायुधः खगः॥ १०५ ॥

असी। असीतः परित्यक्तसीतो रावणः आकाशस्थः कासाञ्चक्रे जं॰म॰ कुत्सितमभिहितवान् एह्येहीति विहगाधिपेति कासृशब्दकुत्सा यामित्यनुदात्तेत्कासित्यादिना आम् शस्त्रैः इत्थम्भूते तृतीया निराकुलः पूर्व्वम्वाऽऽज्ञमिः सीताग्रहणे व्याकुलत्वात् भूयः पुनरपि खगः पक्षी डप्रकरणे अन्येष्वपि दृश्यत इति वचनात् गमेर्डः तन्नि शाचरं वेभिदाञ्चक्रे अत्यर्थम्भिन्नवान् वेभिद्यतेर्यङन्तादाम् नख तुण्डान्येवायुधानि यस्य ॥ १०५ ॥

असीत्यादि। असीतस्त्यक्तसीतो रावणः आकुलः सन् शस्त्रैः म॰ कासाञ्चक्रे शुशुभे कासृ शब्दे धातूनामनेकार्थत्वात् अत्र दीप्त्यर्थः दीप्त्यर्थोऽपि दन्त्यान्तकासृधातुरस्तीति केचित् यद्वा पक्षिणं प्रति एहि एहि खगाधम शास्यामीत्यादि कुत्सितशब्दं कृतवान् अस्मिन् पक्षे शस्त्रैरिति विशेषणे तृतीया दरिद्राकासका सेति पक्षे आम् पूर्व्वं सीताग्रहणे व्याकुलः सम्प्रत्यनाकुलः भूयः पुनरपि खगः पक्षी तं रावणं वेभिदाञ्चक्रे अत्यर्थं भिनत्ति स्म

कौटम्ब: नखतुम्बप्रहरण: भिदेर्मूवलयष्ट्रूपाटेत्यादिना यङ् प्रत्ययान्तत्वात् र्व्विजादीत्यादिना ग्राम् यङोलुक् यङ्लुकलोपे परेणगुणी इति निषेधात् न गुण: र्व्विजादीत्यादौ यामिति विषये सप्तमी तेन यङ्लुकि परस्मैपदविषये ह्यनुभयपदित्वात् ग्रचा त्मनेपदवदनुप्रयोग: खे गच्छतीति खगजमादिति ड: ॥ १०५ ॥

हन्तुं क्रोधवशादीहाञ्चक्राते तौ परस्परं। न वा पलायाञ्चक्रे विईयाञ्चक्रे न राक्षस: ॥ १०६ ॥

ज०म० हन्तुम्। तौ पक्षिरावणौ क्रोधवशात् क्रोधाधीनतया परस्पर मन्योन्यं हन्तुमीहाञ्चक्राते चेष्टाङ्कृतवन्तौ इजादेरित्यादिना ग्राम् वि: पक्षी जनिघसिभ्यामित्यधिकृत्य वेञोडिदित्यौणादिक इक् नवा नैव वाशब्द एवार्थे पलायाञ्चक्रे पलायित: उपसर्ग स्यायताविति लत्वम् राक्षसस्य न दयाञ्चक्रे न दयते स्म पक्षि णमुत्त्वहं कथं व्यापादयामीति उभयत्रापि दयायासश्चेत्याम् ॥ १०६ ॥

भ० हन्तुमित्यादि। तौ पक्षिरावणौ क्रोधवशात् क्रोधाधीनतया परस्परमन्योन्यं हन्तुमीहाञ्चक्राते ईह चेष्टे परस्परं व्यतिलुन भीत्युदाहरता व्यतीहारे परस्परशब्दोमनीषादित्वान्निपा तितइति सूचितं वि: पक्षी न पलायते स्म राक्षसोऽपि हन्तुं नदयां कृतवान् सर्व्वत्र र्व्विजादीत्याम् पलायाञ्चक्रइति परापूर्व्वस्या यधातोरूपं रेफस्य लत्वं मनीषादित्वात् मामाङ्मञ् नञ्हिनान वाइत्येते प्रतिषेधार्था: एवार्थे ग्रत्र वाशब्दइत्यन्ये ॥ १०६ ॥

उपासाञ्चक्रिरे द्रष्टुं देवगन्धर्व्वकिन्नराः। छलेन पक्षौ लोलूयाञ्चक्रे क्रव्यात् पतत्त्रिणः॥ १०७॥

उपा। देवगन्धर्व्वकिन्नराद्रष्टुं युद्धन्तस्थामदति उपासाञ्चक्रिरे उपगताः पूर्व्ववदाम् क्रव्यात् रावणः क्रव्यम्मांसमत्तीति क्रव्यात् अदोनन्नइति विट् पतत्त्रिणः पक्षिणः पक्षौ लोलूयाञ्चक्रे अत्यर्थं लूनवान् यङ्प्रत्ययान्तत्वादाम् छलेन मायया प्रसह्य जेतुम् अक्यनइति भस्नेनेति पाठान्तरम्॥ १०७॥ ज०म०

उपेत्यादि। देवागन्धर्व्वाः किन्नरास्च द्रष्टुं अर्थात् युद्धं उपासाञ्चक्रिरे उपगताः आसङ्उपवेशे व्विजादीत्याम् दीव्यतीति देवः पचादित्वादन् गानं धर्म्मोऽस्येति गन्धर्व्वो मनीषादिः नराकृतित्वात् कुत्सितोनरः किन्नरः ईषदर्थे किंशब्दइत्यन्ये क्रव्याद्रावणः छलेन कपटेन पतत्त्रिणः पक्षिणः पक्षौ लोलूयाञ्चक्रे अत्यर्थं चिच्छेद त्यान्तत्वादाम् क्रव्यं मांसमत्तीति क्विप् ॥ १०७॥ भ०

प्रलुठितमवनौ विलोक्य छत्तं दशवदनः खचरोत्तमं प्रहृष्यन्। रथवरमधिरुह्य मीमधुर्य्यं स्वपुरमगात् परिगृह्य रामकान्तां॥ १०८॥

इति भट्टिकाव्ये पञ्चमः सर्गः॥

प्रलुठितमित्यादि। खचराः पक्षिणः खे चरन्तीति अधिकरणे ज०म०

चरैष्ठः तेषामुत्तमं जटायुं कृत्तं छिन्नं लूनपक्षत्वात् अवनौ भुवि प्रलुठितं विलोक्य प्रहृष्यन् हर्षं प्राप्नुवन् निवृत्तोविघ्नकारीति दशाननोरथवरं स्मरणात् प्राप्तं पुष्पकाख्यमारुह्य भीमधुर्य्यं रामकान्तां सीतां तथैव परिगृह्य स्वपुरमगात् गतवान्॥ १०८ ॥

इति जयमंगलाख्यायां पंचमः सर्गः ॥

भ॰ विलुठितमित्यादि। कृत्तं छिन्नं लूनपक्षत्वात् अवनौ भूमौ विलुठितं पतितं खचरोत्तमं जटायुं विलोक्य प्रहृष्यन् हृष्टोभवन् रावणोरथवरं अधिरुह्य रामकान्तां सीतां परिगृह्य स्वपुरं लङ्कां अगात् गतः रथानां वरः श्रेष्ठः पुष्पकाख्यः स्मरणादुपागतः तं कीदृशं भीमाधूर्य्याश्वायत्र धुरं वहतीति ढघेकाविति यः ॥ १०८ ॥

इति गौराङ्गमल्लिकात्मजश्रीभरतमल्लिकविरचितायां मुग्धबोधिन्यां भट्टिटीकायां सीताहरणोनाम मिश्रकः पञ्चमः सर्गः ॥

तोषाञ्चकार कामाग्निर्दशवक्त्रमहर्निशं। विदाञ्चकार वैदेहीं रामादन्यनिरुत्सुकां ॥ १ ॥

ज॰म॰ अत्राधिकारस्यापरिसमाप्तत्वात्तमेव विवृत्याह॥ तोषाञ्चकारेत्यादि अथ शब्दोवक्ष्यमाणतृतीयश्लोके यः सोऽत्र द्रष्टव्यः अथ तस्मिन् सीतापरिग्रहे जाते कामाग्निः कामोऽग्निरिव दशवक्त्रं दशाननमोषाञ्चकार ददाह उषदाहे उषविदेत्याम् अहर्निशं अहश्च निशा च सर्व्वोद्वन्द्वोविभाषैकवद्भवतीत्येकवद्भावादत्यन्तसंयोगे द्वितीया अह्नोनकारस्य रोऽसुपीति रत्वं कस्माद्ददाह

इत्याह रावणोवैदेहीमन्यत्रिरुत्सुकां रामादन्यस्मिन् सर्व्वत्र नि रभिलाषां विदाञ्चकार अगुणत्वं विदिस्सयेति विदेरगुणत्वात् गुणभावः॥ १॥

ओषामित्यादि। अत्रापि सएवाधिकारः अपरिसमाप्तत्वात् भ० कामोऽग्निरिव दशवक्त्रं रावणं अहर्निशं ओषाञ्चकार उषदाहे दरिद्राकासकासेति पक्षे आम् अहश्च निशा च इति समाहार द्वन्द्वः सदाश्वादीति दौ दशवक्त्रपदन्यासेन विंशत्या नेत्रैरेकदैव सीतासौन्दर्य्यातिशयविलोकनात् कामपीडानिर्भरत्वं द्योत्यते वैदेहीं रामादन्यस्मिन् सर्व्वत्र निरुत्सुकां निरभिलाषां विदाञ्च कार ज्ञातवान् कास्वायामिति वेत्तेर्डाम् क्लित्वान्न गुणः॥ १ ॥

प्रजागराञ्चकारारेरीचाञ्चनिशमादरात्। प्रबिभयाञ्चकारासौ काकुत्स्थादभिशङ्कितः॥ २॥

प्रजागराञ्चकारेत्यादि। अरेरामस्य ईहासु चेष्टासु गुरोश्च ज०म० इत्यकारः आदरादादरेण प्रजागराञ्चकार जागरितवान् अशुचिकीर्षितज्ञानपरोऽभूदित्यर्थः पूर्व्ववदाम् अनिशमिति नि शाक्रियाविच्छेदोनास्ति यस्मिन् प्रजागरणइति निशेति क्रियाविच्छे दोपलक्षणं प्रायेण हि निशायामपि क्रियाणां प्रवर्त्तनं किमिति जागरितवानित्याह काकुत्स्थादसौ प्रबिभयाञ्चकार प्रभीतवान् भीह्रीत्यादिनाम् स्नुवत् कार्य्ये धातोर्गुणाद्यादेशौ अभिशङ्कितः किमियं करिष्यतीति॥ २॥

भ० प्रजेत्यादि। असौ रावणोऽरेरामस्य ईहासु चेष्टितेषु अनिशं निरन्तरं प्रजागराञ्चकार सावधानोबभूव आदरात् आदरं कृत्वा ल्यवर्थे पञ्चमी हेतौ वा काकुत्स्थात् प्रविभयाञ्चकार अति भीतः ञिभीभिभीत्यां पञ्चाम्वाभीह्रीति पञ्चाम् श्लिाद्वले क्वादौरे द्विः पुर्घूकदति गुणः श्वस्कृन्वामदति कृञनुप्रयोगः अतिशङ्कितः किमयं करिष्यतीति नानाविकल्पव्याकुलः॥२॥

न जिह्रयाञ्चकाराथ सीतामभ्यर्थ्य तर्ज्जितः। नाप्यूर्ज्जां विभरामास वैदेह्यां प्रसितोभृशं॥३॥

अ०म० न जिह्रयाञ्चकारेत्यादि। सीतामभ्यर्थ्य याचित्वा न जिह्रया ञ्चकार न लज्जितः तर्ज्जितः भर्त्सितोऽपि तथैवेत्यर्थात् नाप्यूर्ज्जां बलं विभरामास धारितवान् कृञिति प्रत्याहारग्रहणादस्तेरष नुप्रयोगः ह्रीधातोर्गुणायादेशौ डुभृञ्धारणपोषणयोः उभय चापि पूर्ब्बवदाम् गुणश्च कथं न धारितवान् इत्याह वैदेह्यां प्रसितः प्रसक्तः भृशमत्यर्थं॥३॥

भ० नजीत्यादि। अथ सीतायाअन्यनिरुत्सुकमनागनन्तरं सी तामभ्यर्थ्य बहुधा अनुनीय तया तर्जितोभर्त्सितोऽपि रावणो न जिह्रयाञ्चकार ह्रीलिंलज्जे ऊर्ज्जां बलमपि न विभरामास भृ ञिभृतिपुष्ठ्योः उभयत्र पूर्ब्बवत्पञ्चाम् भृञादेर्ङ्किः श्लेरेदति भृधा तोः श्लिङ्किः आमोऽनुप्रयोगअस्तेर्भून भवतीति परः समते भस्कृ न्वामइत्यत्र प्रत्यर्थे इत्यस्य ग्रहणं गमस्तेः यथा व्याकरणा

मारसम्वादात् अस्तेरेवानुप्रयोगः अतएवादेशस्यास्तेरनुप्रयोग
स्य वैयर्थ्यं भुवोऽनुप्रयोगस्योक्तत्वात् तेनामोऽनुप्रयोगे भूररेरित्य
स्य न विषयइति बोध्यं ऊर्ज्जः सेम्भ्वात्वरेतरिति अप्रत्ययः स्त्री
त्वञ्च ऊर्ज्जमिति पाठे क्विप् कुतइत्याह वैदेह्या प्रषितश्चासम्बः
तच्चिन्तया बलक्षयात्॥ ३॥

•

विदांकुर्व्वन्तु रामस्य वृत्तमित्यवदत् स्वकान्। रक्षां
सि रक्षितुं सीतामाशिषच्च प्रयत्नवान्॥ ४॥

विदांकुर्व्वन्त्वित्यादि। स्वकानात्मीयान् शुकसारणादीन् अव जं॰सं॰
दद्गुक्तवान् किमित्याह रामस्य वृत्तमनुष्ठितं किन्तस्येहा गन्तुमु
द्यमोऽस्ति न वेति विदांकुर्व्वन्तु विदांकुर्व्वन्त्वित्यन्यतरस्यामिति
निपातितं सीतां रक्षितुं रक्षांसि आशिषदादिष्टवान् शासेः सर्त्ती
त्यङ् शासइदङ्हलोरिति शासेरुपधायाइत्वं शासिवसीति षत्वं
प्रयत्नवान् प्रयत्नपरः। आमधिकारोगतः॥ ४॥

विदामित्यादि। रामस्य वृत्तं चेष्टितं भवन्तोविदांकुर्व्वन्तु भ॰
जानन्तु इति स्वकान् आत्मीयान् दूतान् रावणोऽवदत् कामा
चाराज्ञानुकल्पिति वेत्तेर्लोम् ग्यां कृञनुप्रयोगएव प्रयत्नवान् सन्
सीतां रक्षितुं रक्षांसि आशिषत् आदिष्टवान् चकारः समुच्चये
शासुअनुशिष्टौ शासुशियुदिति ङः शासुकिङ्कुसक्ते इति इत्वं
क्विसात्कृतइति षत्वं। इत्यामधिकारः॥। ४॥

## अथ प्रकीर्णकाः।

रामोऽपि हतमारीचो निवर्त्स्यन् खरनादिनः। क्रोष्टून् समशृणोत् क्रूरान् रसतोऽशुभशंसिनः॥ ५॥

ज०म० अथ प्रकीर्णश्लोकानाह। रामइत्यादि। हतमारीचो रामोऽपि निवर्त्स्यन् प्रत्यागमिष्यन् वृत्तादिलचणइटि प्राप्ते न वृद्भ्यइतीण् निषेधः क्रोष्टून् शृगालान् रसतः शब्दायमानान् अशृणोत् संश्रुतवान् सकर्म्मकत्वात् समोगमीत्यात्मनेपदं न भवति लङि रूपं क्रूरान् भीषणान् यतः खरनादिनः खरवन्नदन्ति कर्त्तरीति णिनिः अशुभशंसिनः अनिष्टसूचनशीलान्॥ ५॥

भ० अथ प्रकीर्णकाः। रामइत्यादि। हतोमारीचो येन सरामोऽपि निवर्त्स्यन् प्रत्यागमिष्यन् रसतः शब्दं कुर्व्वतः क्रोष्टून् शृगालान् समशृणोत् क्रोष्टूनां शब्दं शृणोति सोऽयमर्थः रसतइति तद्विशेषणात् तथाचोक्तं सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे इति यद्यपि शब्दएव श्रूयते नतु शृगालः तथापि शृगालस्यायं शब्दइति ज्ञाने शृगालोऽपि विषयइति तस्यापि ज्ञानकर्म्मत्वमविवादं औपचारिकोऽयं प्रयोगइत्यन्ये अनेकार्थत्वात् शृणोतिरिह दर्शनार्थइति केचित् वृद्भ्योनेमिस्यसनोरिति वृतेरिम्निषेधः पे ततएव पं खरनादिनो गर्हभवत् नदतः ग्रहादित्वात् णिन् कर्त्तर्य्युपमानउपपदे णिनिति परः अतएवाशुभशंसिनः अशुभं शंसितुं सूचयितुं शीलं येषामिति ताच्छील्ये णिनिति परः खमते ग्रहादित्वात् अतएव क्रूरान् भयदान्। अपि सम्भावनाप्रश्नशब्दगर्हासमुच्चये। तथा युक्तपदार्थेषु कामचारक्रियासु चेति विश्वः॥ ५॥

आशङ्कमानोवैदेहीं खादितां निहतां मृतां। सश्र
त्रुघ्नस्य सोदर्य्यं दूरादायान्तमैक्षत॥ ६॥

आशङ्कमानइत्यादि। तथाविधाशुभश्रवणादाशङ्कमानोवि जं०म०
तर्कयन् वैदेहीं किं खादितां निशाचरादिना ततः निहतां त्यक्त
प्राणां अहो स्वयमेवायुःक्षयान्मृतां वा सरामः शत्रुघ्नस्य सोदर्य्यं
भ्रातरं सोदराद्यः आयान्तमागच्छन्तमारादैक्षत दृष्टवान् ईक्षे
र्लुङि॥ ६॥

आशङ्केत्यादि। अमङ्गलश्रवणात् वैदेहीं राक्षसादिभिर्भ भ०
क्षितां शृगालादिभिर्व्वा निहतां स्वयमेवायुःक्षयात् मृतां वा
आशङ्कमानस्तर्कयन् रामः शत्रुघ्नस्य सोदर्य्यं लक्ष्मणं आयान्तं
आराद्दूरादैक्षत ईक्षेर्लुङि समानउदरे स्थितः सोदर्य्यः सर्वैका
दिति यः रूपनामगोत्रेत्यादिना पक्षे समानस्य सः कनिष्ठभ्रातृ
सम्बन्धोक्तत्वेन लक्ष्मणस्यापकर्षः सूचितः स्त्रीवचनेन त्यक्तधैर्य्य
त्वात् आराद्दूरसमीपयोः॥६॥

सीतां सौमित्रिणा त्यक्तां सध्रीचीं रक्षुमेकिकां।
विज्ञायामंस्त काकुत्स्थः क्षये क्षेमं सुदुर्लभं॥ ७॥

एते प्रकीर्णकाः।

सीतामित्यादि। सौमित्रेरेकाकिनोदृष्टत्वात्रियतमनेन जं०म०
त्यक्तेति तां विज्ञाय ज्ञात्वा काकुत्स्थोरामः क्षये गृहे क्षीयतेऽस्मि
न्निति अधिकरणेऽच् क्षेमं कल्याणं सुदुर्लभं सुदुःखेन लभ्यतइति
ईषदित्यादिना खल् अमंस्त ज्ञातवान् कथं क्षये क्षेमं सुदुर्लभं

मिति आह सध्रीचीं सहचारिणीं न कश्चिदेकाकिनीं तिष्ठन्तीं सहाञ्चतीति ऋत्विगादिना क्विन् सहस्य सध्रिरित्यञ्चतौ वप्रत्यये सहस्य सध्रादेशः अञ्चतेश्चोपसंख्यानमिति ङीप् अचइत्यकार लोपः चाविति दीर्घः कुतः चक्षुं चपलशीलां क्रियाशब्दत्वादूङ् न भवति एकिकां लक्षणेन त्यक्तत्वात् एकादाकिनिच्चासहाये इति चकारात्कन् प्रत्ययस्यादितील्वं। एते प्रकीर्णकाः॥ ७॥

भ० सीतामित्यादि। सौमित्रिणा त्यक्तां अतएव एकिकां सीतां विज्ञाय काकुत्स्थः क्षये निवासे क्षेमं कुशलं सुदुर्लभं अमंस्त एकाकिनोलक्ष्मणस्यागमनात् तद्योगक्षानेऽपि कुतः क्षेमं सुदुर्लभमित्याह चक्षुमिति तां कीदृशीं चक्षुं चापशीलां चिपत्रसेति कुः तया च चापा मृतेति सम्भाव्यते अतएव सध्रीचीं सदा सहचरीं न कश्चिदेकाकिनीं तिष्ठन्तीं सहाञ्चतीति क्विपिसहसन्त्रिरःसध्रिसमिति रीति सहस्य सध्रिःअत्राञ्चतेर्गत्यर्थत्वात् नेदिन्पूजार्थास्येरित्यस्य विषयाभावात् हसुङलोपोऽणाविति नकारलोपःङ्क्निन्ञ्चाह इति ईप् अचोऽल्लोपेऽघेयेति अकारलोपे निमित्ताभावात् चल निवृत्तौ इकारस्य दीर्घः एकादाकिन्कावसहाये इति परः स्वम ते विकारयंघेत्यादिना असहाये स्वार्थे वा कः स्त्रियामाप् काप्यनाशीरके इति इत्वं क्षीयतेऽस्मिन्निति अन् क्षिनिवासगत्योः क्षये ऽपचयकाले इत्यर्थोवा। क्षयोरीगान्तरे वेश्मकल्पान्तापचयेष्वपीति विश्वः। एते प्रकीर्णकाः॥ ७॥

अतःपरं दुह्यादिः।

सोऽपृच्छल्लक्ष्मणं सीतां याचमानः शिवं सुरान्।
रामं यथास्थितं सर्व्वं भ्राता ब्रूते स्म विक्लवः॥ ८॥

अतो द्विकर्म्माधिकारः। सोऽपृच्छदित्यादि अकथितं चेत्यत्र दुहियाचीत्यादिश्लोकस्थान् धातून् प्रयुङ्क्ते कविः तत्र रामोऽपृच्छत् सीतामिति प्रधानं कर्म्म लक्ष्मणमित्यकथितं कर्म्म याचमानः प्रार्थयमानः शिवं कल्याणं अर्थात्सीतायाः शिवं प्रधानं कर्म्म सुरान् देवान् इत्यकथितं कर्म्म भ्राता लक्ष्मणः सर्व्वं यथावत् स्थितं ब्रूते स्म उक्तवान् सर्व्वमिति प्रधानं कर्म्म राममित्यकथितं॥ ८॥ ज०म०

अथ द्विकर्म्मकप्रकरणं। सइत्यादि। सरामः सीतां लक्ष्मणं अपृच्छत् दुहादेः कर्म्म हेतुः कर्म्मेति परः स्वमते याञ्चार्थत्यादीनां स्वभावाद्विकर्म्मकत्वमुक्तं कर्म्मद्वयन्तु तात्पर्य्यलभ्यमेव सीतामिति प्रधानं कर्म्म लक्ष्मणस्य हेतुत्वमर्थाल्लभ्यत एव तेनात्र न लक्ष्मणमिति कीदृशो रामः सुरान् शिवं याचमानः दातुं प्रेरयन् अर्थात् सीतायाः शिवमिति प्रधानं कर्म्म भ्राता लक्ष्मणो विक्लवो विह्वलः सन् सर्व्वं यथास्थितं सीताप्रेरणादिकं रामं उक्तवान् वचनेन बोधितवान् राममिति हेतुकर्म्म॥ ८॥ भ०

सन्दृश्य शरणं शून्यं भिक्षमाणो वनं प्रियां। प्राणान् दुहन्निवात्मानं शोकं चित्तमवारुधत्॥ ९॥

अ०म० संदृश्येत्यादि। रामः शरणं गृहं शून्यं संदृश्य दृष्ट्वा शोकं चित्तमवारुधत् चित्तं शोकं प्रावेशयत् कीदृशः प्रियां जानकीं वनं भिक्षमाणः प्राणान् दुहन्निव त्यजन्निव प्राणानिति प्रधानं कर्म्म आत्मानमित्यकथितं आत्मनः प्राणान् त्यजन्निव॥ ९॥

भ० संदृश्येत्यादि। रामः शरणं गृहं शून्यं संदृश्य शोकं चित्तमवारुधत् शोकमन्तः स्थापयित्वा चित्तमपावृणोत् शोकं प्रावेशयदिति वार्थः रुधिरौञ्आवृतौ द्विरित्वात् शासुलिङ्दिति पक्षे ङ: कीदृशः प्रियां सीतां वनं भिक्षमाणः दातुं प्रेरयन् प्रियामिति प्रधानं कर्म्म आत्मानं प्राणान् दुहन्निव मोचयन्निव आत्मानमिति कर्म्म हेतुः॥ ९॥

गता स्यादवचिन्वाना कुसुमान्याश्रमद्रुमान्। आ यत्र तापसान् धर्म्मं सुतीक्ष्णः शास्ति तत्र सा॥ १०॥

इति दुहादिर्द्विकर्म्मकः।

अ०म० गतेत्यादि। यत्र यस्मिंस्तपोवने सुतीक्ष्णोनाम ऋषिः धर्म्मं शास्ति शिक्षयति धर्म्ममिति प्रधानं कर्म्म तापसानित्यकथितं तत्र तपोवने गता स्यात् सम्भावने लिङ् आकारोनिपातः स्मरणे किं कुर्व्वंती कुसुमान्यवचिन्वाना कुसुमानीति प्रधानं कर्म्म आश्रमद्रुमानित्यकथितं अवचिन्वानेति चिनोतेः कर्त्रभिप्राये तङ्। दुहादिद्वकोगतः। ॥ १०॥

भ० गतेत्यादि। वक्ष्येवं विललाप यदिति वक्ष्यमाणश्लोकेनान्वयः यत्र सुतीक्ष्णोमुनिस्तापसान् धर्म्मं शास्ति तत्र सा गता स्यात् सम्भावने स्थी लोपोऽव्ययोरिति आकारलोपः किं कुर्व्वंती

आश्रमद्रुमान् कुसुमानि अवचिन्वाना द्रुमान् विघट्टयन्ती पुष्प्या आददाना आ इत्यव्ययशब्दः स्मरणार्थे प्रयुज्यते यदुक्तं मर्य्यादायामभिविधौ क्रियायोगेषदर्थयोः। यश्चाकारः सङ्कित्प्रोक्तो वाक्यस्मरणयोरङ्किदिति। आमिति क्वचित् पाठः सोऽपि स्मरणार्थएव। इति द्विकर्म्मकाः॥ १०॥

अतः परं प्रकीर्णकाः।

आः कष्टं वत ही चित्रं हूं मातर्दैवतानि धिक्।
हा पितः क्वासि हे सुभ्रु बह्वेवं विललाप सः॥ ११॥

प्रकीर्णकानाह। आः कष्टमित्यादि। शोकेनाक्रान्तमनाविलप ज०म० न्नाह आः पीडायां पितृवियोगपीडितः आः इत्याह अस्मद्वियोगे न पिता प्राणांस्त्यक्तवानित्यभिप्रायःकष्टमित्याह कष्टं कृच्छ्रं भर्तृमरणादस्मद्वियोगाच्च मातुः कावस्थेत्यभिप्रायेणाह वत इति वत शब्दः खेदे सौमित्रिरपि तया सीतया अन्यादृशः सम्भावितइति विस्मितोऽहीत्याह हिशब्दो विस्मये यदि नाम स्त्रिया मूर्खतया तथाभिहितं सौमित्रिणा विदुषा कथं तादृशः शापो दत्तइत्यभिप्रायेणाह चित्रमिति चित्रमाश्चर्य्ये यदेवंविधोऽपि स्खलतीति सर्व्वमेव दुर्जातं कैकेयीप्रभवमिति क्रुध्यन् हूं मातरित्याह हूंशब्दः क्रोधे अथवा सर्व्वमेतत् दैवचेष्टितं न ममानुष्ठितमित्यभिप्रायेणाह धिग्दैवतानीति धिक् कुत्सायां अविज्ञाय चक्षुषा प्राणांस्त्यक्तवन्तं पितरं पुनरहं द्रष्टास्मीत्यभिप्रायेणाह हा पितः अत्र द्रष्ट

व्योऽसीति हा शोके हे सीते क गतासीति भूशब्दादप्राणिजातेरि त्यादिनोङ् उवर्णान्तमाचस्य विधानादऊङीदिः उपसर्जनत्वञ्च पुनः स्त्रियामूङ् अन्तादिवच्चेति पूर्व्वं प्रत्ययवत्त्वात् प्रातिपदि कत्वं अतः सम्बुद्धौ ह्रस्वत्वं विलल।प सएवं कृत्वा बहुनेकप्रकारं विलापं कृतवान्॥ ११॥

भ० अथ प्रकीर्णकाः। आइत्यादि। सीतावियोगेन पूर्व्वदुःखस्मर णात् पितृवियोगपीडितः प्राह आइति आस्तु स्यात् कोपपीडयोः मद्वियोगेन पिता प्राणान् जहावित्यभिप्रायेणाह कष्टमिति कष्टं कृच्छ्रं पतिमरणान्मद्वियोगाच्च मातुः कावस्था इत्यत आह बतति खेदद्योतकोऽयं बतशब्दः लक्ष्मणोऽपि सीतया अन्यथा सम्भावि तइति विस्मितः प्राह हीति ही विस्मयविषादयोः यद्यपि स्त्रीला न्माौर्ख्येण तया तथाभिहितं तथापि लक्ष्मणेन तादृशः शापोदा तुमनुचितइत्यभिप्रायेणाह चित्रमिति चित्रमाश्चर्य्यं सर्व्वमिदं कैकयीप्रभवमिति रोषादाह हूं मातरिति हूंशब्दः क्रोधे भर्त्सने वा तथाविधायामातुरपीदृशोऽकस्मात् मतिविपर्य्ययोदैवकृतए वेत्यत आह देवतानि धिगिति धिक्शब्दोनिन्दाभर्त्सनयोः अविशे षज्ञत्वादिति भावः पितुर्व्वाक्यादीदृशं दुःखमनुभवन्नहं पित्रा न त्रायते नवा पितृदर्शनेन विना ममैतद्दुःखं व्यपगमिष्यतीत्याह हा पितरिति हा विषादशुगर्त्तिषु धिक्समयेत्यादिसूत्रस्य षष्ठ्य पवादत्वाच्च तद्विषयः सामान्येन हाशब्दं प्रयुज्य पश्चात् पितृ सम्बोधनमतोन द्वितीयेति दुर्गः वस्तुतस्तु हाशब्दवाच्यं दुःखं स्वविषयमेव पितृशब्देन तस्य सम्बन्धाभावः कथं द्वितीयया भवि तव्यं एतत् सकलदुःखं यत्सङ्कृत्या विस्मर्त्तव्यं सापि नास्तीत्याश

येनाह हे सुभ्रु क्वासीति कोपेऽपि भ्रूपारुष्यं नास्तीति सुभ्रुपदस्या
भिप्रायः एवं स्मृत्वा सरामोवक्ष्यमाणप्रकारं विलापं कृतवान् शोभने
भ्रुवौ यस्याः तस्याः सम्बोधनं सुभ्रूदीति ह्रस्वः॥ ११॥

इहासिष्टाशयिष्टेह सा सखेलमितोऽगमत्। अग्ला
सीत् संस्मरन्नित्थं मैथिल्याभरताग्रजः॥ १२॥

इहेत्यादि। इह प्रदेशे आसिष्ट उपविष्टा इदमोहः इदम जं०भ०
इश् इह अशयिष्ट शयितवती आसेः शीङश्च लुङ् सखेलं सलीलं
इतः प्रदेशादगमत् गतवती इत्थमेवंप्रकारं मैथिल्याः स्मरन्
अधीगर्थेति कर्म्मणि षष्ठी भरताग्रजोरामोऽग्लासीत् ग्लानिङ्गतः
ग्लायतेर्लुङ् यमरमेति सगिटौ॥ १२॥

इहेत्यादि। अत्र प्रदेशे सा सीता आसिष्ट शिलासङ्उप भ०
वेशे अत्राशयिष्ट उभयत्र टीमं इतः सकाशात् सखेलं सलीलं
अगमत् खदित्वात् ङः इत्थमेवंप्रकारेण मैथिल्याः संस्मरन्
भरताग्रजोरामोऽग्लासीत् यमरमेति इमसनौ मैथिल्यादिति
ढेषपीति कर्म्मणि षष्ठी ढघेत्तीत्यादिना शतुर्योगे षष्ठ्याः प्रति
षेधेऽपि नञानिर्द्दिष्टस्यानित्यत्वाद्वा कर्म्मणि षष्ठी सम्बन्धविवक्षया
स्मृत्यर्थयोगे कर्म्मणि वा षष्ठीति परः इह इत्यत्र कुतः क्वकुहे
त्यादिना निपातितं॥ १२॥

इदं नक्तान्तनं दाम पौष्पमेतद्दिवातनं। शुचेवोद्द
ध्य शाखायां प्रग्लायति तया विना॥ १३॥

ज०म० इदमित्यादि। नक्तंतनं निशाभवं इदं दाम पुष्पमाला पुनर्हि ह्यातनं दिवसभवं सायमित्यादिना ट्युट्युलौ तुट् च पौष्यं पुष्याणामिति तस्येदमित्यण् शुचेव शोकेनेव सम्पदादिः शाखायामुद्बध्य आत्मानमित्यर्थात् प्रम्लायति म्लानिं गच्छति म्लायतेः शित्यायादेशः शाखायां प्रलम्बमानं म्लानिं गच्छन्त वोच्छ्रेदमुत्प्रेक्षितं कुतः शोकात्तया विना सीताविच्छेदेन ॥ १३ ॥

भ० इदमित्यादि। इदं नक्तन्तनं रात्रिभवं पौष्यं पुष्पसम्बन्धि दाम माला इदञ्च दिवाभवं दाम तया विना शुचा शोकेन शाखायां उद्बध्य अर्थादात्मानं प्रम्लायति म्लानिं प्रयाति शाखास्थितां म्लानमालां वीक्ष्येदमुत्प्रेक्षितं इत्येवं विललापेति व्यवहितश्लोकेनान्वयः स्मरन्नेवं मुमोह वदति वक्ष्यमाणनवमश्लोकेन वा एवमुत्तरेष्वपि बोध्यं त्वच्चायचिरेत्यादिना नक्तंदिवाशब्दाभ्यां अव्ययाभ्यां तनट् ॥ १३ ॥

ऐक्षिष्महि मुहुः सुप्तां यां मृताशङ्कया वयं। अकाले दुर्म्मरमहो यज्जीवामस्तया विना ॥ १४ ॥

ज०म० ऐक्षिष्महीत्यादि। यां वयमैक्षिष्महि ईक्षितवन्तः ईक्षेः सेटो लुङ् मुहुः सुप्तां अविच्छिन्ननिद्रत्वात् मृताशङ्कयेति अनिष्टशंकित्वात् प्रियजनहृदयस्य इदानीं तया विना अहो वयं यज्जीवाम तदकाले दुर्म्मरमिति विललाप जीवितस्यापूर्णकाले दुःखेन मरणमिति खलु ॥ १४ ॥

ऐचीत्यादि। वयं सुभ्रां यां प्रियां हृता नवेत्याशङ्कया मुहु- भ॰
र्म्मुहुर्वारंवारं ऐचिष्महि ईचेष्यामहि अनिष्टप्रेक्षीणि बन्धुहृदया
नीति सृतामस्मिन् एतेनानुरागातिशयः सूचितः अहो आश्चर्य्यं
यत्तया विनापि वयं जीवामस्तद्भ्रष्टकाले जीवनस्यापूर्वकाले
दुःखेन म्रियते ईषद्दुःखेरिति भावे खल्॥ १४॥

अचेमः परिहासोऽयं परीचां मा कृथाममा। मत्तो
मान्तर्द्धिथाः सीते मा रंस्थाजीवितेन नः॥ १५॥

एते प्रकीर्णकाः।

अचेमइत्यादि। परिहसनं परिहासः क्रीडा अयमचेमो न भ॰म॰
कल्याणकरः मम परीचां किं मामपश्यन् दुःखमस्ति नवेति मा
कृथाः उश्चेति कित्त्वाद्गुणाभावः ह्रस्वादिति सिचोलोपः तस्मात्त्वं
सीते मान्तर्द्धिथाः अन्तर्हिता मा भूः अन्तर्द्धावित्यपादानसंज्ञायां
पञ्चम्यास्तसिः अत्ययोत्तरपदयोश्चेति मदादेशः लुङि स्थाघ्वो
रिच्चेति सिचः कित्त्वमित्वञ्च ह्रस्वादिति सिचोलोपः नोऽस्माकं
जीवितेन मा रंस्थाः क्रीडां मा कार्षीः रमेरात्मनेपदित्वात्तङ्।
एते प्रकीर्णकाः॥ १५॥

अचइत्यादि। कदाचित् परिहासेनान्तर्हिता सा भवेदि भ॰
त्याशङ्क्योक्तमिदं अयमन्तर्द्धानरूपः परिहासोऽचेमः अशुभः
तवादर्शनेन मम दुःखमस्ति नवेत्येवं मत्परीचां त्वं मा कृथाः
कृञस्सिचि इगुकुर्मठीत्यनिमिति से: कित्त्वान्न गुणः ह्रस्वादिति
सिलोपः मत्तः सकाशात् मा अन्तर्द्धिथाः मत्कर्तृकदर्शनाभावे

च्छया व्यवहिता मा भूः धात्वस्यामि स्यादेर्ङिरिति ङिरगुणत्वञ्च पूर्व्ववत्मिलोपः यतोऽत्रायेति यतोऽन्तर्द्धौ त्वदपादानं सर्व्वत्र हेतु माह हे सीते नोऽस्माकं जीवितेन मा रंस्थाः क्रीडां न कुरु तवाद दर्शनेन प्राणायास्यन्तीति भावः। इति प्रकीर्णकाः॥१५॥

## अतः परं सिजधिकारः।

अहं न्यवधिषं भीमं राक्षसं क्रूरविक्रमं। मा घुक्षः पत्युरात्मानं मा न श्लिक्षः प्रियं प्रिये॥१६॥

ज॰म॰ सिचं सापवादमधिकृत्याह। अहमित्यादि। यतोऽहं राक्षसं मारीचं क्रूरविक्रमं भीमं भयानकं न्यवधिषं निहतवानस्मि हन्ते र्लुङि चेति वधादेशः अदन्तत्वादृद्ध्यभावः तस्मात्मा घुक्षः न गोप य पत्युरात्मानं अन्तर्द्धावित्यपादानत्वं ख्यत्यात्यरस्येत्युत्वं गुहेः सत्वद्गुपधादनिटः क्सः होढः भभावकत्वषत्वानि सिपश्च विसर्ज नीयः मा न श्लिक्षः मा नपरिरब्धाः अपितु श्लिष्य मां हे प्रिये श्लिष आलिङ्गने क्सः॥१६॥

भ॰ अथ सापवादसिजधिकारः। त्वमते त्वधिकारः। अहमि त्यादि। भीमं भीषणमूर्त्तिं क्रूरविक्रममसह्यपराक्रमं राक्षसं मारीचं अहं न्यवधिषं हतवान् हनलौगतौवधे अमि व्यासिः ह नवधष्टीति वधादेशः हमादेःसेम्रित्यादौ वधवर्ज्जनात् सेमत्व सूचनात् प्रकृत्यन्तरत्वाद्वा इम् पत्युर्मत्तः सकाशात् आत्मानं त्वं मा घुक्षः न गोपय गुहञ्सम्वृतौ ऊदित्वादेमूदिति इमोऽभा वपक्षे हसषोऽनिमिजूङ्इति सक् होढः झभान्तस्येति घः षढोः कः

क्लिलादिति षः हे प्रिये प्रियं मां मा न श्लिक्षः अपितु अवश्यमेव प्रियमालिङ्गय द्वौ निषेधौ सातिशयं प्रकृत्यर्थं गमयतइति न्यायात् श्लिषीऽस्रेषे आलिङ्गनेऽर्थे पूर्व्वण सक्॥ १६॥

मांस्म द्राचीर्मृषा दोषं भक्तां मां मातिचिक्लिशः। शैलं न्वशिश्रियद्दा मा नदीं नु प्रत्यदुद्रुवत्॥ १७॥

मास्मेत्यादि। मृषा दोषं व्यलीकं दोषं मा द्राचीः मयीत्यर्थात् स्मोत्तरे लङ्चेति चकाराल्लुङ् सलइगुपधेति क्सस्य न दृश इति निषेधः इरितोवेत्यङ्भावे सिच् मृजिदृशोरित्यम् हलन्तलक्षणा वृद्धिः अश्चेत्यादिना षत्वं यतोऽहं भक्तस्ततोमां भक्तं मातिचिक्लिशः नातिक्लेशय क्लिशेर्ण्यन्तात् खिपि णिश्रीत्यादिना चङ् वा णिलोपः द्विर्व्वचनादिः पुनर्व्विकल्पयन्नाह मयि दोषदर्शनात् मत्प्रतिकूलवर्त्तिनी सती शैलं नु पर्व्वतं किमप्यशिश्रियद्दाश्रिता ततोनदीं प्रत्यदुद्रुवत् प्रतिगतेत्यर्थः नुशब्दोवितर्के चङ्॥ १७॥ ज॰म॰

मास्मइत्यादि। मृषा दोषं मास्म द्राचीः अर्थान्मयि दोषदर्शनाद्दा अन्तर्हितेत्याशङ्क्य इदमुक्तं इदृंशीप्रेचे मास्मेन योग्याविति टौ सन्निधौ दृशेर्व्वर्ज्जनात् इरित्वात् ङः विकल्पपचे च्लेःसिः वद्धोऽकिदिति रत्वं अनिमत्वाद्जवदेति शिः शक्राजेति षङ् भक्तं अनुरक्तं मां त्वं मातिचिक्लिशः नातिपीडय क्लिशेर्ञिः प्रेरणे ञिश्रीत्यङ् द्वित्वं गुणः न्यङ्कुङःस्वः ञेर्लोपः निकटे यदि तिष्ठेत्तदा मद्वचनादागच्छेदित्यतोऽन्यद्विकल्पयन्नाह वामेति मय्यपि दोषदर्शनात् प्रतिकूला सती शैलं किं अशिश्रियत् आश्रिता भ॰

उत नदीं प्रत्यद्रुवत् प्रतिगता अभिसेवने द्रुगतौ अनयोरचि श्रुध्वोरिति इयुवौ गुणश्चोवितर्के ॥ १७ ॥

ऐ वाचं देहि धैर्य्यं नस्तव हेतोरसुस्रुवत्। त्वं नो मतिमिवाधासीर्नष्टा प्राणानिवादधः ॥ १८ ॥

ज०म० ऐवाचमित्यादि। ऐ शब्दो निपातोऽभिमुखीकरणे वर्त्तते वाचं देहि प्रार्थनायां लोट् घ्वसोरेद्धावित्येत्वं किमितिचेदाह धैर्य्यं नोऽस्माकं धीरता तव हेतोरसुस्रुवत् गलितं नष्टा अदर्शनं गता सती त्वन्नोऽस्माकं मतिं बुद्धिमधासीरिव बुद्धेरपाटवात् विभाषा धेट्श्व्योरिति यदा न चङ् तदा यमरमेति सगिटौ प्राणानद् धः पीतवती कायस्याचेष्टत्वात् शक्ति रूपमालोपः ॥ १८ ॥

भ० ऐवाचमित्यादि। ऐ सीते वाचं देहि प्रार्थनायां मी देशादोधो देर्धेहौ तव हेतोः नोऽस्माकं धैर्य्यं असुस्रुवत् स्रुतं पूर्ववत् चङ् त्वं नोऽस्माकं मतिं बुद्धिं अधासीरिव पीतवतीव बुद्धेरपाटवात् कार्य्यान्तरासंक्रमाचोत्प्रेक्षेयं नष्टा अदर्शनं गता सती प्राणानपि त्वं अदधइव पीतवतीव देहस्य निश्चेष्टत्वात् धेट्पाने पूर्वेण विभाषितोऽङ् एचोऽमित्या डश्चेपीत्यालोपः अङोऽभावपक्षे च्लेः सिः यमरमेति इमवन्तो यगस्ताऽऽध्णसीमदति सेर्लोपः भूम्ना पिबदेनरति सेर्लुकि प्राप्ते धेश्राच्छासाभ्यदति पक्षे तदभावः नश अदर्शने क्तः मुपरधोमुचांगमश इति क्वतस्य नस्य षष्टुत्व लोपोऽणावित्यनेन लोपः अक्षरादेति चङ् ऐ शब्दोऽयमव्ययो

ऽभिमुखीकरणे आह्वाने वा। एऐशब्दौ तु हेहैवत् स्मृत्यामन्त्रण इतिच्छिति विश्वः॥१८॥

रुदतोऽशिश्वियच्चक्षुरास्यं चेतोस्तवाश्वयीत्। म्रिये ऽहं मां निरास्थश्चेन्मा न वोचश्चिकीर्षितं॥१९॥

रुदतइत्यादि। तवार्थे त्वां पश्यामीति रुदतोमम चक्षुरशिश्वि यत् उच्छूनं आस्यं मुखं चाश्वयीत् विभाषाधेट्श्व्योरिति चङ् सिचौ चङीयङ् ह्यन्तेति न वृद्धिः इट् इटईटीति सिचोलोपः गुणायादेशौ मां निरास्थश्चेद्यदि मम दर्शनं निरस्तवती त्वं तदा म्रियेऽहं म्रियतेर्लुङ्लिङोश्चेति चकाराच्छित्यात्मनेपदं रिङ्शय गिति रिङ् अतोयत्त्वया चिकीर्षितं कर्त्तुमिष्टं तन्मा न वोचः मा मा भाषिष्ठाः अपितु ब्रूहि अस्यतिवक्तीत्यङ् वचउम्॥१९॥ जं॰म॰

रुदेत्यादि। तवादर्शनाद्रुदतो मम चक्षुरशिश्वियत् उच्छून मतिरोदनात् आस्यमपि अश्वयीत् जिश्रीत्यादिना श्वेर्विभाषि तोऽङ् अङोऽभावपक्षे च्लेःसिः नेमेकाजादित्यादौ अश्विजागुरि त्युक्तेर्गुणः त्वं चेत् यदि मां निरास्थः अदर्शनेन निरस्तवती तदा अहं म्रिये भविष्यत्सामीप्ये वर्त्तमानत्वविवक्षा मृङ्प्राणत्यागे तु दादित्वात् शः मृङ्ष्टीकोमं चवृद्धिःशयगृढीपे श्रुध्योरितीयः अस्तु क्षेपणे वक्तव्येति ङः वच्यस्थिपतामिति अस्थः चिकीर्षितं कर्त्तु मिष्टं त्वं मा न वोचः अवश्यं ब्रूहि वचेर्भुञ्जोवा वचोऽरेदति वचादेशः पूर्ववत् ङः वोचादेशश्च॥१९॥ भ॰

लक्ष्मणाचक्ष्व यद्याख्यत्सा किञ्चित्कोपकारणं।
दोषे प्रतिसमाधानमज्ञाते क्रियतां कथं॥ २०॥

ज०म० लक्ष्मणेत्यादि। हे लक्ष्मण यदि सा किञ्चित्कोपकारणमाख्य दुक्तवती इदन्तेनाप्रियमाचरितं पूर्व्ववदङ् तदाचक्ष्व कथय अज्ञाते दोषे प्रतिसमाधानं कथं क्रियतां नैवेति भावकर्म्मणि लोट् रिङित्यादिना रिङ्॥ २०॥

भ० लक्ष्मेत्यादि। हे लक्ष्मण यदि सा सीता किञ्चित्कोपकारणं आख्यत् कथितवती तदा त्वं आचक्ष्व कथय चचिङः प्रार्थनायां गीस्व अदादित्वात शपोलुक् स्कादेःसोलोपइति ककारलोपः षढोःकःसे क्लिलादिति षः ख्याप्रकथने चचिङः ख्याञ् त्रा वत्तय स्येति ङः उस्येचीत्यालोपः अज्ञाते दोषे प्रतिसमाधानं तदपमार्ज्जनार्थं कर्म्म कथं मया क्रियतां कर्त्तव्यं रतनोर्यगिणाविति यकि कृते घोंऽज्यरइति सामान्यविधिं वाधित्वा च्छ्रिःशयग्ढी पइति विशेषविधिः रित्वेऽपि पूर्व्ववाधितत्वात् विकृतत्वाद्वा न तेन दीर्घः किम्वा यङ्ग्यक्येचर्द्दीरित्यत्र दीर्घकरणेन च्छ्रिःशयग्ढी पइत्यनेन कृतरेर्दीर्घोनस्यादिति ज्ञापितं यङ्ग्यक्ये घोंऽज्य रइत्यनेन चो अखावीर्घावित्यनेन चेष्टसिद्धेः॥ २०॥

इह सा व्यलिपङ्गन्धैः स्नान्तीहाभ्यषिचज्जलैः। इहा हं द्रष्टुमाक्रं तां स्मरन्नेवं मुमोह सः॥ २१॥

इहेत्यादि। इह प्रदेशे सा सीता गन्धैर्व्यलिपत्समालिप्तवती मामात्मानञ्चेत्यर्थात् इह स्नान्ती क्रीडापूर्व्वकमभ्यषिञ्चत् हस्तयन्त्रमुक्तसलिलेन मामभिमुखं सिक्तवतीत्यर्थः फलं इह द्रष्टुं तामाक्रं आह्वतवान् लिपिसिचिह्वश्चेति क्षेरङ् एवं स्मरन् मुमोह मोहं गतवान्॥ २१॥ ज॰म॰

इहेत्यादि। इह स्थाने सा सीता गन्धैर्व्यलिपत् मामात्मानञ्चेत्यर्थात् गन्धयन्तीति गन्धाश्चन्दनादयः ञिलिपोपलेपे इह स्नान्ती सती सा जलैः क्रीडापूर्व्वकं अभ्यषिचत् अर्थान्मां षिचप्रौञ्चरणे गीकःस्तुस्तुभेत्यादिना अमव्यवधानेऽपि षत्वं इह द्रष्टुं तामहं आक्रं आह्वतवान् क्रञ्जैस्पर्द्धे सर्व्वत्र वक्ष्यत्यादिना ङः सरामएवं स्मरन् मुमोह मोहं गतः स्नान्तीति आदीपोरिति विभाषितनुण्॥ २१॥ भ॰

**तस्यालिपत शोकाग्निः स्वान्तं काष्ठमिव ज्वलन्।**
**अलिप्तेवानिलः शीतोवने तं न त्वजिह्लदत्॥ २२॥**

तस्येत्यादि। तस्य रामस्य स्वान्तं मनः क्षुब्धस्वान्तेत्यादिना निपातितं शोकाग्निः शोकोऽग्निरिव अलिपत दीपितवान् परस्मैपदेषु लिपीत्यादिना नित्ये प्राप्ते आत्मनेपदेष्वन्यतरस्यामिति विकल्पेनाङ् स्वरितञितइति क्रियाफलविवक्षायामात्मनेपदं काष्ठमिव स्वान्तं ज्वलन् अतिवर्त्तमानः अनिलोवायुः शीतोऽपि सन् वने तं राममलिप्तेव दीपितवानिव अङ्भावपक्षे झलोझली ज॰म॰

ति षिचोलोपः नतु नैवाजिह्लदत् ह्लादितवान् शोकाग्नेर्वर्द्धुनलात्
ह्लदेर्णमाख्यिश्रीति चङ्॥ २२॥

तस्येत्यादि। शोकएवाग्निर्ज्वलन् वर्द्धमानः तस्य रामस्य
स्वान्तं मनः काष्ठमिवचिन्तया नीरसत्वात् अलिपत ददाह यद्यपि
लेपश्चन्दनादिनोपदेहस्तथाप्यग्निना लेपोदाहएव पर्य्यवस्यति
धातूनामनेकार्थत्वाद्वा शीतोऽपि अनिलः वने तं रामं अलिप्तिव
स्पृष्टवानिव माद्येन सम्यगस्पर्शनात् किम्वा वह्निना अलिप्त ददा
ह अतएव न अजिह्लदत् नानन्दयत् शोकाग्नेर्वर्द्धमानत्वात् वक्ष्य
स्येत्यादिना आत्मनेपदे लिपादेर्ङोविभाषितः पचे चांसिः झम
स्यादिति सिलोपः ह्लादीङ्मोदने ण्यन्तुङः स्वः स्वेः सन्वत्॥२२॥

स्नानभ्यषिचताम्भोऽसौ रुदन् दयितया विना।
तथाभ्यषिक्त वारीणि पितृभ्यः शोकमूर्च्छितः॥ २३॥

ज॰म॰ स्नानित्यादि। असौ रामोदयितया विना शोकमूर्च्छितः शोकेन
मोहं नीतः स्नातुमारब्धः मूर्च्छेर्तुमस्यन्तस्य रूपं स्नाशाचे शद्द
प्रत्ययः रुदन्नम्भः सलिलं अभ्यषिचत चिप्तवान् शिरस्यञ्जलिना
अथ स्नातः पितृभ्योवारीणि अभ्यषिक्त दत्तवान् सिचेः पूर्व्ववद्वि
भाषाऽङ् सिचिरिचोत्सर्गे वर्त्तते ततस्तार्थान्तरस्थितिलाज्ञलस्य
कर्म्मत्वं॥ २३॥

भ॰ स्नानेत्यादि। दयितया विना शोकेन मूर्च्छितोऽपि असौ रामो
रुदन् स्नान् स्नानं कुर्व्वन् अम्भोऽभ्यषिचत मन्त्रैः संस्कृतवान् स्वशि
रसि अञ्जलिना चिप्तवानित्यर्थोवा तथा स्नातः पितृभ्योवारीणि

अभ्यषिक्त दत्तवान् पित्रर्थं चिप्तवान् वा धातूनामनेकार्थत्वात् षिचेः संस्कारचेपदानवाचकत्वं तेन जलस्य कर्म्मत्वं अभ्युक्षणे कारणत्वं यथा जलेन सिञ्चतीति पूर्व्ववत् ङः गीकदति षत्वं मूर्च्छासंमोहे उच्छ्रये ज्यन्तात् क्तः केवलात्तु क्तक्तवत्वोरादितश्चेति इम् न स्यात् मूर्च्छा जाताऽस्येति इताऽस्यजातदति इतोवा॥२३॥

तथार्त्तोऽपि क्रियां धर्म्म्यां सकालेनामुचत् क्वचित्।
महतां हि क्रिया नित्या छिद्रे नैवावसीदति॥२४॥

तथेत्यादि। सरामस्तेन प्रकारेणार्त्तोऽपि क्वचिदपि धर्म्म्यां क्रियां काले नामुचत् न त्यक्तवान् अस्मादेव यतोमहतां सत्यपि छिद्रे व्यसने नित्या क्रिया नावसीदति आङ्पूर्व्वादर्त्तेऋणोतेर्वा निष्ठायां ऋतिधातौ वृद्धिः मुचेः ऌदनुबन्धत्वादङ् लुङः अपृरिङि यङौ॥२४॥ 

तथेत्यादि। तथा तेन प्रकारेण आर्त्तोऽपि व्याकुलोऽपि सरामः क्वचिदपि काले धर्म्म्यां धर्म्मादनपेतां क्रियां नामुचत् न त्यक्तवान् मुचॢपञौमोचे ऌदित्वात् ङः आङ्पूर्व्वादर्त्तेः क्तः गेर्धारनेधिणदति ञिः हि यस्मात् महतां छिद्रे व्यसने सत्यपि नित्या क्रिया नैवावसीदति नापगच्छति क्रियेति कुःअस्येति अः स्त्रीलस्य चद्रिःअुध्वोरितीयः यदकरणे प्रत्यवायः सा नित्या॥२४॥ 

आक्रास्त समुद्रः क्रूरान् मुद्गराक्षत राक्षसान्।
एत सीताद्रुहः संख्ये प्रत्यर्थयत राघवं॥२५॥

ज०म० आक्रास्तेत्यादि। पुनः पुनरभिभवितुं क्रूरानाक्रास्त आक्रान्तवान् तथा राक्षसानाक्रत पूर्व्ववत् विकल्पः स्पर्द्धायामाङ इत्यात्मनेपदं कथमाक्रतवानित्याह हे सीताद्रुहः सीताहिंसकाः क्रूरा राक्षसावा एत आगच्छत आङ्पूर्व्वादिणोलोट् संख्ये संग्रामे राघवं प्रत्यर्थयत प्रत्यर्थिनं कुरुत प्रत्यर्थिन्शब्दात्तत्करोतीत्यर्थे णिच् तदंताल्लोटः परस्मैपदं अर्थयाञ्चोयामित्यस्य तु स्वार्थिकण्यन्तस्य सर्व्वदात्मनेपदित्वात् प्रत्यर्थयध्वमिति वा स्यात् ॥ २५ ॥

भ० आक्रेत्यादि। सरामोमुहुर्व्वारंवारं क्रूरान् आक्रास्त अर्थात् युद्धाय राक्षसानपि आक्रत स्पर्द्धायामाङ् इति सं पूर्व्ववत् कसी कथमाक्रत इत्याह हे सीताद्रुहः सीताहिंसकाः यूयं एत आगच्छत आङ्पूर्व्वादिणोगी संख्ये युद्धे राघवं प्रत्यर्थयत प्रत्यर्थिनं कुरुत प्रत्यर्थिशब्दात् तेःकृत्याख्यानेञिरिति कृतौ ञिः ञीमंस्येति ञित्ते टेर्लोपः अर्थकङ् याचनइत्यस्य वा रूपं कचिदात्मनेपदिनोऽपि परस्मैपदितेति न्यायात् केचित्तु चुर्य्याञिर्व्वेति ञेरभावपक्षे ञित्वाभ्मं ञौतूभयपदमेवेत्याहुः ॥ २५ ॥

खपोषमपुषद्युष्मान् या पक्षिमृगशावकाः। अद्युतच्चेन्दुना सार्द्धं तां प्रब्रूत गता यतः ॥ २६ ॥

ज०म० खपोषमित्यादि। हे मृगपक्षिणां शावकाः पोताः या सीता युष्मान् खपोषमपुषत् पुष्टवती स्वेपुषइति णमुल् यथाविध्यनु

प्रयोगः तां प्रब्रूत कथयत यतोयत्र आद्यादित्वात्तसिः गता सत्यु द्युतत् द्योततेस्म सार्द्धमिन्दुना चन्द्रमसा तुल्यत्वात्॥ २६॥

स्वपोषेत्यादि॥ एवंप्रकारेण मृगादीनप्याक्रान्तेति सम्बन्धः हे पक्षिणां मृगाणाञ्च शावकाः शिशवो या सीता युष्मान् स्वपोषं अपुषत् स्वेन आत्मना धनेन वा पुष्टवती अभिधानात् स्वपूर्व्वात् पुषेर्णम् तदनुप्रयोगश्च या इन्दुना सार्द्धं अद्युतत् तस्याद्योतनेन इन्दोः स्वभावेन गुणीभूतत्वात् ततोऽप्युत्कर्षः सूच्यते सार्द्धंशब्देन समानत्वं वा लक्ष्यते उभयत्र शासुलिद्युत्पुषादेरिति ङः पे ङ विधानादेव द्युतेः पं उक्तञ्च अतएव पं तां प्रब्रूत वदत त्वत्स्नि यास्त्वय्येव कथनं किमर्थं इत्याशङ्कायामाह गतेति यस्मादृ ता अन्यत्र मां त्यक्त्वेत्यर्थात् केचित्तु यतोयत्र गता तं देशञ्च ब्रूते त्यध्याहरन्ति केचित्तु या यतोयत्नात् अपुषत् इन्दुना सार्द्धं साम्यं गता या अद्युतच्च यतोऽयत्ने इत्यस्य क्विपीत्याहुः केचित्तु हे पक्षिमृगशावकाः गतायतः सन्तः तां प्रब्रूत गतं गमनं भावे क्तः न यतन्ते इति अयतः कर्त्तरि क्विप् गताय अयतोऽयत्न वन्तः स्थिराः सन्तइत्यर्थइत्याहुः गताय नास्ति यत् यत्नो येषां तादृशाः सन्तइत्यन्ये॥ २६॥

गिरिमन्वैद्धपद्भ्रामोत्तिष्ठुर्ज्जनकसम्भवां। तस्मिन्ना योधनं वृत्तं लक्ष्मणायाशिषन्मृत्हत्॥ २७॥

गिरिमित्यादि। गिरिं लक्षीकृत्य गतः स्वदित्वादङ् किमर्थं

लुब्धुमिच्छुः सनिमीमेत्यादिना इस् अत्र लोप इत्यभ्यासलोपः खरि चेति चर्त्वं जनकसम्भवां सम्भवत्यस्मादिति सम्भवः ऋदोरप् जनकः सम्भवोयस्यास्तां सीतां अस्मिन् गिरौ आयोधनं युद्धं महदतिशयत्वात् वृत्तं लक्ष्मणायाशिषत्कथितवान् क्रियायोगे चतुर्थी सर्त्तीत्यादिनाऽङ् शासइदङ्हलोरितीत्वं शासिवसीति षत्वं कथमकथयदित्याह ॥ २७ ॥

भ॰ गिरोत्यादि। जनकसम्भवां सीतांलब्धुमिच्छ रामोगिरिमनुल चोक्तत्य अशिषत् लृदयौगतो लृदित्वात् ङः लभेः सनिमिभीमा देत्यादिना अकारस्य इस् खिलोपश्च स्यादेः सोल्लोपश्च शपृच्छ्वमे रिति पः सम्भवत्यस्मात् सम्भवः जनकः सम्भवो यस्याः जनका त्सम्भवनं यस्या इति वा तस्मिन् गिरौ वृत्तं महदायोधनं युद्धं लक्ष्मणायाशिषत् उक्तवान् तादर्थ्ये चतुर्थी यदभिप्रेत्य धात्वर्थ स्तत्र चतुर्थीति परः शासुअनुशिष्टौ शासुलिदुदिति ङः शासु ङिद्धुरङेइति इत्वं क्विलादिति षत्वं॥ २७ ॥

सीतां जिघांसू सौमित्रे राक्षसावारतां ध्रुवं। इदं शोणितमभ्यग्रं संप्रहारेऽच्युतत्तयोः॥ २८ ॥

ज॰म॰ सीतामित्यादि। इत्येवं लक्ष्मणायाशिषदिति श्लोकचतुष्टयं यावत् सम्बध्यते हे सौमित्रे सीतां हन्तुमिच्छन्तौ राक्षसावारतामा गताविति, ध्रुवं निश्चितं उत्प्रेक्षायामित्यन्ये आङ्पूर्व्वादर्तेरादा दिकादेवाङ् पुषादिसूत्रे शास्तिसाहचर्य्येण तस्यैव ग्रहणात् अट शोङीति गुणः आङ्विनाप्यडागमे कृते रूपमिदं हन्तेः सनि

अञ्झनगमांसनीति दीर्घः अभ्यासाच्चेति घत्वं कुतोजातमि त्याह इदमभ्यग्रं शोणितं तयोः संप्रहारे युद्धे अच्युतत् गलितं च्युतिरचरणे अकर्म्मकोऽत्र इरनुबन्धत्वादिरितोवेत्यङ् सीतां भक्षयितुं तयोरेव विवादोवृत्तइति भावः॥ २८॥

सीतामित्यादि। इत्येवं लक्ष्मणायाभिषदिति श्लोकचतुष्ट भ॰ येषु सम्बध्यते हे सौमित्रे ध्रुवं निश्चिते उत्प्रेक्षे वा सीतां हन्तुमिच्छू राक्षसावारतां आङ्पूर्व्वात् ऋलिगत्यांइत्यस्मात् ऋप्रापणेचे त्यस्माद्वा वक्त्यस्येत्यादिना पक्षे ङः ऋदृशोर्ङिगुण इति गुणः आङा विनापि रूपमेतत् हन्तेः सनिर्घोऽञ्झनिङ्गमामिति दीर्घः खेर्घोघः कुतोजातमित्याह तयोरेव संप्रहारे युद्धे इदं अभ्यग्रं अभिनवं शोणितं अच्युतत् गलितं च्युतिर्च्चरणेऽकर्म्मकः इरित्वात् शास्ति द्युदित्यादिना पक्षे ङः सीतामत्तुं तयोरेव विरोधोजातइति भावः॥ २८॥

इदं कवचमच्योतीत् साश्वोऽयं चर्णितोरथः। एह्य मुं गिरिमन्वेष्टुमवगाहावहे द्रुतं॥ २९॥

इदमित्यादि। इदं कवचमच्योतीत् भ्रष्टं अङभावे सिजेव भ ज॰म॰ वति अयं रथः साश्वश्चर्णितश्चास्ते यतश्चैवं तस्मादेहि आगच्छ द्रुतं किं पश्चादिलम्बसे अमुं गिरिमवगाहावहे विलोडयावः किमर्थं अन्वेष्टुं सीतामित्यर्थात् एतत्सर्व्वं पर्व्वतसमीपे कथ्यते॥ २९॥

इदमित्यादि॥ कवचमिदं अच्योतीत् भ्रष्टं इरित्वात् ङाभाव भ॰ पक्षे च्यांसिः अश्वेन सह चूर्णितोऽयं रथश्चास्ते यतएवं तस्मात्

द्रुतं शीघ्रं एहि आगच्छ आङ्पूर्व्वस्येणोरूपं अन्वेष्टुमथात् सीतां अमुं गिरिं आवां अवगाहावहे सर्व्वतः पर्य्यटावः॥ २९॥

मन्युर्म्मन्ये ममास्तम्भीद्विषादोऽलभदुद्यतिं। अजारीदिव च प्रज्ञा बलं शोकात्तथाजरत्॥ ३०॥

ज०म० मन्युरित्यादि। मन्युर्मम शोकः मन्ये इत्यहं सशोकः सुहृज्जनेऽस्तम्भीत् स्तब्धवान् विषाद उद्यतिमलभत्. अत्र पक्षे अनुनासिकलोपः प्रज्ञा च तत्र विवेकिनी बुद्धिः अजारीत् विवेकवैकल्यात् जीर्णेव तथाशब्दः समुच्चये बलं शोकादजरत् जीर्णं स्वकार्य्याकरणात् ऋदृशोऽङीति गुणः जृस्तम्भित्यादिना सिजङौ॥ ३०॥

भ० मन्युरित्यादि। हे सौमित्रे मन्युः शोकोमम मन्ये स्तब्धमूर्त्तिशिरादयमस्तम्भीत् शोकजन्यवायुना मन्यास्तम्भोनाम व्याधिर्जातइत्यर्थः मन्युशोकौ तु शुक् स्त्रियां पश्चाद्ग्रीवाशिरामन्येति चामरः विषाद उत्साहविपर्य्यय उद्यतिं उद्यममलभत् लभ्धातुः सौत्रिकः शासलिहदिति वाङ् इसुनङ् लोपः क्ताभावपक्षे क्तिः उत्पूर्व्वाद्यमेः क्तौ वनतनाद्यनिमामिति मलोपः मम प्रज्ञा बुद्धिश्चाजारीत् कर्त्तव्यमूढत्वाज्जीर्णेव तथा मम बलं शोकात् अजरत् कार्य्याक्षमत्वाज्जीर्णमिव पूर्व्ववदाङ् ऋशोर्ण्वितिगुणः पक्षे सिः अजवदेति ञिः तथेति समुच्चयाभ्युपगमयाहत्यौच्चिति वृद्धाः॥ ३०॥

गृध्रस्येहाश्वतां पक्षौ कृत्तौ वीक्षस्व लक्ष्मण। जिघांसोर्नूनमापादि ध्वंसोऽयं तां निशाचरात्॥ २१॥

गृध्रस्येत्यादि। हे लक्ष्मण इह प्रदेशे गृध्रस्य पक्षौ कृत्तौ छिन्नौ अश्वतां शूनौ पूर्ववदङि श्वयतेरः इति वीक्षस्व नूनमवश्यं सीतां जिघत्सोरत्तुमिच्छोर्गृध्रस्य अदेर्लुङ्सनोर्घस्तृ निशाचरादयं ध्वंसः पक्षच्छेद आपादि उत्पन्नः कर्त्तरि लुङ् चिण्तेपद इति त्रेश्चिणादेशः तशब्दस्य चिणोलुक्॥ २१॥ अ०म०

गृध्रेत्यादि। हे लक्ष्मण इह स्थाने गृध्रस्य कृत्तौ छिन्नौ पक्षौ अश्वतां वायुना मांसादिपरिणामेन वा वृद्धिं गतौ इति वीक्षस्व पश्य टुओश्विगतिवृद्ध्योः पूर्व्वेण वा ङः वच्यस्श्विपतामिति श्वः नूनं निश्चितं तां सीतां जिघांसोर्गृध्रस्य अयं ध्वंसः पक्षच्छेदः निशाचरादापादि उत्पन्नः पदस्तनीण्वेदति कर्त्तरि इण् इणस्तनलोपः जिघत्सोरिति पाठे अत्तुं भोक्तुमिच्छोः घसुदःस निति अदेर्घस्तृः सत्सरे॥ २१॥ भ०

क्रुद्धोऽदीपि रघुव्याघ्रो रक्तनेत्रोऽजनि क्षणात्। अबोधि दुःस्थं त्रैलोक्यं दीप्तैरापूरि भानुवत्॥ २२॥

क्रुद्ध इत्यादि। तदेवं रघुव्याघ्रो रामः क्रुद्धोऽदीपि दीप्तवान् क्षणाच्च रक्तनेत्रोऽजनि जातः जनिवध्योश्चेति न वृद्धिः त्रैलोक्यं निहन्मि यस्मिन् हन्यमानेऽपि सीताकृशोऽपि नश्यन्ति इत्यभि प्रायेण दुःस्थमबोधि बुध्यते स्म किम्वा रामस्य दाराह्रियन्ते अ०म०

महाब्धिषु का कथा इति दुःखं त्रैलोक्यमबोधि दीप्तैस्तेजोभिर्ह तुभिरापूरि वर्द्धते स्म भानुवदादित्यवत् दीप्तैरिति भावे निष्ठा सर्व्वत्र कर्त्तरि लुङ् दीपजनेत्यादिना चिण्॥ २२॥

भ० क्रुद्ध इत्यादि। लक्ष्मणायैवमुक्त्वा रघुव्याघ्रो रामः क्रुद्धः सन् अदीपि जज्वाल घृणाच रक्तनेत्रोऽजनि जातः त्रैलोक्यमेतं दुःखं अबोधि ज्ञातवान् प्रभुमलब्ध्वा तन्नाशाय त्रैलोक्यमपि नाशयिष्यामीत्याशयः येनाहमपि दुःखः कृतस्तेन सुतरां जग द्दुःखमिति वा दीप्तैस्तेजोभिर्हेतुभिरापूरि वर्द्धते स्म भानुरिव दीपेर्भावे क्तः सर्व्वत्र पदस्तनेत्यादिना कर्त्तरि पाक्षिक इण् इणस्तन लोपः जनवधःसेम इत्यादिना जनेर्ह्रस्वः॥ २२॥

अतायघस्योत्तमं सत्वमप्यायि कृतकृत्यवत्। उपा चायिष्ट सामर्थ्यं तस्य संरम्भिणोमहत्॥ २३॥

ज०म० अतायीत्यादि। अस्य रामस्य उत्तमं सत्वमभिप्रायः शोकव्य सनयोरविकारत्वात् अतायि सन्ततं नान्तरा विक्रियते स्म अप्यायि वृंहितं कृतकृत्यवत् समाप्तक्रियवत् हस्ततलस्थं शत्रुवधं मन्य मानस्य उभयत्रापि पूर्व्ववच्चिण् तस्य रामस्य संरम्भिणः शत्रुवि षये क्षुभितचित्तस्य सामर्थ्यं बलमुपाचायिष्ट स्वयमेवोपचीयते स्म चिनोतेरयः कर्म्मकर्त्तरीति चिण् पक्षे चिस्सदिट् चेति॥ २३॥

म० अतेत्यादि। अस्य रामस्य सत्वं व्यवसायः स्वभावो वा अतायि सततं बभूव नान्तरा विहन्यते स्म उत्तमं व्यसनेऽपि अविकृतं ता पृक्पातमसक्तयोः अप्यायि वर्द्धते स्म कृतकृत्यवत् समाप्तक्रिय इव

क्रोधोत्साहाधिक्यात् विहितो वैरिवध इत्यध्यवसायात् ष्याधीङ् वृद्धौ उभयत्र पूर्ववद्वा इण् संरम्भिणः शत्रुविषये क्रुद्धस्य तस्य रामस्य सामर्थ्यं महदुपाचायिष्ट स्वयमेवोपचीयते स्म घनयह इत्यचइति चिनोतेः सेर्म्मिण् कर्मकर्त्तरि चायृ्क्षनिशाने ऽर्थे इत्य स्यानेकार्थत्वात् कर्त्तर्य्येवेदं रूपमित्यन्ये सत्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः। आत्मनि व्यवसाये च चित्ते प्राणिषु जन्तुष्विति विश्वः॥ ३३॥

अदीपीव विषादोऽस्य समरुद्धेव विक्रमः। सम भावि च कोपेन न्यश्वसीच्चायतं मुहुः॥ ३४॥

अदीपीत्यादि। अस्य रामस्य विषादः प्रागुत्पन्नोऽदीपीव स्वयं ज०म० ज्वरितइव अथवा अदीपीव प्रपूर्य्यते स्मेव विक्रमः पुरुषकारः समरुद्धेव संरुध्यते स्म इव कर्मवदित्यादिना कर्मवद्भावेन प्राप्त स्य चिणो न रुधइति निषेधःतेन सिजेव भवति झलोझलीति सिचो लोपः झषस्तथोर्धोऽधः झलाञ्जश्झशीति धत्वजस्त्वे कोपेन च समभावि सम्भूतं चिण्भावकर्मणोरिति भावे चिण् त्रैलोक्यदौः स्थावबोधाज्जातखेदः सन् आयतं दीर्घं न्यश्वसीत् निश्वसितवान् ह्यन्तेति वृद्धिर्न भवति मुहुरिति सर्व्वत्र योज्यं॥ ३४॥

अदीपीत्यादि। अस्य रामस्य प्रागुत्पन्नो विषादः स्वयमेवा भ० दीपि इव क्रोधातिशयात् स्वयं ज्वरितइव पूर्य्यते स्मेवेत्यन्ये वेपञ् दुपइति कर्मकर्त्तरि वा इण् विक्रमोऽपि समरुद्धेव स्वयमेवाक्तः प्रविष्टइव नतपरुधषष्ठेति कर्मकर्त्तरि इण्निषेधः प्रशस्तादि

ति सिलोपः अस्य कोपेन समभावि सम्भूतं रतनोर्यगिणाविति भावे इण् कोपात् मुहुर्व्वारंवारं आयतं दीर्घं यथा स्यात्तथा रामोऽन्वश्वसीत् ह्यमादेःसेमइत्यादौ श्वसनर्ज्जनात् न वृद्धिः। इति सिजधिकारः॥३४॥

## श्नम्प्रकरणं कथ्यते।

अथालम्ब्य धनूरामोजगर्ज्ज गजविक्रमः। रुणध्मि सवितुर्मार्गं भिनद्मि कुलपर्व्वतान्॥ ३५॥

ज०म० इतःप्रभृति श्नम्विकरणमधिकृत्याह। अथेत्यादि। अथान न्तरं रामोधनुरालम्ब्य गृहीत्वा जगर्ज्ज विस्फुर्ज्जितवान् धनूराम इति रलोपइति दीर्घः गजगतिः सवितुः सूर्य्यस्य मार्गं पन्थानं रुणध्मि आवृणोमि शरैरित्यर्थात् तथा भिनद्मि विदारयामि कुलपर्व्वतान्॥ ३५॥

भ० अथ नमव्द्वाधिकारः। स च स्नमते श्नम्। अथेत्यादि। अन न्तरं गजपराक्रमोरामोधनुरालम्ब्य गृहीत्वा जगर्ज्ज सिंह नादं चकार किं कृत्वा जगर्ज्जेत्याह अहं सवितुः सूर्य्यस्य मार्गं पन्थानं रुणध्मि आवृणोमि अर्थात् शरैः मृदुत्वादेव ममेदृशं कर्म्म संवृत्तं इदानीं महतो दण्डभयादन्योऽपि सीतां दास्यति नच पुनरेवं कोऽपि करिष्यतीति भावः अतएव न तृणेढ्मीति लोकोऽयमिति वक्ष्यति कुलपर्व्वतान् पृथिव्याअवलम्बकान् पर्व्व तानपि अहं भिनद्मि विदारयामि रुधिरोञ्आवृतौ ञधी भिदिर्भिदि द्विवसुतुदइधेति श्नमेव श्नमादिवत् प्रकृतिप्रत्य

यथोः साहाय्यकारित्वान्न अप् दिवसुतुदरुधक्रादेरिति षष्ठ्ये कवचनान्तं पदं तेन दिवादिप्रभृतीनां सम्बन्धे श्यनादयोऽपरे निर्द्दिष्टाइत्यर्थः ते कुत्र भवन्तीत्याशङ्क्य वृत्तावुक्तं एभ्यइति तेन सूत्रे षष्ठीनिर्द्देशात् रुधादेः श्नम् मित्त्वादन्त्याचः उत्तरः एभ्यइति वृत्तौ पञ्चमीनिर्द्देशादन्ये प्रकृतेरुत्तरइति बोध्यं न च सूत्रे पञ्चमीनिर्द्देशेऽपि मित्वात् श्नम् रुधादेरन्त्यादचः परे भवितुमर्हति मित इत्यस्य षष्ठ्यन्तएव विषयत्वात् शासुलिइ त्पुषादेरिति पञ्चम्यन्तत्वात् प्रकृतेः परोङः न तु ङित्वादन्त्यस्य स्थाने इत्यादिदर्शनात् षष्ठीनिर्द्देशेऽपि पञ्चम्यर्थोगम्यते तथाहि अनडुत्पुंपयोलक्ष्मीनावामेकत्ववाचिनां। नित्यं कः स्यादङ्भीहौ वा स्याद्विलवङ्गलयोरिति। अन्यत्रापि नित्यात्वतां स्वरान्तानां सृजिदृश्योश्च वेट्थलि। ऋचि नित्यानिटःस्युस्तेदृव्येऽदांनित्यमिट् थलीति ॥ २५ ॥

रिणच्मि जलधेस्तोयं विविनच्मि दिवः सुरान्।
चुणद्मि सर्पान् पाताले छिनद्मि क्षणदाचरान् ॥ २६॥

रिणच्मीत्यादि। जलधेस्तोय रिणच्मि रिक्तीकरोमि रिचि अ०म० रविरेचने दिवः स्वर्गात् सुरान्विविनच्मि पृथक्करोमि विचिर पृथग्भावे चुणद्मि चूर्णयामि सर्पान् पाताले चुदिरपेषणे अट् कु प्वाङिति णत्वं छिनद्मि क्षणदाचरान् राक्षसान् द्विधा करोमि छिदिरद्वैधीकरणे ॥ २६ ॥

भ० रिणच्मीत्यादि। जलधेः समुद्रस्य तोयं रिणच्मि रिक्तीकरोमि रिचिर्धोविरेके रेफात् श्नणोणत्वं सुरान् दिवः स्वर्गात् विविनच्मि पृथक्करोमि विचिर्लिंधौ पृथक्त्वे विपूर्व्वः सुरा योगात् सुराः अर्श्चादित्वादः तदुक्तं सुरापरिग्रहाद्देवाः सुरा इत्यभिविश्रुता इति किम्वा सुरन्ति भान्ति ईश्नते वा इति सुरा सुरश्भैश्वर्य्योरित्यस्मात् इगुपधप्रीजुक इति कः पाताले सर्पान् क्षुणद्मि चूर्णयामि अधोक्षुदिर्क्षुदि क्षुत्संपेषणं सकारात्वं पतन्ति लोका अस्मिन्निति पातालं निपातनात् क्षणदाचरान् छिनद्मि द्वैधीकरोमि छिदिर्धीञ्छेदे॥ २६॥

यमं युनज्मि कालेन समिन्धानोऽस्त्रकौशलं।
भुजुष्कपेषं पिनष्म्युर्व्वीमखिन्दानः स्वतेजसा॥ ३७॥

ज०म० यममित्यादि। यममपि कालेन तदधीनेन मृत्युना युनज्मि सम्बध्नामि अस्त्रकौशलं समिन्धानः समर्द्धयन् ञिइन्धीदीप्ती आत्मनेपदिनोलटः शानच् श्नान्नलोपः अनोरलोपः उर्व्वीं भुजुष्कां कृत्वा चूर्णयामि पिषृसंचूर्णने शुष्कचूर्ण इत्येषुपिषइति णमुल् अखिन्दानः स्वतेजसा दैन्यमगन् अपरिश्राम्यन् खिद दैन्ये पूर्व्ववल्लोपः॥ ३७॥

भ० यममित्यादि॥ यममपि कालेन मृत्युना अहं युनज्मि इन्मीत्यर्थः युजिर्धोञ्युतौ अस्त्रकौशलं समिन्धानः वर्द्धयन् इन्धीञ् धक्तिद्युतौ शानः श्नसोरल्लोप इत्युक्लोपः श्नान्नलोपाविति नस्य अकाररहितत्वं उर्व्वीं भुजुष्कपेषं पिनष्मि चूर्णयामि धोःपिषु

चूर्णने ग्रुध्यकचूर्णत्वात् पिषेणम् गतार्थत्वे तदनुप्रयोगश्चेति पर: स्वमते चणश्चित्यस्य योगविभागात् चैयुग्मचामकवदृति ग्रुषे: कस्य क: स्वतेजधा अखिन्दान: दैन्यमभजन् अपरिश्रा म्यन् वा खिदकेथ्योर्दैन्यके नणोमेऽपी ॥ ३७ ॥

भूतिं तृणद्मि यक्षाणां छिनद्मीन्द्रस्य विक्रमं। भनज्मि सर्व्वमर्य्यादास्तनच्मि व्योम विस्तृतं। ३८ ॥

भूतिमित्यादि। यक्षाणां भूतिं सम्पदं तृणद्मि उत्सादयामि उतृ दिर हिंसानादरयो: इन्द्रस्य विक्रमं छिनद्मि अपनयामि छिदि हिंसायां इदितानुम् तस्य आन्नलोप: सर्व्वमर्य्यादाश्च व्यवस्था: सर्व्वेषां भनज्मि मर्द्दयामि भञ्जोआमर्द्दने आन्नलोप: तनच्मि व्योम विस्तृतं संकोचयामि तृञ्चआच्छादने कान्तेन चौरादिकस्य रूपं तञ्चूसङ्कोचे आन्नलोप: कस्मादेवं प्रवृत्तस्त्वमिति चेदाह ॥३८॥ ज०म०

भूतिमित्यादि। यक्षाणां भूतिं सम्पदं तृणेह्मि नाशयामि तृहञ् धिनादरेच चकाराद्धिंसायां इन्द्रस्य विक्रमं छिनद्मि अपनयामि छिदधिकिहिंसे नणामलोपइति इदित्वात् सतनुणोलोप: सर्व्वेषां मर्य्यादाव्यवस्थाभनज्मि निवर्त्तयामि भन्जोर्धामोटने योम्नआकाशस्य विस्तृतं विस्तारं तनच्मि सङ्कोचयामि तञ्चुधसंकुचि तनज्मीति पाठे तन्चुधसङ्कोचे तृनञ्स्तृतावित्यस्माद्भावे क: व्योमविशेषणे विस्तृतमिति निरर्थकं स्यात् ॥ ३८ ॥ भ०

न तृणेह्मीति लोकोऽयं मां विन्ते निष्पराक्रमं। एवं वदन् दाशरथिरपृणग्धनुषा शरं॥ ३९ ॥

ज॰म॰ नहणेह्मीत्यादि। न हणेह्मि न मारयामि इति कृत्वा हहिंसि सिहिंसायां अम् हणहद्दम् अयं लोको मां निष्पराक्रमं निर्व्वीर्य्यं विन्ते विचारयति विदविचारणइत्यस्मादात्मनेपदिनः अम् अलोपः एवमुक्तेन प्रकारेण वदन् दाशरथिः धनुषा शरं। अपृणक् पृणक्ति स्म पृचोसंपर्के लङि अम् हल्ङ्यादिलोपः कुलं इति अम् विकरणनिदर्शनं॥ ३९॥

भ॰ नहणेह्मीत्यादि। कथमेवं प्रवृत्तिरित्याह अहं न हणेह्मि न हन्मि इति कृत्वा मनसीत्यर्थात् अयं लोकः मां निष्पराक्रमं विन्ते विचारयति तेन मे पल्यपहारो वृत्तइति भावः धीविदङ् मीमांसे नणोम्नेऽणौ हहधहिंसे हहइणपिद्भसे इति नणइण् श्चकारात् णलं दाशरथीरामएवं वदन् धनुषा शरं अपृणक् युनक्ति स्म पृच्धीच्सम्पर्के हसङ्ग्यादिसेरिति दिसीपः षङिति कङ् श्नतोणलं शृणाति हिनस्तीति शरोऽनन्तः तालव्यादिः दन्त्यादिरप्यस्ति चित्रपुङ्खः शरः सरइति त्रिकाण्डशेषः। इति नशब्दाधिकारः॥ ३९॥

## अथ प्रकीर्णकाः।

न्यवर्त्तयत्सुमित्राभूस्तं चिकीर्षुं जगत्त्रयं। ऐचे तामाश्रमादाराङ्गिरिकल्पं पतत्रिणं॥ ४०॥

ज॰म॰ इतः प्रकीर्णकश्लोकानाह। न्यवर्त्तयदित्यादि। तं रामं जगत्त्रयं चिकीर्षुं कर्त्तुमिच्छं सुमित्राभूर्लक्ष्मणोन्यवर्त्तयत् निवर्त्तितवान् भ्रातः अलं कोपेन त्वया सार्द्धं कः संग्रामे युद्धं दातुं समर्थः

यदत्र युक्तं तत्प्रतिविधीयतामिति भवनं भूः सम्पदादित्वात् क्विप् सुमित्रायां भूर्यस्य ऐचेतां रामलक्ष्मणौ दृष्टवन्तौ लङि रूपं पक्षिणं गिरिकल्पं महाप्राणित्वात् आश्रमादारात् समीपे दूरान्तिकार्थैरिति पञ्चमी ॥ ४० ॥

अथ प्रकीर्णकाः। न्यवेत्यादि। इत्थं जगतः क्षयं कर्त्तुमिच्छन्तं तं रामं सुमित्राभूर्लक्ष्मणो न्यवर्त्तयत् निवारयामास अन्यापराधेनान्यदण्डानौचित्यात् सुमित्रा भूरुत्पत्तिस्थानं यस्य सुमित्रायां भूर्भवनं यस्येति वा सुमित्रायाभवतीति वा क्विबन्तमिदं रूपं अथ रामलक्ष्मणौ आश्रमादारात् समीपे गिरिकल्पं पर्व्वततुल्यं पतत्रिणं पक्षिणं ऐचेतां दृष्टवन्तौ अन्यारंभार्थारादिति पञ्चमी ॥ ४० ॥ भ०

तं सीताघातिनं मत्वा हन्तुं रामोऽभ्यधावत। मा वधिष्ठाजटायुं मां सीतां रामाहमैक्षिषि ॥ ४१ ॥

तमित्यादि। तं सीताघातिनं सीता हतानेनेति मत्वा रामो हनिष्यामीत्यभ्यधावित धावुगतिशुद्ध्योरित्यस्माल्लङि स्वरितेत्वादात्मनेपदं तं हन्तुमुद्यतं रामं जटायुराह मा वधिष्टाइति हे राम मां जटायुं मा वधिष्ठाः मा वधीः वधबन्धने इत्यस्मादिने कार्थत्वादात्मनेपदिनः सेटोलुङि रूपं न हन्तेःसत्याङि आङो यमहनइत्यात्मनेपदं नास्ति अकर्म्मकादित्यनुवृत्तेः स्वनामपरिकीर्त्तनं तव पितुरहं सखेति ख्यापनार्थं सीतामैक्षिषि दृष्टवानहं लुङुत्तमैकवचने अतोमा मां वधिष्ठाः ॥ ४१ ॥ ज०म०

तमित्यादि। तं पक्षिणं सीताघातिनं सीतामयं हतवान् इति भ०

मत्वा हन्तुं रामोऽभ्यधावत वेगेन अभिमुखं गतवान् धावुञ्जवे स्फजि उपास्थितैवमुक्तमिति वक्ष्यमाणश्लोकेनान्वयात् मा बधिष्ठा इत्यादिपद्याद्धि हन्तुमुद्यतं रामं प्रति जटायुवाक्यमिति गम्यते हे राम जटायुं मां त्वं मा बधिष्ठाम मारय हन्तेस्त्वामश्यांषिः हन बधष्टोव्यलीति बधादेशः धात्वन्तत्वात् वधोरस्येतोम् आत्मने पदमिच्छन्ति परस्मैपदिनां क्वचिदिति परवाक्यात् स्वमते वाऊ ख्यात् आत्मनेपदं किम्वा आङ्पूर्व्वहन्तेः आत्मानुठादठावाहन यमइति मं आत्माकूठादित्यस्य क्वचिद्व्यभिचारात् तथाच गाण्डी वी कनकशिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्षइति किम्वा जटायुमिति नामकीर्त्तनेन तव पितुः सखा अहमिति ख्या पितं तेन च तव पितुः सख्यदार्ढ्येनाहं तव स्वाङ्गमिव मम हिंसया तव स्वाङ्गहिंसा व्यर्थेति आरोपितात्माङ्गत्वादात्माङ्गठादित्या त्मनेपदं किम्वा आत्माङ्गठादित्यत्र आत्मशब्देनात्मीयोऽपि लक्ष्यते किम्वा धातूनामनेकार्थत्वाद्धङ्निन्देच इत्यस्य रूपं किन्निजगुपइत्यादौ निन्दावधेःसन्विधानाद्‌च न सन् जटा आयुर्यस्येति व्युत्पत्त्या तस्य च प्रवयसोजटायुषः स्वर्गिणः किमनु शोच्यतेऽधुनेति दर्शनाच जटायुमिति चिन्त्यमिति भ्रान्तावद न्ति यतो वाऊक्ष्यादिणधातोरुण्प्रत्यये आयुशब्दोऽयमुदन्तोऽपि दृश्यते यथा वायुना जगदायुनेति जटायुस जटायुरिति शब्द भेदः पौलस्त्यस्य जटायुषा विघटितः कार्ष्णायसोऽयं रथः पश्येते पुरतः पिशाचवदनाः कङ्कालशेषाः कृताः। खड्गछिन्नजटायुपक्ष तिरितः सीताञ्चलन्तीं वहन्नन्तर्व्याकुलविद्युदम्बुदइव द्यामभ्युद स्थादरिरित्येतत्पद्यमुनादिष्टत्तावुङ्क्तदत्तेन जटायुशब्दस्य स

क्रोदन्तलेन दैन्यप्रापनायोद्यक्षतं अहं सीतामैथिषि दृष्ट वान् त्वां वि दूम् अतोऽपि मा वधिष्ठाइति भावः॥ ४१॥

उपास्थितैवमुक्तो तं सखायं राघवः पितुः। पप्रच्छ जानकीवार्त्तां संग्रामञ्च पतत्त्रिणं। ततो रावणमा ख्याय द्विषन्तं पततां वरः॥ ४२॥

उपास्थितइत्यादि। पक्षिणैवमुक्ते सति राघवस्तं रणभुक्तानुष्ठा ज०म० नेन उपास्थित परिचितवान् संगतकरणआत्मनेपदं स्थाघ्वोरिच्चे तील्लं ह्रस्वादंगादिति सिचोलोपः पितुः सखायं मम पितुः सखाय मिति कृत्वा सखिशब्दाद्द्वितीयैकवचने रूपं सख्युरसम्बुद्धाविति णित्वाद्वृद्धिरायादेशः पप्रच्छ पृष्टवान् तं पक्षिणं जटायुं किं जान कीवार्त्तां संग्रामञ्च ततउपस्थानानन्तरं रावणं द्विषन्तं शत्रुं आ ख्याय कथयित्वा रावणेन हृता सीतेति पततां पक्षिणां वरोजटा युर्ममारेति परेणान्वयः॥ ४२॥

उपेत्यादि। पक्षिणा एवमुक्ते सति राघवस्तं पितुः सखायं भ० उपास्थित आराधितवान् मैत्राध्वसङ्गइति सं स्थाद्वेर्ङिष्टीमेइति ङिर्गुणाभावश्च ह्रस्वादिति सिलोपः ततउपस्थानानन्तरं द्वि षन्तं शत्रुं रावणमाख्याय सीता तेन हृतेति कथयित्वा पततां पक्षि णां वरः श्रेष्ठोजटायुर्ममारेति वक्ष्यमाणश्लोकेन सम्बन्धः॥ ४२॥

व्रणवेदनया ग्लायन्ममार गिरिकन्दरे। तस्यान्त्य स्वक्रियां कृत्वा प्रतस्थाते पुनर्व्वनं॥ ४३॥

व्रणेत्यादि। व्रणकृता वेदना पीडा मध्यपदलोपी समासः तया ज०म०

म्लायन् म्लानिं गच्छन् व्रणव्यथयाार्त्तः ममार मृतः स गिरिकन्द रे यं गिरिमभ्यसृपत् तस्य निम्नप्रदेशे कन्दं रातीति व्युत्पत्तिमा श्रं तस्य जटायोरग्न्यम्बुक्रियां दाहमुदकदानञ्च कृत्वा पुनर्भूयो वनमरण्यं प्रतस्थाते प्रस्थितौ समवप्रविभ्य इत्यात्मनेपदं ॥ ४२ ॥

भ० व्रणेत्यादि। व्रणेन या वेदना तया म्लायन् म्लानिं गच्छन् ममार अथ गिरिकन्दरे यं गिरिमभ्यसृपद्रामस्तस्य निम्न प्रदेशे गुहायां वा अग्निक्रियां दाहं अम्बुक्रियां तर्पणं च कृत्वा पुनर्व्वनं प्रतस्थाते अर्थाद्रामलक्ष्मणौ प्रतिज्ञानिर्णयेत्यादिना प्रश्लोमं म्हङ्ष्टीक्रोमिति नियमात् ठीपं। अथालब्ध्धनूराम इत्यादिपद्यार्द्धादनन्तरं सीताविरहदुःखार्त्तः कोपसंरक्तलो चन इति यमं युनज्मि कालेनेत्यादिपद्यार्द्धानन्तरं विनज्मि धाम सर्व्वेषां हणज्मि सकलं जगदिति एवं वदन् दाशरथिरित्यादि पद्यार्द्धादनन्तरं अगस्त्याशाय सन्नद्धस्तृणवत् स्वेन तेजसेति न्यवर्त्त यत् सुमित्राभूरित्यादिपद्यार्द्धानन्तरं तेजःखाचं विवृण्वानं दिध क्षन्तमिवानलमिति तं सीताघातिनं मत्वेत्यादिपद्यार्द्धानन्तरं प्रोवाच स तदापक्षी भयाद्रामेण तर्जित इति उपास्थितैवमुक्ते तमित्यादि पद्यार्द्धानन्तरं पप्रच्छ जानकीवार्त्तां संग्रामञ्च पतत्रि णमिति तस्याग्न्यम्बुक्रियां कृत्वेत्यादि पद्यार्द्धानन्तरं विराधमीयि वांसौ तां विचिन्वानावितस्ततइति पद्यार्द्धं केनचित् क्वचित् पुस्त के प्रक्षिप्तं सर्व्वमिदं प्राचीनैरुपेक्षितत्वादमूलमेव तत्राप्यथालब्ध धनूराम इत्यादिपद्यार्द्धानन्तरं सीताविरहदुःखार्त्तः कोपसंरक्त लोचन इति पद्यार्द्धमतीवायुक्तं सम्बन्धाधिकारे सम्बन्धाभावात्* ॥ ४२ ॥

सत्वानजस्रं घोरेण बलापकर्षमश्नता। क्षुध्यता ज गृह्याते तौ रक्षसा दीर्घबाहुना॥ ४४॥

सत्वानित्यादि। तौ रामलक्ष्मणौ रक्षसा राक्षसेन जगृह्याते गृहीतौ कर्म्मणि लिट् किं नाम्ना दीर्घबाहुना अन्वर्था चेयं संज्ञा एक एकेन बाहुना द्वितीयोद्वितीयेन क्षुध्यता बुभुक्षमाणेन घोरेण भीमेन सत्वान् अजस्रं सदा नञ्पूर्व्वाज्जसोनमि कम्पीति रः अश्नता भुञ्जानेन किं कृत्वा बलापकर्षं बलादाकृष्यैव पाकादिकमनपेक्ष्य अपादाने परीप्सायामिति णमुल्॥ ४४॥ ज०म०

सत्वानित्यादि। तौ रामलक्ष्मणौ दीर्घबाहुनाम्ना रक्षसा जगृह्याते गृहीतौ कर्म्मणि ठो क्षुध्यता बुभुक्षुणा दिवादित्वात् श्यन् बलापकर्षं सत्वान् प्राणिनोऽजस्रं निरन्तरं अश्नता भक्षयता बलादपकृष्य त्वरया परिष्कारादिकमकृत्वैव पक्ष्यमाणात्त्वरायां णमिति परः स्वमते बलेनापकर्षोऽपकर्षणं यत्रेति सत्वभक्षणक्रियाविशेषणं एतेन त्वरयापरिष्कारादिकं तदपि प्राप्तं परिष्कृतत्वादौ बलहेतुत्वस्य वैयर्थ्यात् चणम्नेत्यस्य योगविभागाद्वा चणम् घोरेण भयदेन नञ्पूर्व्वाज्जसेर्हिंसदीपकम्पाजसेति रः॥ ४४॥ भ०

भुजौ चकृततुस्तस्य निस्त्रिंशाभ्यां रघूत्तमौ। स च्छिन्नबाहुरपतद्दिक्कलो कलयन् भुवं॥ ४५॥

इति प्रकीर्णकाः।

ज॰म॰ भुजावित्यादि। रघूत्तमौ रामलक्ष्मणौ तस्य योजनवाहोः वाहू यथास्थानमागतौ चक्रततुः छिन्नवन्तौ क्रतोछेदने इत्यस्य रूपं काभ्यां निस्त्रिंशाभ्यां खड्गाभ्यां निर्गतस्त्रिंशताऽङ्गुलिभ्यइति वाक्ये डच्प्रकरणे संख्यायास्तत्पुरुषस्योपसंख्यानमिति त्रिंशच्छब्दाड्डच्विधिः निरादयइति समासः टिलोपः सछिन्नवाहुः कृत्तभुजः सन् अपतत् पतितः पतेर्लङि रूपं लृदित्वादङ् विक्लवो व्याकुलः भुवं भूमिं क्षलयन् क्षलचलने घटादित्वे ह्रस्वत्वं। इति प्रकीर्णकाः॥ ४५॥

भ॰ भुजावित्यादि। रघूत्तमौ निस्त्रिंशाभ्यां तस्य रघुत्तमोभुजौ खड्गग्रहणोद्यतौ चक्रततुः कृतीछेदने छिदि त्रिंशतोऽङ्गुलीभ्योनिर्गतः निस्त्रिंशः निश्चःशतोडइति सूत्रे निशइति निर्देशात् निष्पतन्यइत्यादिवत् ज्ञापकप्राप्तस्य षत्वस्याभावः त्रिंशतोऽङ्गुलीभ्योऽधिकं परिमाणं खड्गस्यास्य निस्त्रिंशः करखड्गयोरिति कोषः सच्छिन्नवाहुः सन् भुवं क्षलयन् कम्पयन् न्यपतत् क्षलक्षलचाले ज्वलक्षलेत्यादिना अगेर्वा ह्रस्वः विक्लवोव्याकुलः। इति प्रकीर्णकाः॥ ४५॥

## अथकृत्याधिकारः।

प्रष्टव्यं पृच्छतस्तस्य कथनीयमवोचत्। आत्मानं वनवासञ्च जेयञ्चारिं रघूत्तमः॥ ४६॥

ज॰म॰ इतः परं कृत्याधिकारः। प्रष्टव्यमित्यादि। यद्योजनवाहुः निहतोरामं पप्रच्छ कोभवान् कस्य पुत्रः कथं तव वनवासः कश्चाये

द्विषः सन् भ्रमसीति प्रष्टव्यं प्रश्नार्हं पृच्छतस्तस्य तथ्यक्तव्यानीयर इति सव्यत् प्रश्नेति षत्वं टत्वञ्च रघूत्तमः इदानीं कथनीयं कथनार्हं तत्प्रश्नानुरूपं पूर्व्वेणानीयर अवीवचद्कथित्स्म वचभाषणे चौरादिकः स्वार्थिकोणिच् लुङ् चङ् णिलोपह्रस्वः द्विर्व्वचनमन्त्र ह्लावेलदीर्घलेषु रूपं किन्तदित्याह आत्मानं राभोदाशरथिरिति वनवासं पितुरादेशात् वनवासं जेयं चारिं यः कनकमृगमछलेन रावणः सीतामपहृतवान् ॥ ४६ ॥

अथ कृत्याधिकारः। स्वमते त्यास्तव्यानीयथ्यण्क्यप्केलिमाः। प्रष्टव्यमित्यादि। कस्त्वं कथमिहागतइत्यादि प्रश्नार्हं पृच्छतस्तस्य राचसस्य सम्बन्धे रघूत्तमः कथनार्हं प्रश्नानुरूपं अवीवचत् कथितवान् वच्कच्मन्त्रेणं किलाच्चुरादिः ञिश्रीत्यङ् ञ्यङ्गुङः स्वः खेःसन्वत् ञेर्लोपः किन्तदित्याह आत्मानं पित्रादिसम्बन्धेन वनवासं वनवासकारणमर्थात् जेयं जेतव्यमरिं शत्रुं रावणं शत्रुतावीजसहितमित्यर्थात् शकीशसोपे तथ्ये शक्याजिति षङ् शतरि तु शरस्वपायोरिति जिः कथत्कवाक्यप्रबन्धे हमालोपोऽस्त्यथोरित्यकारलोपेऽपि स्थानिवद्भावाकञ्जित्यन्तोगुङ्तोरिति ञिः ञेर्लोपः ते त्याः शक्यार्हेति अर्ह इत्यर्थे सर्व्वत्यः॥ ४६ ॥

लभ्या कथन्नु वैदेही शक्योद्रष्टुं कथं रिपुः। सह्यः कथं वियोगश्च गद्यमेतत्त्वया मम॥ ४७॥

लभ्येत्यादि। कथं केन प्रकारेण उपायेन लभ्या वदेही प्राप्या पोरदुपधादिति यत् शत्रुः केन प्रकारेण द्रष्टुं शक्यः शकधृषेत्या

दिना तुमुन् वियोगश्चायं सीतायाः कथं केन प्रकारेण सह्यः सो ढव्यः शकिसहोश्चेति यत् गद्यमेतत् कथनीयमेतत् गदमदेत्या दिना यत् ममेति शेषविवक्षायां षष्ठी त्वं पुनः कः इति पृष्टश्चाह ॥४७॥

भ० लभ्येत्यादि। इत्यपि अवीवचदिति सम्बन्धः नु प्रश्ने कथं वैदेही लभ्या रिपूरावणः कथं द्रष्टुं शक्यः अज्ञातदेशत्वात् कथं वियोगः सीतायाइत्यर्थात् सह्यः एतत्सर्व्वं त्वया मम सम्बन्धे गद्यं वाच्यं लभेर्डुलभष्प्राप्तौ शकयञ्शकिस्नशक्तौ सहजूमर्षे एभ्यः पूशक सहेत्यादिना यः गदभाषे इत्यस्मात् गदमदयमेति यः त्वयेति त्यभावस्केति कर्त्तुः षष्ठी निवृत्तिपक्षे तृतीया ॥४७॥

अहं राम श्रियः पुत्त्रोमद्यपीतइव भ्रमन्। पापच र्य्योमुनेः शापाज्जातइत्यवदत्स तं ॥४८॥

ज०म० अहमित्यादि। हे राम अहं श्रियः पुत्त्रः मद्यपीतइव वाहिता ग्न्यादित्वान्निष्ठान्तस्य परनिपातः कार्य्याकार्य्यविवेकाभावात्पा पचर्य्योराक्षसः मुनेः स्थूलशिरसः शापाज्जातउत्पन्नः माद्यत्य नेनेति मद्यं चरितव्यं चर्य्यमेतौ पूर्व्ववद्यत्प्रत्ययान्तौ पापं चर्य्यं यस्येत्यवदत् सयोजनवाङ्कस्तं रामं वाक्यार्थोऽत्र कर्म्म ॥४८॥

भ० अहमित्यादि। इति सयोजनवाङ्कस्तं रामं अवदत् किमादि त्याह हे राम अहं श्रियोऽप्सरसः पुत्त्रः मद्यपीतः पीतमदिर इव भ्रमन् कार्य्याकार्य्यविवेकशून्यत्वात् कृतापराधोमुनेः स्थूल शिरसः शापात् पापचर्य्यः पापहेतुकर्म्मा राक्षसोजातः एतत्

कथमं तदाक्ये रामप्रीत्यर्थं मन्दोभिर्यज्ञिहर्षे मद्यतेऽनेनेति मद्यं अभिधानात् गदमदचरयमेत्यादिना ढभावे विहितेऽपि यः करणे पीतं मद्यं येनेति अन्याहितादित्वात् क्तान्तस्य वा परनिपात इति रः स्वमते गमकत्वात् पापं चर्य्यं चरणीयं यस्य गदमद यमचरेति यः ॥ ४८ ॥

प्रयातस्तव यस्यत्वं शस्त्रपूतोब्रवीमि ते। रावणेन हृता सीता लङ्कां नीता सुरारिणा ॥ ४९ ॥

प्रयातइत्यादि। इदानीं तव यस्यत्वं वध्यत्वं प्रयातः यमेः ज०म० पूर्व्ववत् यत् शस्त्रपूतस्तव शस्त्रेण पावितः सन् देवोभूतोब्रवीमिते तुभ्यं कथयामि युष्मदस्तुर्थ्येकवचनस्य तेमयावेकवचनइतिते आदेशः क्रियायोगे चतुर्थी कथनीयमाह रावणेन सुरारिणा हृता सीता लङ्कां नीता ॥ ४९ ॥

प्रयातइत्यादि। इदानीं तव यस्यत्वं वध्यत्वं प्रयातः प्राप्तः सन् भ० तव शस्त्रेण पूतः पापान्निर्म्मुक्तः पूर्व्वदशां लब्ध्वा ते तुभ्यमहं ब्रवी मीति तादर्थ्ये चो यमेः पूर्व्वे ण यः पूक्लिश्इति इत्यनेन वेट्त्वात् नेड्वशीति इट्प्रतिषेध इति पूतः कृतवतोरनिमत्वं वचनीयमाह रावणेन सुरारिणा सीता हृता लङ्कां नीता प्रापिता च एतेन लङ्कायां रिपुर्द्रष्टव्यइति अर्थोद्रष्टुं रिपुः कथमित्यर्थोत्तर मुक्तं ॥ ४९ ॥

ऋष्यमूकेऽनवद्योऽस्ति पण्यभ्रातृबधः कपिः। सुग्रीवोनाम वर्य्योऽसौ भवता चारुविक्रमः॥ ५०॥

ज०म० वैदेही प्राप्या कथमिति यमुपेत्य पृष्टवान् तं कथयन्नाह ऋष्य मूकइत्यादि। ऋष्यमूकपर्व्वते सुग्रीवोनाम कपिः चारुविक्रमो महापराक्रमोऽस्ति असौ भवता वर्य्योवरणीयः प्रार्थनीयः वर इप्सायामिति चौरादिकाद्यत् यद्वा अवद्यपण्येत्यच वृञो वर्य्येति स्त्रियामनिरोधे अनिरोध्या सततप्रवर्त्तनी वर्य्या प्रीतिर्यस्येत्यर्थश्चाद्यच् भवता सहवर्य्यः प्रीतिमान् समानव्यसनत्वात् यतः पण्यभ्रातृबधः सः पण्योविक्रेतव्योभ्रातुर्वालिनोबधोयेन यद्येवं तदा कथं मया पापीयान् वर्य्यइत्यतआह अनवद्यः अगर्हणीयः दारापहारित्वेन आततायिनोभ्रातुर्बधेन निर्द्दोषत्वादिति भावः॥ ५०॥

भ० ऋष्येत्यादि। लभ्या कथं नु वैदेहीत्यत्रोत्तरमिदं सुग्रीवो नाम कपिर्ऋष्यमूकनामपर्व्वते अस्ति असौ सुग्रीवोभवता वर्य्यः वरणीयः यतश्चारुविक्रमः अनुपकारकेण मया वृतोऽसौ मत्कार्य्यं कथं साधयिष्यतीत्याह पण्यभ्रातृबधः पण्योविक्रेतव्योभ्रातुर्व्वालिनोबधोयेन भवता वालिबधं कारयित्वा सीतोद्धारं करिष्यतीति भावः पण्यतुल्यत्वात्पण्यव्यपदेशः तर्हि पापात्मनस्तस्य वरणमनुचितं नच तद्वचनेऽपि विश्वासइत्यतआह अनवद्यः अनिन्द्यः दारापहारित्वेनाततायिनोभ्रातुर्बधे निर्द्दोषत्वात् नञ्पूर्व्वोवदिः पणङ्व्यवहृतौ स्तुतौ वृञ्गसम्भक्तौ एषां यान्तानां पण्यनद्यवर्य्येत्यादिना निपातनात् तथा रूपं केचित्तु वरत्के प्सेइत्यस्मात्तव्यानीययादिति ये वर्य्यइति रूपमित्याहुः ऋषयो

ऽमूकाश्च अध्ययनशीला यत्र स ऋष्यमूकः मूर्द्धन्यषकारवानयं ऋष्यो मृगविशेषो मूकोऽयत्रेति वा बलहृश्याहृश्यास्खलीति यमकात् तालव्यशकारवानिति केचित् केचित्तु ऋचोऽद्रिभेदे भमूके इति विश्वप्रकाशे एकदेशेनापि संज्ञा गम्यत इति न्यायात् ऋचमूक इत्येव संज्ञामाहुः नामेति प्रकाश्यसम्भावनाक्रोधाभ्युपगमेष्वव्ययं अन्यथा भेदके तृतीया स्यात्॥ ५०॥

तेन वश्येन हन्तासि त्वमर्य्यं पुरुषाशिनां। राक्षसं क्रूरकर्म्माणं शक्रारिं दूरवासिनं॥ ५१ ॥

तेनेत्यादि। तेन सुग्रीवेण त्वं राक्षसं हन्तासि निहनिष्यसि वश्येन वहत्यभिप्रेतमनेनेति वश्यं करणमिति यत् कीदृशमर्य्यं स्वामिनं पुरुषाशिनां राक्षसानां अर्य्यः स्वामिवैश्ययोरिति यन्नि पात्यते क्रूरकर्म्माणं पापाचारं शक्रारिं रावणं यद्येवमहमेव हन्तुं समर्थ इत्यभिप्रायेणाह दूरवासिनं समुद्रान्तरितवासित्वात् एकाकिना हन्तुं न शक्यत इति भावः॥ ५१ ॥ ज० म०

तेनेत्यादि। तेन सुग्रीवेण त्वं राक्षसं रावणं हन्तासि त्वांरूपं वश्येन उह्यतेऽर्थोऽनेनेति वश्यस्तेन कीदृशं पुरुषाशिनां राक्षसानां अर्य्यं स्वामिनं क्रूरकर्म्माणं पापाचारं शक्रस्यापि अरिं एतेन दुर्ज्जयत्वं दर्शितं दूरे वसन्तं एतेन समुद्रान्तरितत्वात् सहायं विना न हन्तुं शक्यत इति भावः वहेर्ण्यौ प्रापणे चलिगत्यां अनयोः पूर्व्वेण निपातः॥ ५१ ॥ भ०

आस्ते स्मरन् सकान्ताया हृतायावालिना कपिः।
वृषोयथोपसर्य्याया गोष्ठे गोर्दण्डताडितः॥ ५२॥

ज॰म॰ यद्यनवद्यस्तदा कथमस्य पत्नीभ्रातृवधइत्याह आस्तेइत्यादि। वालिना हृतायाः कान्तायाः स्मरन्नास्ते कोऽन्यः सम्भवेत् यस्तं हत्वा त्वया मां योक्ष्यते अधीगिति कर्म्मणि षष्ठी कस्येव वृषो यथा उपसर्य्यायाआसन्नप्रसवायागोः स्मरन् गोष्ठे आस्ते उपसर्य्याकाल्याप्रजनइति निपातितं दण्डताडितः सन् दण्डस्थानीयोऽत्र वाली॥५२॥

भ॰ आस्तइत्यादि। तुल्ययोः सख्यनैविश्वाससूचनाय पत्नीभ्रातृवधत्वादोषदर्शनाय वा इदमाह सकपिः सुग्रीवोवालिना हृतायाः कान्तायाः स्मरन् आस्ते कुतोमया सा लब्धव्येति कर्म्मणि षष्ठी यथा उपसर्य्यायाआसन्नगर्भग्रहणायागोः स्मरन् वृषोगोष्ठे गोस्थाने दण्डेन ताडितः सन् तिष्ठति तद्वत् दण्डतुल्योऽत्र वाली उपस्थियते वृषभेन गम्यते उपसर्य्या ऋतुमत्यां पण्यावद्येत्यादिना निपात्यते॥५२॥

तेन सङ्गतमार्य्येण रामाजर्य्यं कुरु द्रुतं। लङ्कां प्राप्य ततः पापं दशग्रीवं हनिष्यसि॥ ५३॥

ज॰म॰ तेनेत्यादि। हे राम तेन वानरेण संगतं सख्यं अजर्य्यं अनपायं नजोर्य्यतइत्यस्मिन् वाक्ये अजर्य्यं संगतमिति निपातितं आदौ विशेष्यत्वेनोपात्तं संगतं तद्विशेषणमजर्य्यं कुरु द्रुतं यावत्तस्यानेन

युष्मद्विधेन संगतं न भवति आर्य्येण सदाचारेण ऋहतेरार्थत् ततः सङ्गतात् लङ्कां प्राप्य गत्वा पापं पापीयांसं रावणं हनिष्यति ॥ ५३ ॥

तेनेत्यादि। हे राम तेन सुग्रीवेण सह द्रुतं शीघ्रं अजर्य्यं भ॰ मैत्रीं कुरु कीदृशं सङ्गतं समयक्रमेण उचितं सङ्गतपदस्य सख्य वाचित्वेऽजर्य्यस्य तथार्थत्वाद्वैयर्थ्यं स्यात् केचित्तु सुग्रीवेण सह सङ्गतं सख्यं कुरु कीदृशं अजर्य्यं अनपायं सङ्गतार्थस्यापि अजर्य्य शब्दस्योपचारादन्यत्र प्रवृत्तिरित्याहुः न जीर्य्यतीत्यजर्य्यं सङ्गतं पूर्व्वत्रनिपातितं स्नेहोमैत्रीप्रीतिरजर्य्यंसभाजनसङ्गतं प्रोक्तमिति हलायुधः आर्य्येण सदाचारेण ऋधातोर्ण्यत्ऋहलोरिति ण्यति रूपं आरात् पापेभ्योदूरेयातीति आर्य्यद्रति केचित् सदा मनो षादिः द्रुतशब्देन यावद्भवद्विधेनान्येन सह तस्य सख्यं न जात मिति व्यज्यते ततः सङ्गतानन्तरं लङ्कां प्राप्य दशग्रीवं पापं त्वं हनिष्यसि त्वरन्नेन द्रुतीम् ॥ ५३ ॥

अनृतोद्यं न तत्रास्ति सत्यवद्यं ब्रवीम्यहं। मित्र भूयं गतस्तस्य रिपुहत्यां करिष्यसि ॥ ५४ ॥

ननु यावत्कार्य्यं न सिध्यति तावन्मांसङ्गच्छति क्वतकृत्यस्तु नैवेत्य ज॰म॰ तत्राह अनृतोद्यमित्यादि। सत्यमुद्यतद्रति कर्म्मणि यत् अहंसत्यं वचोब्रवीमीत्यर्थः अनृतोद्यं तत्र सुग्रीवे नास्ति अनृतमसत्यं उद्यं वचनं अनृतोद्यं भावे क्यप् यजादित्वात्संप्रसारणं उभयत्रापि

वद: सुपि क्यप् चेति चकाराद्यच यस्मादेवं तस्मान्मित्रभूयं मित्रभावं गत: भुवोभावे क्यप् रिपुहत्यां शत्रुहत्यां करिष्यसि हनस्तचेति क्यप् तकारस्यान्तादेश: ॥ ५४ ॥

भ० अनृतोद्यमित्यादि। स्वकार्य्यं साधयित्वा यदि मामुपेक्षते तदा किं स्यादित्याह अहं सत्यवद्यं सत्यवचनं ब्रवीमि तत्र सुग्रीवेऽनृतोद्यं मिथ्यावचनं नास्ति वदैवाचि सोर्व्वद: क्यपयाविति क्यप् यह स्वपाद्योरिति जि: तस्मात्तस्य सुग्रीवस्य मित्रभूयं मित्रभावं गत: सन् रिपुहत्यां शत्रुवधं करिष्यसि भूहन:क्यप्भावेनतस्येति क्यप् नस्य तस्य लिङ्गभेदोऽभिधानात् ॥ ५४ ॥

आदृत्यस्तेन वृत्येन स्तुत्योजुष्येण सङ्गतः। इत्यः शिष्येण गुरुवद्गृध्यमर्थमवाप्स्यसि ॥ ५५ ॥

अ०म० आदृत्यइत्यादि। तेन संगतः सन् गृध्यमभिलषणीयमवाप्स्यसि ऋदुपधादिति क्यप् कीदृश: कीदृशेनेत्याह.आदृत्य: आदरणीय: वृत्येन वरणीयेन स्तुत्य: स्तवार्ह: जुष्येण सेव्येन हनुमत्प्रभृतीनां कइव शिष्येण गुरुरिव यथोपाध्याय: शिष्येणैकार्थ: अनुगम्यस्तद्वदिति एतिस्तुशास्वित्यादिना क्यप् ह्रस्वान्तात्तुक् ॥ ५५ ॥

भ० आदृत्येत्यादि। न केवलं रिपुहननमन्यदप्यस्तीत्याह तेन शिष्येणेव गुरुरिव त्वं सङ्गतः सन् गृध्यमाकाङ्क्षणीयमर्थमवाप्स्यसि त्वं कीदृशस्तेन वा कीदृशेन आदृत्यआदरणीयः वृत्येन वर

ग्रीवेण स्तुत्यः स्तवार्हः जुष्येण सेवार्हेण जनानामर्थात् तेन तुभ्य मोरुभयोः सङ्गतं योग्यं इत्यः अनुगन्तव्यः अर्थान्तेन भवतोगुरुत्वेन तस्य शिष्यत्वेन मैत्रीकरणेऽपि न ते मानहानिरिति सूचितं इङ्गादरे वृञ्वृतौ ष्टुञ्स्तुतौ शङ्कोञ्जिजुषमुद्दिशेवे इणगतौ शासुञ्ज्ञासने गृधिर्युलिपे एभ्योऽद्भृजुषेत्यादिना क्यप् स्तस्य तन्पिति॥ ५५॥

नाखेयः सागरोऽप्यन्यस्तस्य सङ्गृत्यशालिनः। मन्युस्तस्य त्वया मार्ग्योमृज्यः शोकस्य तेन ते॥ ५६॥

नाखेयइत्यादि। तस्य सुग्रीवस्य सङ्गृत्यशालिनः हनुमदादिभृत्ययुक्तस्य भृञोऽसंज्ञायामिति क्यप् अन्योद्वितीयः सागरोऽपि नाखेयोन खननीयः अपितु खननीयएव अपिशब्दः सम्भावनायां तस्य कारणं सङ्गृत्यशालित्वं ईचखनइति कवोकारो तस्य शरीरस्य मन्युस्त्वया मार्ग्योऽपनेयः ते तव तेन च शोकोमृज्यः मृजेर्विभाषेति यद्विकल्पे ण्यत्॥ ५६॥ ज॰म॰

नाखेयइत्यादि। हनूमदादिसङ्गृत्यशालिनस्तस्य सुग्रीवस्य अन्योऽपि सागरोन अखेयः अपि तु शक्यखननएव एतेन तन्मैत्रं वङ्गसहायत्वं समुद्रलङ्घनमपि सुकरमिति सूचितं खनुङ्विदारे खनाखेरेचे इति ट्टेरेत्वं तस्मात् प्रथमं त्वया तस्य मन्युर्दैन्यं मार्ग्योमार्ज्जनीयः पश्चात्तव शोकस्तेन मृज्यः अपनेयः एतेन सख्यः कथं वियोगश्चेत्यत्रोत्तरं दत्तं सुग्रीवेणाचिरादेव वियोगा भ॰

पनयात् अपिशब्दः सम्भावनयां मृजलूषशङ्कौ छवृषमृजेति वा क्यप् पक्षे ऋहलोर्ण्यदिति ण्यत् चजोःकगौ घितीति गत्वं मृजो ऽकङितीति वृद्धिः ॥ ५६ ॥

सराजसूययाजीव तेजसा सूर्य्यसन्निभः । अमृषोद्यं वदन् रुच्योजगाहे द्यां निशाचरः ॥ ५७ ॥

ज०म० सइत्यादि। सनिशाचरोद्यामाकाशं जगाहे गतः राजसूययाजीव राज्ञा सूयते राजा वा अनेन सूतइति राजसूयः क्रतुः तेनेष्टवान् सराजसूययाजी करणे यजइति णिनिः तद्वदित्यर्थः रुच्यः प्रियोजातोरामस्येत्यर्थात् राजसूयइत्यादिना क्यबन्ताः राजसूयादयः ॥ ५७ ॥

भ० सराजेत्यादि। इत्येवममृषोद्यं सत्यवचनं वदन् सनिशाचरोयोजनवाऽऽद्यां स्वर्गं आकाशं वा जगाहे गतः राजसूयनाम यज्ञकर्त्तेव तेजसा सूर्य्यतुल्यः रुच्यः रामस्य रुचिविषयः प्रिय इति यावत् सुजनसम्भाषणेऽपीडामन्ये राज्ञा सूयते सोमोऽत्रेति राजसूयः पाय्यधाय्येत्यादिना निपातितः राजसूयेन यजते राजसूययाजी यज्ञादित्वात् णिन् सरतीति सूर्य्योऽर्कः रोचते रुच्यः एतौ गुप्यविनीयेत्यादिना निपातितौ सूरएव सूर्य्यः स्वार्थयइति गोयीचन्द्रः नञ्पूर्व्वमृषाशब्दाद्वदेर्नित्यं क्यप् मृषोद्यं नित्यमित्युक्तेः ॥ ५७ ॥

अकृष्टपच्याः पश्यन्तौ ततोदाशरथी लताः। रत्ना
न्नपानकुप्यानामाटतुर्नष्टसंस्मृती ॥ ५८॥

अकृष्टपच्या इत्यादि। ततोनिशाचरगमनानन्तरं दाशरथी रामलक्ष्मणावाटतुर्गतवन्तौ कीदृशौ नष्टा संस्मृतिर्ययाः केषां संस्मृतिः रत्नान्नपानकुप्यानां रत्नान्नपानानि प्रसिद्धानि कुप्यं स्वर्णरजताभ्यामन्यत् वस्तु तत् क्यप् गकारस्य ककारः कर्म्मणि षष्ठी लताः पश्यन्तौ कृष्टे पच्यन्तेइति कृष्टपच्याः पूर्व्ववत् क्यप् पश्चान्नञ्समासः स्वयमेव पच्यन्ते यास्ताइत्यर्थः ॥ ५८॥ जं०म०

अकृष्टेत्यादि। ततस्तद्गमनानन्तरं लताः पश्यन्तौ दाशरथी रामलक्ष्मणौ आटतुः अटगतौ लताः कीदृशीः अकृष्टपच्याः कृष्टे क्षेत्रे स्वयमेव पच्यन्तइति कृष्टपच्याः पूर्व्वेण निपातः पश्चान्नञ्समासः कीदृशौ रत्नानां अन्नस्य पानस्य कुप्यानां ताम्रादीनाञ्च नष्टा सम्यक् स्मृतिर्ययोः गुणभूतापि क्रिया साधनसम्बन्धमनुभवतीति कर्म्मणि षष्ठी सम्बन्धविवक्षयेत्यन्ये कुप्यतइति कुप्यं स्वर्णरूप्याभ्यामन्यद्धनं पूर्व्ववन्निपातः ॥ ५८ ॥ भ०

समुत्तरन्तावव्यथौ नदान् भिद्योद्ध्यसन्निभान्।
सिध्यतारामिव ख्यातां शवरीमापतुर्व्वने ॥ ५९ ॥

समुत्तरन्तावित्यादि। तौ तस्मिन् वने शवरीमापतुः प्राप्तवन्तौ अव्यथौ न व्यथेते इति पूर्व्ववत् क्यप् परिश्रमवर्जितावित्यर्थः जं०म०

नदान् समुत्तरन्तौ कीदृशान् भिद्योद्ध्यसन्निभान् भिद्योद्ध्यौ नदवि शेषौ भिद्योद्ध्याविति पूर्व्ववत् निपातितं भिनत्ति कूलमिति भिद्यः उज्झत्युदकमिति उद्ध्यः उदृज्झउत्सर्गे दकारात्परस्य धकारो निपात्यते तत्सदृशान् नदान् सिध्यतारामिव ख्यातां सिध्यन्त्यस्मि न्निति सिध्यः पुष्यसिध्यौनक्षत्रे इति निपातनात् पुष्याख्यां तारा मिव ख्यातां शवरीं॥ ५८॥

भ० समुत्तरन्तावित्यादि। तौ वने शवरीमापतुः प्राप्तवन्तौ न व्यथेते अव्यथौ नदान् समुत्तरन्तौ कीदृशान् भिद्योद्धसन्निभान् कूलं भिनत्तीति भिद्योनदः वार्य्युज्झतीति उद्ध्योनदः तयोस्तु ल्यान् शवरीं कीदृशीं सिध्यतारामिव कार्य्यसाधकत्वात् ख्यातां प्रसिद्धानुभवां कार्य्यं साधयतीति सिध्या सर्व्वत्र शृङ्खविनीयेत्या दिना निपातः॥ ५८॥

वसानां वल्कले शुद्धे विपूयैः कृतमेखलां। श्यामा मञ्जनपिण्डाभां दण्डिनीमजिनास्तरां॥ ६०॥

ज०म० वसानामित्यादि। वसानां परिदधानां वल्कले विपूयैर्मुञ्जैः कृतमेखलां कृतकटिसूत्रां यद्यपि विपूर्व्वस्य पवतेर्विपूयइत्यादि ना मुञ्जे निपातितं तथापि मुञ्जानामनुपहतत्वं ज्ञापयितुं विपू यैरिति विशेषणं पवित्रैरित्यर्थः मुञ्जशब्दस्तदानीं सामान्यमाह विपूयैरित्युक्ते मुञ्जैरित्युपादानमनर्थकं एवं कृत्वा पाठान्तरमु च्यते वसानां वल्कले शुद्धे विपूयैरिति श्यामां कृष्णां श्यायोम इति निष्ठामत्वं अंजनपिण्डस्येवाभा यस्याअस्तीति तां कृष्णां

दण्डिनीं गृहीतदण्डां आसीर्यतइति आस्तरः चदोरप् अजि
नमास्तरउत्तरासंगोयस्यास्तामजिनास्तरां ॥ ६० ॥

वसानामित्यादि। इष्ट्वा तामनुचद्रामइति तृतीयश्लोकेनान्व भ०
यः शुद्धं वल्कलद्वयं वसानां वसलङ्कृतौ स्तृतिराछादनं विपू
यैर्मुञ्जैः कृतमेखलां कृतकटीसूत्रां पूज्यबोधे पूर्व्वनिपातः शुद्धे
इत्यत्र मुञ्जैरिति पाठे विपूयैरित्यस्य पवित्रैरित्यर्थः यद्यपि
विपूयशब्दो मुञ्जे रूढस्तथाप्यन्वयवशात् पवित्रार्थः चामां श्रतेन
चीणां शैशुप्यचोमकवद्दति कस्य मः अञ्जनपिण्डवदाभा यस्या
स्तां तद्वदाभातीति वा दण्डिनीं पालाशदण्डवतीं अजिनमा
स्तरः शयनी यस्याः आस्तरउत्तरासङ्गइति केचित् ॥ ६० ॥

प्रगृह्यपदवत् साध्वीं स्पष्टरूपामविक्रियां। अगृह्यां
वीतकामत्वाद्देवगृह्यामनिन्दितां ॥ ६१ ॥

प्रगृह्येत्यादि। अविक्रियामजातविकारां अतएव स्पष्टरूपां ज०म०
एवञ्च साध्वीं साधुचरितां कमिव प्रगृह्यपदवत् यस्य पदस्य प्रगृ
ह्यसंज्ञा तत्पदं प्रगृह्यं प्रत्यपिभ्यांग्रहेरित्यनुवृत्तौ पदास्वैरि
त्यादिना प्रपूर्व्वाद्ग्रहेः पदेऽभिधेये क्यप् यथा तत्पदमविकाररू
पत्वात् स्पष्टं साधु च अतप्रगृह्याअचीति प्रकृतिभावेन स्वरसन्ध्य
भावादित्यर्थः कथमजातविक्रियेति चेदाह अगृह्यां ग्रहेः स्वैरवि
षये क्यप् अगृह्यामस्वैरिणीमस्वतन्त्रा न भवतीत्यर्थः कस्मात् वी
तरागत्वात् वीतरागाप्यस्वतन्त्रा भवति देवगृह्याममरपक्षां
पक्षविषये क्यप् एवं चानिन्दितामगर्हितां ॥ ६१ ॥

भ० प्रगृह्येत्यादि। नास्ति विक्रिया रागादिविकारो यस्यास्ताम विक्रियां स्पष्टं अकौटिल्यं व्यक्तं रूपं स्वभावो यस्यास्तां स्पष्टरूपां साध्वीं साधुचरितां अतएव प्रगृह्यपदतुल्यां यत्र नाजोऽन्तोऽना ङ्गिसुपेत्यादिना सन्धिनिषेधः क्रियते तत्र पाणिनिना प्रगृह्यसंज्ञा कृता गृह्यविनीयेत्यादिना पदादौ गृह्यं निपातितं पदादिविष यस्तूदाहरणेऽभिहितः तथाहि प्रगृह्यं पदमित्यादि तदपि पदं विकाररहितं अतएव स्पष्टरूपं दीर्घादिविकारे सत्येव रूप स्यान्यथाभावात् साधु च भवति अर्थप्रतिपादकत्वं धर्म्मजनकत्वं व्याकरणव्युत्पाद्यत्वं वा पदस्य साधुत्वं अविक्रियत्वे हेतुमाह अ गृह्यां स्वतन्त्रां विगतकामत्वात् सरागा हि भोगार्थं परतन्त्रा भवति गृह्या परतन्त्रा पश्चान्नञ्समासः देवगृह्यां देववर्ग्यां देव पक्षपातिनीं अतएवानिन्दितां वीतकामत्वादित्यत्र पूर्व्वं स्त्रीत्वा विवक्षया त्वप्रत्ययः स्त्रीत्वविवक्षा चेत् पुंवत्स्युक्तइति पुम्बद्भावः ॥ ६१ ॥

धर्म्मकृत्यरतां नित्यमवृष्यफलभोजनां। दृष्ट्वा ताम मुचद्रामो युग्यायातइव श्रमं ॥ ६२ ॥

ज०म० धर्म्मकृत्यरतामित्यादि। पुण्यकर्म्मरतां नित्यं अवृष्यफलभोज नां वृष्याणीन्द्रियविकारनिमित्तानि फलानि भोजनं यस्याः पश्चा न्नञ्समासः विभाषाकृवृषोरिति क्यप् दृष्ट्वा तां तथाविधां श्रम ममुचत् मुक्तवान् तद्दर्शनाह्लादितत्वात् युग्यायातइव वाहनं प्राप्त इव क्यप् युग्यञ्च पत्रइति निपातितं ॥ ६२ ॥

धर्म्मेत्यादि। नित्यमविरतं धर्म्मस्य कृत्ये करणे रतां वृष्यं वैद्यशास्त्रोक्तवीर्य्यकरं विकारोत्पादकं तद्भिन्नं फलमेव भोजनं यस्याः भुज्यतेऽनेनेति वेति घञ्जलनटोऽघेइति अनट् तेन भोजनं यस्याइति वा कृञ्जुदकृतौ वृषुसेचने आभ्यां कृवृषमृजेत्यादिना वा क्यप् एवम्भूतां तां शवरीं दृष्ट्वा चित्तप्रसन्नतया रामः श्रमम मुचत् त्यक्तवान् मुञ्चमपञ्जोमोचे लृदित्वात् ङः युग्येन वाहने नाम्वादिना आगतइव गृह्यविनीयेत्यादिना युजः क्यपि युग्यं निपातितं ॥ ६२ ॥ भ०

सतामूचेऽथ कच्चित्त्वममावास्यासमुन्नये। पितृणां कुरुषे कार्य्यमवाच्यैः स्वादुभिः फलैः ॥ ६३ ॥

सइत्यादि। अथानन्तरं त्यक्तश्रमः सरामस्तां शवरीमूचे उक्तवान् कच्चित् किं त्वं अमावास्यायाः संप्राप्तौ पितृणां कार्य्यं तत्त्वोत्यर्थं ब्राह्मणभोजनं स्वादुभिर्मिष्टैः फलैः अवाच्यैरवचनीयैः कुरुषे अमा सह वसतोऽस्यां चन्द्रार्काविति अमापूर्व्वकवसधातोः क्यप् ॥ ६३ ॥ ज०भ०

सतामित्यादि। अथ श्रमत्यागानन्तरं सरामस्तां शवरीं ऊचे कथितवान् ब्रुलञ्उक्तौ वचोऽरे कच्चिदिति कामप्रवेदनेऽव्ययं त्वं फलैरमावास्यायास्तिथेः समुन्नये सम्प्राप्तौ पितृणां सम्बन्धि कार्य्यं कुरुषे कीदृशैः फलैः अवाच्यैः अनिन्द्यैः स्वादुभिर्मिष्टैः अमा सहार्थेऽव्ययं सहवसतोऽस्यां चन्द्रार्कावित्यमावास्या यदा भ०

अमा नाम रवेरश्मिः सूर्य्यलोके प्रतिष्ठिता। तस्यां सोमोवसत्यस्मा ममावास्या प्रकीर्त्तिता। पाय्यधाय्येत्यादिना ण्यति निपातः ऋदृ पसृजेत्यस्याप्रवृत्तिपक्षे ऋजोहल्ध्यासोरिति ण्यत् वाच्यं वचनीयं नित्यमेव रूढं भुजवचेति ण्यति कत्वनिषेधः॥ ६३॥

अवश्यपाव्यं पवसे कच्चित्त्वं देवभाग्धविः। आसाव्यमध्वरे सोमं द्विजैः कच्चिन्नमस्यसि॥ ६४॥

ज०म० अवश्यपाव्यमित्यादि। देवभाक् देवान् भजतइति भजोण्विः तद्धविः कच्चित् किं पवसे पवित्रीकरोषि मन्त्रादिना झयोहोऽन्यतरस्यामिति हकारस्य पूर्व्वसवर्णः पूञ्पवनइति भौवादिकः कीदृशमवश्यपाव्यमवश्यभावेन पावयितव्यमित्यर्थः ओरावश्यके ण्यत् मयूरव्यंसकादित्वात्समासः लुम्पेदवश्यमः कृत्येतुंकाममनसोरपीति मकारलोपः सोममौषधिविशेषं आसाव्यमभिषवार्हं अध्वरे यज्ञे द्विजैः सह कच्चित्त्वं नमस्यसि आसुयुवपीति ण्यत्॥ ६४॥

भ० अवेत्यादि। कच्चित्त्वं देवभाग्धविर्द्रव्यं पवसे अग्निसंस्कारादिना पवित्रीकरोषि देवाय दातुमित्यर्थात् देवान् भजतइति ढाक्ष्म वहश्चेत्यादिना भजोण्विः हस्य घत्वं ष्टुत्वं वा कीदृशं अवश्यपाव्यं अवश्यभावेन पवितुं पवित्रीकर्त्तुं योग्यं पूङ्गौधेय्योरावश्यक इति ण्यत् अचोञ्णितीति वृद्धिः ओदौतोऽन्तत्वादयसंज्ञा इति अय्भावात् अवाय्यवायावइति आवादेशः क्रियाविशेषणस्य द्वितीयान्तत्वात् तत्पुरुषः समासः चादित्वान्नपूर्व्वदानांच

संज्ञा इति सामान्योक्तेः मयूरव्यंसकादित्वात् समास इति न्यासः
सम् तुम्‌मनःकामेऽवश्यमित्यादिना मलोपः कच्चित् त्वं द्विजैः
सार्द्धं सोमं लताविशेषं नमस्यसि नमःकरोषीति नमस्तपोवरिव
इति क्यः सोमं किम्भूतं अध्वरे यागे आसाव्यं अभिषवनीयं सन्धा
नाईं इत्यृव्यासोरिति ण्यण् द्विजैरासाव्यमिति वान्वयः॥ ६४॥

आचाम्यं सन्ध्ययोः कच्चित् सम्यक्तेन प्रहीयते।
कच्चिदग्निमिवानाय्यं काले संमन्यसेऽतिथिं॥ ६५॥

आचाम्यमित्यादि। प्रभातेऽपराह्ने च सन्ध्ययोर्यदाचाम्य जःम॰
मुपस्पर्शनं पूर्ववत् ण्यत् कच्चित्सम्यक् यथावत्तव तत्र न प्रहीयते
काले आतिथ्योक्तकाले कच्चित् संमन्यसे पूजयसि यथा अग्निं आना
य्यम् मन्यसे तद्वत् आनाय्योनित्य इति नयतेराङ्पूर्व्वस्य ण्यत्
अयादेशौ निपात्येते॥ ६५॥

आचाम्यमित्यादि। कच्चित्ते तव सायं प्रातःसन्ध्ययोः सम्यगा भ॰
चाम्यं आचमनं स्वयमेव न प्रहीयते न भ्रश्यते कर्म्मकर्त्तरि प्रत्य
यः पूशकसहेत्यादौ चमादिवर्ज्जात् इसन्तादृण् जमवधः
सेमइत्यादौ आचमवर्ज्जनात्र हृस्वः कच्चित् त्वं काले आतिथ्यो
चिते अतिथिं सम्मन्यसे पूजयसि यथा आनाय्यमग्निं दक्षिणाग्निं
सम्मन्यसे तद्वत् आङ्पूर्व्वस्य णीञोण्यपि पाय्यधाय्येत्यादिना
निपातः॥ ६५॥

न प्रणाय्योजनः कच्चिन्निकाय्यं तेऽधितिष्ठति। देव कार्य्यविघाताय धर्म्मद्रोही महोदये॥ ६६॥

ज॰म॰ नप्रणाय्यइत्यादि। महानुदयः स्वर्गापवर्गाणां यस्याः सा तथा हे महोदये देवकार्य्यविघाताय देवानहं हनिष्यामीति भाववचनाच्चेति भविष्यति घञ् तुमर्थाच्चभाववचनादिति चतुर्थी प्रणाय्योऽसम्मतोजनः प्रणाय्योऽसम्मताविति निपातितं कच्चित् निकाय्यं गृहं ते तव नाधितिष्ठते नाधिवसति पाय्येत्यादिना निवासे चिनोते र्निपूर्व्वात् ण्यदायादेश्च आदेः कुत्वञ्च अधिशीङ्स्थासांकर्म्मेति कर्म्म धर्म्मद्रोही धर्म्मद्रोहशीलः॥ ६६॥

भ॰ नेत्यादि। हे महोदये कच्चित् प्रणाय्योऽसम्मतोजनश्चौरादिस्ते तव निकाय्यं निवासं देवकार्य्यविघातार्थं नाधितिष्ठति धर्म्मद्रोही धर्म्मद्रोहशीलः धर्म्माय द्रुह्यतीति ग्रहादिलाणिन् धर्म्मद्रोहोऽस्यास्तीति वा प्रपूर्व्वणीञोण्यणि प्रणाय्यः निपूर्व्वचिनोतेर्ण्यणि निकाय्यः द्वौ पूर्व्वेण निपात्येते कर्म्मक्रियेत्यादिना निकाय्यस्याधारत्वे कर्म्मत्वं महानुदयः स्वर्गापवर्गफललक्षणन्तत्त्वज्ञानमेव वा यस्यास्तस्याः सम्बोधनं महोदयः कान्यकुब्जेस्वाधिपत्यापवर्गयोरिति विश्वदर्शनात् ततोऽर्शआदित्वादद्इत्यन्ये विघातायेति हनो घञि स्वेर्हाघोञ्णितीति चेति घः हनस्तङ्॥ ६६॥

कुण्डपाय्यवतां कच्चिदग्निचित्यावतां तथा। कथा भीरमसे नित्यमुपचाय्यवतां शुभे॥ ६७॥

इति कृत्याः।

कुण्डपाय्यवतामित्यादि। कुण्डेन पीयते ऽत्र क्रतौ कुण्डपाय्यः क्रतुः क्रतौ कुण्डपाय्यसंचाय्याविति निपातितं कश्चित्कथाभीरमसे ङ्यापोरिति दीर्घः तथाग्निचित्यावतां आहिताग्निकानां कथाभी रमसे चित्याग्निचित्ये चेति निपात्यते ऽग्निचयनमग्निचित्या भावे क्यप् तुक् तद्वतां तथोपचाय्यवतां उपचीयते इत्युपचाय्यो ऽग्निः अग्नौ परिचाय्येति निपातितः उपपूर्व्वाच्चिनोतेर्ण्यदायादेशौ तद्वतां कथाभीरमसे शुभे कल्याणि। इति कृत्याधिकारः ॥६७॥

कुण्डेत्यादि। हे शुभे कल्याणि कश्चित् त्वं कुण्डपाय्यवतां तथा अग्निचित्यावतां तथा उपचाय्यवतां कथाभिर्नित्यं रमसे क्रतुषि कुण्डैः पीयते ऽत्र सोम इति कुण्डपाय्यः क्रतुविशेषः पाय्यधाय्ये त्यादिना निपातः सचियते येषां इति सोपपदप्रपदतः अग्नेश्चयनं राशीभाव इत्यग्निचित्या पूर्व्ववन्निपातः उपचीयत इत्युपचाय्यो ऽग्निः पूर्व्ववन्निपातः अग्निविशेषेण यत्नविशेषेपाक्तं। इति कृत्याः ॥६७॥

## अथ प्रकीर्णकाः।

वर्द्धते ते तपोभीरु व्यजेष्ठाविघ्ननायकान्। अजै षीः कामसंमोहौ संप्राण्याविनयेन वा ॥६८॥

अतःपरं प्रकीर्णकाः। वर्द्धत इत्यादि हे भीरु कातरचित्ते तव तपो वर्द्धते तस्य च ये विघ्नास्तेषां ये नायकाः प्रणेतारस्तान्

ज॰म॰ व्यजेष्ठाः जितवत्यसि लुङि विपराभ्यांजेरित्यात्मनेपदं कामसम्मोहौ कच्चिदजैषीः जितवत्यसि सिचि वृद्धिः विनयेन वा संप्राप्थाः संप्राप्तासि कर्म्मणि लुङ् झलोझलीति सिचोलोपः अत्रानुक्तमिति कच्चिदिति ग्राह्यं॥ ६८॥

अथ प्रकीर्णकाः।

भ॰ वर्द्धतइत्यादि कच्चिदित्यत्रानुषञ्जनीयं हे भीरु कच्चित्ते तव तपोवर्द्धते कच्चित् त्वं तपसो विघ्नानां नायकान् प्रणेतॄन् व्यजेष्ठा अभिभूतवत्यसि विपराजीति मं कच्चित् त्वं काममनङ्गविकारं सम्मोहमविद्याञ्च अजैषीः अजवर्द्धति सिः कच्चिद्विनयेनापि त्वं समाप्थाः समाप्तासि कर्म्मणि ठी सम्बोधनमहिम्नार्थावगमात् कच्चिदित्यस्यानुषङ्गं केचिन्नेच्छन्ति॥ ६८॥

नायस्यसि तपस्यन्ती गुरून् सम्यगतूतुषः। यमान्नोदविजिष्ठास्त्वं निजाय तपसेऽतुषः॥ ६९॥

ज॰म॰ नायस्यसीत्यादि। तपस्यन्ती तपश्चरन्ती कच्चिन्नायस्यसि न खिद्यसे तपश्चरणशालीभूतेत्यर्थः कर्म्मणोरोमन्थेति क्यङ् तपसः परस्मैपदञ्च गुरून् आचार्य्यादीन् सम्यक् यथावदनुवृत्त्याऽतूतुषः तोषितवत्यसि तुषेर्ण्यन्तस्य लुङि रूपं चङि णिलोपादि यमान्मृत्योर्नोदविजिष्ठाः नाभैषीः पुण्यकृतां नोमृत्युभयमित्यर्थः ओविजेरात्मनेपदं लुङि सिचइट् विजइति सिचोङित्वेन गुणः निजायात्मीयाय अतुषः तुष्टवत्यसि॥ ६९॥

नायेत्यादि। अत्रापि कच्चिदनुषज्यते तपस्विनी तपःकुर्व्वती भ० त्वं कच्चिन्नायस्यसि न खिद्यसे अत्यन्ताभ्यासात् नमस्तपोवरि षदति क्यः इयंस्तुयतने कच्चित्त्वं गुरूनाचार्य्यादीन् सम्यगध्युष तोषितवत्यसि तुषिल्लवौजितुष्टा च्यन्तादङ् च्यध्युङःस्वःसेः सन्वदिति खेर्घः कच्चित्त्वं यमात्र उदविजिष्ठाः नाभैषीः पुण्यवतां मृत्योर्भयं नास्तीति भावः यमदन्द्रियनिग्रहे वा कियत्कालं यमः कार्य्यदति भयं दूरीभूतमित्यर्थः विजकोशोभीकर्म्म विजेर्नुर्नैमी त्यगुणत्वं कच्चित्त्वं निजाय स्वकीयाय तपसे अतुषः तुष्टासि श्रद्धावती अभिद्धित्वंश्रद्धाभून्या वासीत्यर्थः पुषादित्वात् ङः ॥ ६९ ॥

अथार्घ्यं मधुपर्काद्यमुपनीयादरादसौ। अर्चयि त्वा फलैरर्चौ सर्व्वत्राख्यदनामयं ॥ ७० ॥

इति प्रकीर्णकाः।

अथेत्यादि। अथानंतरमसौ शवरी अर्घ्यमर्घार्थं पादार्घाभ्या ज०म० चति यत् मधुपर्काद्यं मधुपर्कमिश्रमुदकं मधुपर्कः तदाद्यं आदौ भवमाद्यं तदुपनीयादरात् फलैरर्चयित्वा अर्चौ अर्चनार्हौ एतत् रामलक्ष्मणौ सर्व्वलोकेषु अनामयं कल्याणं आख्यत्कथितवती अस्तीत्यङ्। इति प्रकीर्णकाः ॥ ७० ॥

अथेत्यादि। एवं प्रश्नानन्तरं असौ शवरी मधुपर्केणाढ्यं भ० सहितं अर्घ्यमुपनीय अर्चौ अर्चार्हौ रामलक्ष्मणौ फलैरादरात् अर्चयित्वा सर्व्वत्र पूर्व्वपृष्टेष्वर्थेषु अनामयं कुशलं आख्यत उक्त

वती वत्सस्यत्वेति ङः मूर्त्ती पूजाविधायकं अर्घशब्दात्तदर्थे विका रसंघेति यः मधुपर्काद्यमिति पाठे आदौ भवमाद्यः मधुपर्कस्या द्यायत्यर्घविशेषणं यद्वा आदिरेवाद्यः अर्घ्यमधुपर्कादि पूजो पहारस्वीपनीयेत्यर्थः आमयशब्दोलक्षणया अनिष्टमात्रे प्रयु ज्यते। इति प्रकीर्णकाः॥ ७०॥

## अतःपरं कृदधिकारः।

सख्यस्य तव सुग्रीवः कारकः कपिनन्दनः। द्रुतं द्रष्टासि मैथिल्याः सैवमुक्त्वातिरोऽभवत्॥ ७१॥

ज०म० अथ कृदधिकारमाह। कृत्यानां तदन्तर्भावेऽपि भावकर्म णोःकृत्यादिति विशेषप्रतिपादनार्थः पृथगधिकारः तत्रोपपदं सप्तमोस्थमित्यादिना एतदप्यधिक्रियते तान् इतोदर्शयन्नाह सख्यस्येत्यादि सा शबरी तिरोऽभवदन्तर्भूता एवमुक्त्वा किं तदि त्याह तव सख्यस्य सखित्वस्य सख्युर्यः कर्मषष्ठी कारकः सुग्रीवः सुकण्ठवानिति सुष्ठु त्वया सह मैत्रीं करिष्यति कपिनन्दनः कपी नां नन्दयिता नन्द्यादिभ्योल्युः कृद्योगे षष्ठी भवतीति कर्मणि षष्ट् ॥ ७१॥

भ० अथ कृदधिकारः। यद्यपि कृत्यानां कृत्त्वमस्ति तथापि भाव कर्मणोस्तद्विधानमिति ज्ञापनाय पृथक् प्रदर्श्य कर्त्तरि कृत्वानाह तत्र निरुपपदसोपपदयोर्निरुपपदं प्रयोगबाहुल्यादादौ दर्श यति सख्यस्येत्यादि। सा शबरी एवमुक्त्वा तिरोऽभवत् अन्त

हिंता किमादित्याह सुग्रीवस्तव सख्यस्य कारकः सख्यं करिष्यति सख्युर्भावः कर्म्म वा सख्यं विकारसंघेति यः हृषेकतीत्यादिना कर्म्मणि षष्ठी कपीनां नन्दयिता कपेः पुत्रोवा ग्रहनन्दिपचादेरिति ग्रनः ततोद्रुतं मैथिल्याद्रष्टाऽसि प्रेक्षकोभविष्यसि ग्रस्तेर्भविष्यत्सामीप्ये क्तौ ग्रभिधानात् ग्रसीति युष्मदर्थे ग्रव्ययमिति वा हृषकोघे इत्यादिषु कालस्यानिर्द्देशात् त्रिष्वपि कालेषु हृणादयोभवन्तीति बोध्यं हृशेर्वद्गेऽकिदिति रः॥ ७१॥

नन्दनानि मुनीन्द्राणां रमणानि वनौकसां। वनानि भेजतुर्व्वीरौ ततः पाम्पानि राघवौ॥ ७२॥

नन्दनानीत्यादि। ततस्तस्मादनन्तरं वीरौ राघवौ रामलक्ष्मणौ वनानि भेजतुः सेवितवन्तौ एत्वाभ्यासलोपौ हृफलेत्यादिना पाम्पानीति पम्पाया ग्रदूरं ग्रदूरभवश्चेत्यण् मुनीन्द्राणां नन्दनानि प्रमोदकारीणि वनौकसां वनेचराणां उच्समवाये ग्रस्मादौणादिकोऽसुम् पृषादरादित्वाद्वर्णविपर्य्ययः तेषां रमणानि रतिजनकानि नन्द्यादित्वात् ल्युः कर्म्मणि षष्ठो॥ ७२॥ ज॰म

नन्दनानीत्यादि। ततोऽनन्तरं राघवौ पाम्पानि वनानि भेजतुः सेवितवन्तो जग्मतुरित्यर्थः भजञोभागसेवयोः तृफलभजत्रपेति ग्रतएत्वं द्विलोपश्च पम्पानामसरःसम्बन्धीनि पम्पाया ग्रदूरभवानीत्यर्थे वा विकारसंघेत्यादिना ष्णः मुनीन्द्राणां नन्दनानि प्रमोदकानि वनौकसां वनवासिनां रमणानि क्रीडाजनकानि उभयत्र ग्रहनन्दिपचादेरिति ल्युः कर्म्मणि षष्ठी॥ ७२॥ भ॰

भृङ्गालीकोकिलक्रुङ्भिर्व्वाशनैः पश्य लक्ष्मण। रोच नैर्भूषितां पम्पामस्माकं हृदयाविधं॥ ७३॥

जा०म० भृङ्गालीत्यादि। हे लक्ष्मण पम्पां पश्य अस्माकं हृदयाविधं हृदयं विध्यतीति ग्रहिज्यादिना संप्रसारणं नहिवृतीति दीर्घः भूषितां कैर्भृङ्गालीभिः भ्रमरपंक्तिभिः कोकिलैः क्रुङ्भिश्च वाशनैः कूजद्भी रोचनैः शोभनैः क्रुङिति ऋत्विगादिना क्विन् निपातनसामर्थ्याद नुनासिकलोपाभावः संयोगाद्य लोपः क्विन्प्रत्ययस्येति कुत्वं ॥ ७३॥

भ० भृङ्गेत्यादि। रामइत्युवाचेत्यर्थाद्गम्यते हे लक्ष्मण पम्पां पश्य कीदृशीं भृङ्गालीभिर्भ्रमरपङ्क्तिभिः कोकिलैः क्रुङ्भिः क्रौ चैश्च भूषितां क्रुञ्चगत्यां ऋत्विगादिना क्विप् चकारेत्त्वं क्विप् संशयनिवारणार्थं नतु अव्ययार्थमिति बोध्यं विविनिपाठइत्येके ऋत्विगादौ क्रुञ्चः पृथक्पाठात् प्राक्कङ् नोनुः ञपेञ्जमृनोरि ति ङस्यान्तस्य लुप् कीदृशैः वाशनैः कूजद्भिः वाशृङ्शब्दे रोचनैः शोभमानैः उभयत्र नन्द्यादिलादनः पुनः किम्भूतां अस्माकं हृद याविधं चेतः पीडयन्तीं हृदयं विध्यतीति क्विप् ग्रहस्वपाद्योरि ति जिः वीरुहोधङ्काविति दीर्घनिर्देशात् क्वचित् क्विबन्ते पूर्व्वप दस्य दीर्घत्वमिति दीर्घः आङ्पूर्व्वस्य रूपं वा॥ ७३॥

परिभावीनि ताराणां पश्य मन्थीनि चेतसां। उद्भा सीनि जलेजानि दुन्वन्त्यदयितं जनं॥ ७४॥

परिभावीनीत्यादि। जलेजानि पद्मानि पश्य तत्पुरुषे कृती त्यादिनाऽलुक् सप्तम्याः उद्भासीनि भासमानानि अतएव ताराणां परिभावीनि तिरस्कारीणि ततश्चेतसां मन्थीनि पीडाकारीणि अतोजनमदयितं प्रियारहितं दुन्वन्ति टुदुउपतापे स्वादिकः मन्थोद्भासपरिभूभ्यो ग्रहादित्वात्णिनिः॥ ७४॥ ज॰म॰

परीत्यादि। हे लक्ष्मण जलेजानि पद्मानि पश्य हनजनादिति डः सरसिजमित्युदाहरणेन क्वचित् समासे सप्तम्या अलुगिति सूचितं तत्पुरुषेकृतिवहुलं सप्तम्या अलुगिति परः कीदृशानि उद्भासीनि शोभमानानि अतएव ताराणां परिभावीनि तिरस्कारकाणि समानीत्यर्थोवा ढधेकृत्यश्चेति कर्म्मणि षष्ठी नोऽचोऽन्तरदुर्गेरित्यादौ भूवर्ज्जनात् न णत्वं किन्तु धुर्णोऽहान्त इत्यादिना समासाद्विहितेन स्वादिना सहितत्वात् विकल्पेन णत्वं नोऽचोऽन्तरित्यादिना उपसर्गमात्राश्रयस्यैव णत्वनिषेधात् अतएव चेतसां मन्थीनि पीडकानि सर्व्वत्र ग्रहादित्वाणिन् अतएव अदयितं प्रियारहितं मादृशं जनं दुन्वन्ति पीडयन्ति टुदुउपतापे श्नतरि स्वादित्वात् नुः॥ ७४॥ भ॰

सर्व्वत्र दयिताधीनं सुव्यक्तं रामणीयकं। येन जातं प्रियापाये कद्वदं हंसकोकिलं॥ ७५॥

सर्व्वत्रेत्यादि। हे लक्ष्मण सर्व्वत्र यत्किञ्चिद्रामणीयकं रमणीयस्य भावः योपधाद्गुरूपोत्तमाद्वुञ् तत्सर्व्वं दयिताधीनं दयितायत्तं अखण्ड ज॰म॰

चेत्यादिना खः सुव्यक्तं स्पष्टं कुतः येन प्रियायाअभावे सति हंसकोकिलं हंसाश्च कोकिलाश्चेति प्रकृतित्वात् द्वन्द्वैकत्वं कदर्द कुत्सितप्रलपितं वदतीति पचाद्यच् कुत्सितं वददति रथवदयोश्चेति कोः कत् दयितायां सत्यां मधुरप्रलपितमिदमिति ॥ ७५ ॥

भ॰ सर्व्वञ्चेत्यादि। हे लक्ष्मण रामणीयकं यत्किञ्चित् रमणीयत्वं तत्सर्व्वञ्च दयिताधीनं प्रियानिमित्तकमिति सुव्यक्तं स्पष्टमेव कथमित्याह येन हेतुना प्रियायाअपाये विरहे सति हंसकोकिलमपि कदर्द कुत्सितवादिजातं यदा सीतासीत्तदा मधुरालापीदमासीदिति भावः कुत्सितं वदतीति कत्कचत्रिरथवद इति कदादेशः रमणीयस्य भाव इति विकारसंघेति कण् हंसाश्च कोकिलाश्चेति समाहारद्वन्द्वः॥ ७५ ॥

पत्रिभिर्वितुदैर्यूनां शाखिभिः कुसुमोत्किरैः। अज्ञो येयस्य वा नास्ति प्रियाप्रज्ञोभवेन्न सः॥ ७६ ॥

ज॰म॰ पत्रिभिरित्यादि। तुदादिर्हिंसानादरयोरित्यस्मादिगुपधः कः यूनां वितुदैः हिंसकैः पत्रिभिः शाखिभिर्वृक्षैश्च श्रीखादिलादिभिः कुसुमोत्किरैः उत्किरन्तीत्युत्किराः पूर्व्ववत् कः कुसुमानामुत्किराः कर्तृयोगलक्षणां षष्ठीं विधाय समासः तैर्हेतुभूतैः करणभूतैर्वा सप्रज्ञोन भवेत् प्रकर्षेण ज्ञायते प्रज्ञः आतश्चोपसर्गेकः योऽज्ञः गुणदोषानभिज्ञः पूर्व्ववत्कः यस्य प्रियानास्ति तस्य प्रयोजनाभावः सर्व्वत्र विवेकित्वात् प्रीणातीति प्रियः इगुपधेति कः॥ ७६ ॥

पश्चिभिरित्यादि। पचिभिः शाखिभिश्च सएव जनः प्रम्लोम्ला भ०
निमान भवति योऽन्योऽज्ञोगुणदोषानभिज्ञोभवति यस्य वा आग
तोऽपि प्रियोजनोनास्ति सर्व्वत्र विरक्तत्वात् नत्वस्मद्विधोऽभिज्ञः
प्रियानुरक्तश्चेति भावः पचिभिः शाखिभिश्च कीदृशैः यूनामर्थाद्वि
रहिणां विद्दैर्हिंसकैः शाखिभिः कीदृशैः कुसुमोत्किरैः पुष्पवि
चेपकैः हृदुन्धिर्मादरेष पकाराद्धिंसायां कम्पविचेपे ग्रागत्वो
धने प्रीञ्प्रीतौ एभ्यः क्षगुप्राप्रीज्ञुकइति कः ढघेत्तलीति कर्म्मणि
षष्ठी प्रम्लायतीति प्रम्लः एचोऽघ्रित्याइत्यत्र ग्रमितीति विषय
सप्तमी ष्णजनादिति ङः॥ ७६॥

ध्वनीनामुद्गमैरेभिर्म्मधूनामुद्धयैर्भृशं। आजिघ्रैः
पुष्पगन्धानां पतङ्गैर्म्लपितावयं॥ ७७॥

ध्वनीनामित्यादि। पतङ्गैर्भ्रमरैर्म्लपिताः पीडितावयं ग्लाघा जं०म०
ग्नुवमांचेति मित्वात् ह्रस्वः पतेरङ्गच्पचिणीत्यौणादिकः ध्वनी
नामुद्गमैः ध्वनीन् कुर्व्वद्भिः ध्माधातोः पाघ्रेति शः पाघ्राध्मेति धमा
देशः मधूनामुद्धयैःमधूनि पुनःपुनः पिवद्भिः धेट्पानइत्यस्याया
देशः आजिघ्रैः पुष्पगन्धानां पुष्पगन्धान् गृह्णद्भिः पाघ्राध्मेति शः
कर्त्तृयोगलक्षणा षष्ठी॥ ७७॥

ध्वनीनामित्यादि। एभिः पतङ्गैर्व्वयं म्लपिताः पीडिताः विशे भ०
षेण मक्षिका भ्रमरैरिति गम्यते एभिरित्यङ्गुलीनिर्द्देशत्वेन वा
कीदृशैः ध्वनीनां गुञ्जितानां उद्धमैः कारकैः मधूनां उद्धयैः पा

ङ्कारिभिः पुष्पगन्धानां घ्राजिघ्रैः घङ्कारिभिः भृशमत्यर्थमिति सर्वत्र क्रियाविशेषणं भाशब्दाग्निपुतौ ध्वनौ अनेकार्थत्वादत्र करोत्यर्थः धेटपाने घ्राणगन्धोपादाने एभ्योधेटदृशपाघ्राध्मः शइति शित्वात् खादानपाघ्रेत्यादिना भाधम घ्राजिघ्र पतङ्गः पक्षिसूर्य्ययोः पतोगच्छतीति शङ्कुजडोरङ्गमइत्यादिना खे निपातः ध्मायतेर्ध्यन्तस्य ज्वलकुलकुलक्षेति वा णः॥ ७७॥

धारयैः कुसुमोर्म्मीणां पारयैर्व्वाधितुं जनान्। शाखिभिर्हा हताभूयोहृदयानामुदेजयैः॥ ७८॥

ज०म० धारयैरित्यादि। हा कष्टं शाखिभिर्द्दुमैर्भूयोऽत्यर्थं वयं हताः कामशराणां धारणात् तदेवाह कुसुमानां ये उर्म्मयः भङ्गाः प्रकाशावा तान् धारयद्भिः उर्म्मिस्तरङ्गे पीडायां वेगे सङ्गप्रकाशयोः। उत्कण्ठावस्त्रसंकोचवेधेषु च प्रकीर्त्तितइति विश्वः समूहेऽपीति अतएव जनान् मद्विधान् वाधितुं पारयद्भिः यतोहृदयानामुदेजयैरुत्कण्ठाजनकैरिति भावः धृञ्धारणे पृपालनपूरणयोः एजृकम्पने च एभ्योणिजन्तेभ्यः अनुपसर्गाल्लिम्पविन्देत्यादिना शः उदेजोति सूचे निर्देशात् अनुपसर्गादिति न निषेधः॥ ७८॥

भ० धारयैरित्यादि। हा कष्टं शाखिभिर्वृक्षैर्व्वयं भूयोऽत्यर्थं हताः कीदृशैः कुसुमानामुर्म्मयः प्रकाशाः संङ्गावा तेषां धारयैः धारकैः अतएव जनान् वाधितुं पीडयितुं पारयैः पारयद्भिः यतोहृदयानामुदेजयैः उत्कम्पकैः धृञवस्थितौ पृलिपालनपूर

णयोः हृस्वानोजुहोत्यादिः दीर्घान्तः क्रैयादिकस्य एणृकम्पे तत्पूर्व्वः एभ्यः प्रेरणन्यन्तेभ्यः साहिवातीत्यादिना ञः पारक्रतीरवत् इत्यस्य न ग्रहणं प्रेरणन्यन्तैः साहचर्य्यात् अगेरिति प्रतिषेधेऽपि उद्देनेः ञः कृत्तद्धितसमासानामभिधानं नियामकमित्युक्तेः उर्व्विस्तरङ्गे पीडायां वेगे सङ्गमकामयोः। उत्कण्ठावस्त्रसङ्कोचकोषयोरपि कीर्त्तितेति विश्वः समूहेति जयमङ्गला॥ ७८॥

दर्दैर्दुःखस्य माहम्या धायैरामोदमुत्तमं। लिम्पैरिव तनोर्व्वातैस्चेतयः स्याज्ज्वलोन कः॥ ७९॥

दर्दैरित्यादि। वातैर्दर्दैः दुःखस्य दुःखं ददद्भिः केभ्योमाहम्यः अस्माद्ग्रेभ्योविरहिभ्यः त्यदादिषुदृशइति क्विन् दृक्स्ववतुष्विित्याकारः धायैरामोदमुत्तमं आमोदं मिथाकङ्मैन हर्षं यावत् विरहिभ्योदत्तस्य दुःखस्य धायैः पोषकैरित्यर्थः उत्तममिति क्रियाविशेषणं उत्तममामोदं धायैः कुसुमानां परिमलं धारयद्भिरिति व्याख्याने अनित्यत्वात् कृद्योगे कर्मणष्ठभावः लिम्पैरिव तनोः शरीरं लिम्पद्भिरिव वातैर्हेतुभिः कोनाम विरहाग्निना चेतयमानः ज्वालाज्वलवग्निरिव न स्यात् किन्तु भवेदेवेति भावः दर्दैर्धायैरिति श्याद्व्यधेति आकारान्तलक्षणे शे प्राप्ते ददातिदधात्योरिति णपोभवतः शे आतोलोपः येतुयुक् लिम्पचेतयइति अनुपसर्गादिति शः ज्वलइति ज्वलिति कसन्तेभ्योणइति णस्य विकल्पपक्षाद्वच्॥ ७९॥

इद्दैरित्यादि। कस्येतयस्तेतनावान् जनोऽर्थादिरही वातै र्हेतुभिर्ज्वलेन स्यात् अग्निरिव न भवति वायुभिस्तेत:सम्पोपात् सर्व्वएव जनो दीप्तिमान् स्यादिति वा केवलं मद्विधानां विरहि णां कष्टमित्याह माहम्भ्योदु:खस्य इद्दैर्दाहभि: यत: उत्तममा मोदं पुष्पसम्बन्धिनं धार्यैर्धारयद्भि: क्वचिद्विशेषेऽपि सामान्य प्रवृत्तिरिति न्यायात् उघेह्रतीति कर्म्मणि षष्ठीं वाधिला कर्म्मणि चेत्यादिना द्वितीया तमोर्दैहस्य लिम्पैर्लेपकारिभिरिव इद दाने पचादिलादन् अहमिव ह्यते इति तद्वादिभवत्समाने त्यादिना कर्म्मणि क्विप् श्वेकांडुधाञ्जुधारणे पुष्टौ दायंग्रक लात् स्मवव्यधेन तनदावस्वरति न: यर्गञ्ज्ञिल्कृदिष्यात: त्रिलि पोग्रपञ्चलेपे साहिषातीत्यादिना ग्र: मुचादिलात् नुम् चितक कृण्णाने इत्यस्मात् अभिधानात् ग्र: घेटहग्रेत्यच योगविभाग इत्यन्ये साहिषातीत्यादौ चेतीति लिपिकरप्रमादात् पतितमि त्यन्ये अञ्जसञ्जनलिपो: दुणीभूञ्जसेत्यस्याप्रवृत्तिपचे पचा दिलादन् ॥ ७९ ॥

अवश्यायकणास्रावावास्राहमुक्ताफलत्विष:। कुर्व्व न्ति चित्तसंस्रावं चलत्पर्णाग्रसम्भृता: ॥ ८० ॥

अ०म० 　अवश्यायेत्यदि। अवश्यायतइत्यवश्याय: तस्य कणाविन्दव: आस्रवन्तीत्यास्रावा:चरन्त: श्याद्व्यधेति ण: कर्त्तरि तयोर्विशेषण समासे राजदन्तादिति परनिपात: ते कुर्व्वन्ति चित्तसंस्रावं संस्रव

तीति संस्नावः पूर्ववत्। चित्तं संस्नावं चलत्कुर्व्वन्ति इत्यर्थः पूर्व्ववत् समासपरनिपातौ कीदृशाः स्वलत्पर्णाग्रसंस्थिताः अतएव चारु मुक्ताफलत्विषः दर्शनीयमुक्ताफलानुकारिणः सीताहारस्यमुक्ताफलानि स्मारयन्तीत्यर्थः ॥ ८० ॥

अवेत्यादि। अवश्यायकणास्रावाश्चित्तसंस्रावं कुर्व्वन्ति अवश्यायस्य नीहारस्य कणाविन्दवः आस्रवन्तीति आस्रावाः कर्म्मधारये गमकत्वात् विशेषणस्यापि परनिपातः सुगतौ दुनीभूज्वलेत्यादिना पचे णः चित्तस्य तत् संस्रावं चलस्येति पूर्व्ववत् कीदृशाः चलतां पत्राणां अग्रेषु संभृताः चलन्तस्य ते पत्राग्रसंभृताश्चेति वा स्थूलीभूतागलिता इत्यर्थः अतएव चारुणः शोभनस्त्विट् दीप्तिर्येषु ते तथा सीताहारस्थितानि मुक्ताफलानि स्मारयन्त इत्यर्थः श्येङ्गतौ षङि यन्ङिन्कृदित्यातइति यन् ॥ ८० ॥ भ०

**अवसायोभविष्यामि दुःखस्यास्य कदा न्वहं। न जीवस्यावहारोमां करोति सुखिनं यमः ॥ ८१ ॥**

अवसायइत्यादि। कदा नु काले अहं दुःखस्यानुभूयमानस्य अवसायोऽन्तकरोभविष्यामि येन जीवस्यावहारोऽवहर्त्ता यमो मां सुखिनं न करोति मारयतीत्यर्थः अवस्यति इति अवसायः योऽन्तकर्म्मणि अवहरतीत्यवहारः श्याद्व्यधेति सर्व्वत्र णः युक् ॥ ८१ ॥ ज०म०

अवेत्यादि। नु प्रश्ने वितर्के वा कदा अहं अस्य दुःखस्य अवसायोऽन्तकरोभविष्यामि येन जीवस्यावहारोऽपकारको भूत्वा भ०

यद्यापि यमोमां दुःखिनं न करोति विना मरणं न दुःखमपगमि
ष्यतीत्यर्थः णीयनाशे इञ् इत्यां आभ्यामेवपूर्व्वाभ्यां अमव्यधेन
तनद्रावयमदृति अः॥ ८१॥

दूनोऽहं मधुनोलेहैर्दावैरुग्रैर्यथा गिरिः। नायः
कोऽत्र सयेन स्यां वताहं विगतज्वरः॥ ८२॥

ज॰म॰ दूनोहमित्यादि। मधुनोलेहैर्भृंगैः अहं दूनो ध्याद्राधेति णः
दावैर्वनाग्निभिरुग्रैः प्रचण्डैर्यथा गिरिर्दूयते तद्वत् अत्र कोनायः
नयतीति नायः उपायः ईप्सितप्रापकः उभयत्र दुन्योरिति णः
येन नायेन विगतज्वरः विगतपीडः स्यामिति आशंसायांलिङ्
वत खेदे॥ ८२॥

भ॰ दूनइत्यादि। मधुनोलेहैर्मधुलिहद्भिर्भ्रमरैरहं दूनो कर्म्मणि
क्तो यथा उग्रैः प्रचण्डैर्दावैर्वनाग्निभिर्गिरिर्दूयते तद्वत् अत्र सको
नायोऽभिमतप्रापकउपायः येनाहं विगतज्वरोविगतसन्तापः
स्यां नु प्रश्ने वितर्के वा वत खेदे अस्तेःस्यांलोपोऽस्यमोरिति अका
रलोपः लिहेरौणादिकः पचादित्वादच् टुदुउपतापे दुगतौ वा
णीञ् प्रापणे दुनीभूव्यवेति वैकल्पिकोणः दवोदावोवनारण्यव
ह्निरित्यमरः॥ ८२॥

समाविष्टं ग्रहेणेव ग्राहेणेवात्तमर्णवे। दृष्ट्वा गृ
हान् स्मरस्येव वनान्तान्मम मानसं॥ ८३॥

समाविष्टमित्यादि। वनान्तान् वनपर्य्यन्तान् स्मरस्य कामस्य ज०म०
गृहमिव उन्मादकत्वात् गेहेकइति ग्रहेःकः अर्द्धर्चादिपाठात्
पुंलिंगता स्थितस्येत्यर्थात् योज्यं अन्यथा कथं समानकर्तृकत्वं
मानसस्येतः ज्योतिषिग्रहः ग्राहेणेवात्तमर्णवे अर्णः यानीयं
यत्रास्तीति केशादोऽन्यतरस्यामिति तचार्णसोलोपस्येति भूमनि
न्दाप्रशंसास्वित्यादे। वः सलोपस्येति अर्णवे समुद्रे वर्त्तमानेन
ग्राहेण कुंभीरादिना आत्तं गृहीतं आङ्पूर्व्वस्य दाञोऽचउप
सर्गात्तः॥ ८३॥

समेत्यादि। वनान्तान् वनस्वरूपान् तत्समीपदेशान् वा दृष्ट्वा भ०
स्थितस्य मम मानसं ग्रहेण सूर्य्यादिना समाविष्टमिव आसक्तीकृ
तमिव इत्यर्थः उपहितत्वात् समुद्रे ग्राहेण कुम्भीरादिना आत्तं
गृहीतमिव अतिगभोरशोकमग्नत्वेऽपि कामपीडितत्वात् स्थित
स्येत्यध्याहारेणैककर्तृकत्वे पूर्व्वकाले क्त्वा प् वनान्तान् कीदृशान्
स्मरस्य गृहानिव ग्रहेः सूर्य्यादो अन् जलजन्तौ घञ् निलयेऽस्ति
जिस्वाभिधानात् गृहाः पुंसि च भूम्नेव निकाय्यनिलयालयाइत्य
मरः आङ्पूर्व्वदाञः क्तो ग्यपसत्वेति पचे तादेशःअर्णोजलं विद्यते
अस्येति केशादित्वात् वः मनोषादित्वात् सलोपः मनएव मानसं
स्वार्थे ष्णः केचित्तु मनएव जानातीति व्यवहारात् मनसएव
दर्शनकर्तृत्वं विवक्षितमित्युक्त्वा स्थितस्येति नाध्याहरन्ति अन्तः
प्रान्तेऽन्तिके नाशे स्वरूपेऽपि मनोहरइति विश्वः॥ ८३॥

वाताहतिचलच्छाखा नर्त्तकाइव शाखिनः। दुः
सहाष्टी परिच्छिन्नाः क्वणद्भिरलिगायकैः॥ ८४॥

वातेत्यादि। हा कष्टं एते शाखिनः नर्त्तकाइव शिल्पिनिश्वुन् दुःसहादुःखेन सह्यन्तइति ईषदित्यादिना खल् नर्त्तकैः साधर्म्य माह वाताहतिचलच्छाखावाताहतिभिः चलन्त्यः शाखावाङ्कल ताइव येषांते अलयोभ्रमरागाथकाइव गस्थकन् तैश्च परिचि प्ताः परिवेष्टिताइति ॥ ८४ ॥

भ॰ वातेत्यादि। एते शाखिनोदुःसहादुःखेन सह्यन्ते ईषद्दुःसो रिति खल् हा विषादे नर्त्तकाइव नृत्यन्तीति नृत्खनरञ्जइति ष्वुकः नृतादेः शिल्पिनि ष्वइति परः खमते शिल्पिविशेषाऽर्थाद्ग म्यते नर्त्तकसाधर्म्यमाह वाताहतिचलच्छाखाः वातस्याहतिभि श्चलन्तो शाखा वाङ्कतुल्या येषां अलयोभ्रमराएव गाथकागा यनास्तैः परिक्षिप्ताः परिवेष्टिताः गायन्तीति गोण्णट्थकाविति थकः गायतेरेतौ लोपे इति इत्त्वावुक्तत्वात् गैगाने इत्यस्यैव ग्रहणं नतु गाङः कथद्भिः शब्दायमानैः ॥ ८४ ॥

एकहायनशारङ्गगती रघुकुलोत्तमौ। लवकौ शत्रुशक्तीनामृश्यमूकमगच्छतां ॥ ८५ ॥

ज॰म॰ एकहायनेत्यादि। रघुकुलोत्तमौ रामलक्ष्मणौ ऋश्यमूकम गच्छतां गतवन्तौ लङि रूपं हायनः संवत्सरः सएकोयस्य शार ङ्गस्य मृगस्य तस्यैव गतिर्ययोः शीघ्रगामित्वात् हयव्रीहिकालयो रिति हाधातोर्ण्युट् आतोयुक् तौ शत्रुशक्तीनां लवकौ अपनेतारौ शुल्वः समभिहारइति वुन् तत्समभिहारग्रहणं साधुकारित्वो पलक्षणार्थं ॥ ८५ ॥

एकेत्यादि। एतद्वचनानन्तरं रघुकुलस्य वृषभौ श्रेष्ठौ राम लक्ष्मणौ ऋष्यमूकं पर्व्वतं अगच्छतां कीदृशौ एकहायनशारङ्ग गती एकोहायनोवत्सरोवयोयस्य तादृशस्य शारङ्गस्य हरिण इव मृगस्येव वा गतिर्गमनं ययोः शीघ्रगामित्वात् अहातेर्यनटि हायनोनिपातितः हाङोक्वप्रमित्यन्ये अनुमकीर्णा सवर्णा छन्दसौ सुनातेः सुद्गुसुस्त्वोऽकः इत्यकः ग्रादेः शाधुकारिणर्थेऽकइति परः शारङ्गश्चातके भृङ्गे कुरङ्गे च मतङ्गजे॥ ८५॥ 　भ०

तौ वालिप्रणिधी मत्वा सुग्रीवोऽचिन्तयत्कपिः। ब न्धुना विगृहीतोऽहं भूयासं जीवकः कथं॥ ८६॥

तावित्यादि। तौ रामलक्ष्मणौ वालिनः प्रणिधी चरौ मत्वा सुग्रीवः कपिरचिन्तयत् चिन्तितवान् प्रणिधीयते नियुज्यते कार्य्ये षु प्रणिधिः उपसर्गेघोःकिः बन्धुना भ्रात्रा विगृहीतो विरोधितः सन् कथं जीवकोभूयासमिति आशंसायां लिङ् जीवेराशिषिवुन्। इति नित्यपदवदधिकारः॥ ८६॥ 　ज०म०

तावित्यादि। रामलक्ष्मणौ वालिनः प्रणिधी चरौ मत्वा सुग्रीवः कपिरचिन्तयत् बन्धुना वालिना विगृहीतो विरोधितो ऽहं कथं जीवकोभूयासं प्रणिधीयते कर्म्मणि प्रयुज्यतेऽसाविति दासंज्ञकत्वात् किर्दोऽन्तर्गेरित्यनेन भावविहितोऽपि किः कर्तुः कभावइत्युभेरत्र कर्म्मणि बोध्यः केचित्तु कभावेऽमोइत्यस्मात् मण्डूकप्लुताधिकारादत्र कभावइत्यनुवर्त्तते वृत्तौ तु कारकानु 　भ०

पदे योजिपिकरप्रमादात् इत्याङ्कः आशिषीति औवतेरकः। इति निरुपपदाधिकारः॥ ८६॥

सप्रस्तुलावौ मन्वानौ राघवौ मलयं गिरिं। जगाम सपरीवारो व्योममायमिवोत्थितं॥ ८७॥

ज०म० इतः प्रभृति तचोपपदं सप्तमीस्थमिति अथ सोपपदस्थानेन कृतो दर्शयन्नाह सद्दत्यादि। ससुग्रीवः सपरीवारः सपरिकरः उपसर्गस्येति दीर्घः कपीनाममनुष्यत्वात् मलयं गिरिं जगाम राघवौ प्रस्तुलावौ प्रचून् लुनातीति कर्मण्यण् प्रचूणामुन्मूलकाविति मन्वानोऽवगच्छन् मनुबोधनअप्रमादात्मनेपदिनस्तनादिभ्यउः व्योममायमिवोत्थितं व्योम आकाशं मिमीतइति ह्वावामश्चेत्यण् नभः परिच्छेत्तुमिवोत्थितं कियत्प्रमाणमस्तीति॥ ८७॥

भ० अथ सोपपदाधिकारः। यस्मात् पराद्धातोः प्रत्ययास्तदुपपदं सद्दत्यादि। ससुग्रीवो राघवौ प्रस्तुलावौ प्रचूणां छेदकौ मन्वानः परीवारैः परिजनैः सह मलयं गिरिं जगाम व्योममायं आकाशस्य परिमाणं कुर्व्वाणमिव उत्थितं अतिदैर्घ्यादियमुत्प्रेक्षा प्रचून् लुनातीति व्योम मातीति च ढात्वण्यनञ्ज्ञित्कृदिति आतोयन् मनदकबोधे क्नित्वाभ्यं दिवान्तनादिः परिपूर्व्वाद्वृञोघञ् परेरिकारस्य दीर्घत्वमभिधानात्॥ ८७॥

प्रम्मदं मारुतिं दूतं विषमस्थः कपिद्विपं। शोकापनुदमव्यग्रं प्रायुङ्क्त कपिकुञ्जरः॥ ८८॥

शर्म्मदमित्यादि। कपिकुंजरः सुग्रीवः हनुमन्तं दूतं प्रायुङ्क्त प्रस्थापितवान् वृन्दारकनागकुंजरैरित्यादिना कर्म्मधारयः सः वृत्तान्तं ज्ञातुमित्यर्थात् प्रायुङ्क्त इति प्रोपाभ्यांयुजेरित्यात्मनेपदं रुधादित्वात् श्नम कपिकुंजरः किम्भूतः विषमे दुर्गपर्व्वते तिष्ठतीति विषमस्थः सुपिस्थइति कः मारुतिं कीदृशं शर्म्म कल्याणं ददातीति शर्म्मदः आतोऽनुपसर्गेकइति कः श्रेष्ठत्वमाह कपिद्विपं कपिश्रेष्ठं द्वाभ्यां पिवतीति द्विपः कपिरयं द्विपइव उपमितं व्याघ्रेत्यादिना कर्म्मधारयः पुनः कीदृशं शोकापनुदं शोकमपनुदति नुन्दशोकयोरिति कः अव्ययं सुचित्तमित्यर्थः॥ ८८॥ जं०भ०

शर्म्मदमित्यादि। कपिकुञ्जरः सुग्रीवोमारुतिं हनूमन्तं दूतं प्रायुङ्क्त प्रस्थापितवान् वृत्तान्तं ज्ञातुमित्यर्थात् कीदृशः विषमस्थः विषमे कृच्छ्रे तिष्ठतीति स्वनजनादिति डः एवम्भूतोऽपि महाबलत्वादव्ययोऽव्याकुलः यद्वा विषमे दुर्गे स्थितः अतएव अव्ययः अक्षोभितमनाः कीदृशं मारुतिं शर्म्म ददातीति शर्म्मदं सुखदायकं पूर्व्ववड्डः शर्म्मशातसुखानिचेत्यमरः कपिद्विपं कपिश्रेष्ठं शोकमपनुदति शोकापनुदं क्षगृध्राप्रीजुकइति कः कपिर्द्विपइव कपिः कुञ्जरइव गमकत्वात् विशेषणस्यापि परनिपातः द्वाभ्यां पिवतीति द्विपः पुर्व्ववत् डः कुञ्जोदन्तोविद्यतेऽस्येति मध्वादित्वात् रः गुञ्जकुञ्जे निकुञ्जोऽपि हनौ दन्तोऽपि दन्तिनामिति विश्वः मारुतस्यापत्यमिति वाक्वायतइति ष्णिः आञ्जनेयोहनूमान् स्याद्धनुमानपि मारुतिरिति कोषः अव्ययमिति क्वचित् पाठः तादृशस्य दूतस्य योग्यत्वात् युजेर्ण्यां रुधादित्वात् श्नम् नशोमेऽणाविति णादेशः॥ ८८॥ भ०

विश्वासप्रदवेशोऽसौ पथिप्रज्ञः समाहितः। चित्त संख्यो जिगीषूणामुत्पपात नभस्तलं॥ ८९॥

अ॰म॰ विश्वासेत्यादि। असौ मारुतिर्नभस्तलमुत्पपात विश्वासं प्रददातीति विश्वासप्रदः प्रेदाज्ञ इति कः विश्वासप्रदोवेशोयस्य भिक्षुवेषइत्यर्थः वेश्यतेआत्मानेनेति अकर्त्तरि चकारके घञ् विषव्याप्ताविव्यस्यरूपं पन्थानं प्रजानातीति पथिप्रज्ञः समाहितः अभ्रान्तचित्तः इदञ्च मया तत्र वक्तव्यमिति जिगीषूणां जेतुमिच्छतां चित्तसंख्यः चित्तं संख्याति परिछिनत्तीति समिख्यइति कः॥ ८९॥

भ॰ विश्वासेत्यादि। असौ मारुतिर्नभस्तलमुत्पपात कीदृशः विश्वासप्रदोवेशोयस्य सतथा भिक्षुवेशत्वात् प्रोविशप्रवेशे घञि वेशः विषिर्लिङ्गोऽव्याप्ताविव्यस्य मूर्द्धन्यान्तस्य रूपमित्यन्ये पन्थानं प्रजानाति इति इगुपधप्रीति कः समाहितः अभ्रान्तचित्तः जिगीषूणां जेतुमिच्छूनां स्वपक्षाणां परपक्षाणाञ्च चित्तं संख्याति परिछिनत्तीति हनजनादिति डः संपूर्व्वस्य ख्याख्यातावित्यस्य प्रयोगोनास्तीति ये वदन्ति तन्मते चचिङ्कोरूपं तदा चचिङ्ः कशाञ्ख्याञरे इत्यत्र अरइति विषयसप्तमी॥ ८९॥

सुरापैरिव घूर्णद्भिः शाखिभिः पवनाहतैः।
कामगाङ्गैः प्रगीतं सामगैरिव॥ ९०॥

अ॰म॰ सुरापैरित्यादि। मारुतिर्व्यश्मूकमगात् शाखिभिरुपलक्षितं घूर्णद्भिः कम्पमानैः पवनाहतत्वात् अतएव सुरापैरिव मत्तैरिव

गापोष्टगित्यच सुरासीध्वोरिति टक् प्रगीतं प्रगीयतेऽनेति अधि करणे क्तः कैर्भृङ्गैः सामगैरिव सामवेदपाठकैरिव गायन्तीति टक्॥ ९०॥

सुरापैरित्यादि। समाहृतिरृश्यमूकमगात् कीदृशं शाखिभि रुपलक्षितं कीदृशैः पवनेनाहतैः अतएव घूर्णद्भिः कम्पमानैः घूर्ण भ्रमणे शतुः अतएव सुरापैर्मद्यपैरिव सुरां पिबन्तीति इग जनादिति डः भृङ्गैः प्रगीतं नादितं गीयते यत्रेति ध्रौव्यगत्येति आधारे क्तः क्तस्योःकभावहत्युक्तेः अपवादेऽप्युत्सर्गप्रवृत्तिः क्वचि दिति न्यायात् कामुकवक्षार्थस्तेन इत्यनेन षष्ठीप्राप्तौ साधनहेलि त्यादिना कर्त्तरि तृतीया भावक्तान्तादशआदित्वादिति भृङ्गक र्तृकसङ्गीतयुक्तमिति वार्थः प्रकृष्टं गीतं यत्रेति वा सामगैरिव सामवेदं गायन्तीति इनचरगष्टक्॥ ९०॥ भ०

तं मनोहरमागत्य गिरिं वर्म्महरौ कपिः। वीरौ सुखाहरोऽवोचद्भिक्षुर्भिक्षार्हविग्रहः॥ ९१॥

तमित्यादि। ऋष्यमूकं गिरिमागम्य कपिर्वीरौ रामलक्ष्मणौ अवोचत् उक्तवान् कीदृशं मनोहरं रम्यत्वात् मनोहरतीति हर तेरनुद्यमनेऽच् वर्म्महरौ कवचं हर्त्तुं क्षमौ संभाव्यमानवयसावि त्यर्थः वयसिचेत्यच् सुखाहरः सुखाहरणशीलः आङ्गिताच्छील्य इत्यच् भिक्षुः परिव्राट्वेशः न कपिरूपः यतोविश्वासप्रदवेश इत्युक्तं भिक्षार्हविग्रहः भिक्षायोग्यशरीरः कृशत्वादित्यर्थः भिक्षामर्हतीत्यच्॥ ९१॥ ज०म०

भ० 　तमित्यादि। तं ऋष्यमूकं गिरिं आगत्य आगम्य कपिर्हनूमान् वीरौ रामलक्ष्मणौ अवोचत् कथितवान् गिरिं कीदृशं रम्यत्वात् मनोहरं हरतीति हरः पचादित्वादन् मनसोहरः मनोहरः कीदृशौ तौ वर्म्महरौ कवचधरौ पूर्व्ववदन् कपिः कीदृशः सुखाहरः सुखकारी अर्थान्तयोः पूर्व्ववदन् परे तु अवहने कर्म्मणः परात् हञोऽन् वयोबोधकवहने च आङ्पूर्व्वात्तु ताछील्य एवेत्याहुः तस्मते मनोहरतीति मनोहरस्तं वहने तु भारहारइत्यादि बोध्यं वर्म्म हर्त्तुं शमौ वर्म्महरौ अत्र सम्भाव्यमानं वयो गम्यते तरुणावित्यर्थः सुखमाहर्त्तुं शीलमस्य सुखाहरः भिक्षुर्यतिरूपः भिक्षणशीलोवा सन्भिक्षार्थंसउः भिक्षार्हविग्रहः भिक्षायोग्यशरीरः भिक्षुकवेशपरिग्रहात् नतु वानरमूर्त्तिः विश्वासप्रदवेशइत्युक्तं भिक्षामर्हतीति भिक्षार्हः पचादित्वादन्॥९१॥

बलिनावसुमङ्गीन्द्रं युवां सम्बेरमाविव। आचक्षाथामितः कस्माच्छङ्करेणापि दुर्गमं॥९२॥

ज०म० 　किमवोचदित्याह बलिनेत्यादि। युवां अमुं अद्रीन्द्रं कस्मात् कारणादितः प्राप्तौ इगुगतावित्यस्माद्वर्त्तमानसामीप्ये भूते लट् स्यस् एतदाचक्षाथां कथयतं लोटि रूपं बलिनौ बलवन्तौ यत् शंकरेणापि महादेवेनापि दुर्गमं दुःखेन गम्यते काविव सम्बेरमाविव यथा मत्तद्विपौ प्राप्नुतस्तद्वत् स्तंवकर्णयोरित्यच् कर्त्तरि हस्तिन्यभिधेये हस्तिसूचकयोरिति वचनात् शंकरइति शमि धातोरित्यच्॥९२॥

बलीत्यादि। किमवोचदित्याह युवां अमुं अद्रीन्द्रं ऋष्यमूक भ०
कस्मात् कारणात् इथः प्राप्नुथः इणगतौ भूतसामीप्ये लो अभि
धानात् एतत् युवामावयोर्वा कथयतं प्रार्थनायां लो अद्रीन्द्रं
कीदृशं शङ्करेण महादेवेनापि दुर्गमं दुःखेन गम्यतइति ईषद्दुः
सुरिति खल् अतएवात्र गमनात् युवां बलिनौ बलमस्ति ययो
रिति नैकाजादिति इन् अत्रातिशयेन मत्वर्थौ बोध्यः। तथा च
भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। संसर्गेऽस्ति विवक्षायां
भवन्ति मतुवादयइति स्वम्बेरमाविव हस्तिनौ यथा प्राप्नुथ
स्तद्वत् स्तम्बेरमतइति पचादित्वादच् अभिधानात् सप्तम्यलुक्
हस्तिन्येव रूढः शं कल्याणं करोतीति शङ्करः खकुष्टइति टः
अभिधानात् संज्ञा गम्यते॥ ८२॥

व्याप्तं गुहाशयैः क्रूरैः क्रव्याद्भिः सनिशाचरैः।
तुङ्गशैलतरुच्छन्नं मानुषाणामगोचरं॥ ८३॥

उक्ताख्याधिकारः।

व्याप्तमित्यादि। दुर्गमत्वदर्शनाय इदमुच्यते कीदृशमद्रीन्द्रं क०भ०
क्रव्यमपक्वमांसं भक्षयद्भिः सिंहादिभिः सनिशाचरैः राक्षससहि
तैर्व्याप्तं क्रव्येचेति विट् गुहाशयैः गुहायां शेरते इति शीङोऽधि
करणेऽच् तुंगाः उच्चाः शैलाः शिलायां भवाये तरवस्तैश्छन्नं
व्याप्तं अतएव मानुषाणामगोचरं अगम्यं गोचरसंचरेत्यादिना
निपातितः॥ ८३॥

भ० व्याप्तमित्यादि। दुर्गमत्वं दुर्भेद्यत्वात् अद्रीन्द्रं कीदृशं क्रव्याद्भिः
किरातादिभिः सिंहादिभिर्व्याप्तं क्रव्यं मांसमदन्तीति क्विप् क्रव्य
क्रव्यादः पक्के क्विप् अपक्केऽण् क्रियाविति परः स्मर्यते पक्कापक्कवि
शेषानुक्तौ न व्यतिरेकोगतिप्रबलात् कीदृशैः गुहाशयैः गुहायां
शेरत इति पचादित्वादच् शीङोऽधिकरणादच्नेति परसूत्रं क्रूरै
र्निर्दयैः कठिनैर्व्वा सनिशाचरैः राक्षससहितैः पुनः कीदृशं तुङ्गशै
लतरुच्छन्नं तुङ्गैः शैलैस्तरुभिश्च छन्नं सर्व्वतोव्याप्तं अतएव मानु
षाणामगोचरं अगम्यं। द्विषन् वनेचराग्र्याणामित्यारभ्य चरा
देष्ट इत्यादिप्रकरणस्य प्रागुक्तत्वात् अथ तच्छ्रागत इत्यत आह उक्त
स्याधिकार इति ॥ ९३ ॥

सत्वमेजयसिंहाढ्यान् स्तनन्धयसमत्विषौ। कथं
नाडिन्धमान्मार्गानागतौ विषमोपलान् ॥ ९४ ॥

ज०म० सत्वमित्यादि। युवामिमान् मार्गानागतौ सत्वमेजयसिंहाढ्यान्
सत्वमेजयन्ति ये सिंहाः एजेः खश् अरुर्द्विषेति मुम् तैराढ्यान्
व्याप्तान् सिंहग्रहणं तद्धिंस्रोपलक्षणार्थं हिनस्तीति सिंहः पृषो
दरादित्वाद्वर्णविपर्य्ययः नाडिन्धमानिति उच्चनीचाधिरोहणान्मु
हुर्मुहुर्निश्वासैर्नाडिन्धमन्तीति नाडीमुष्ट्योश्चेति खश् खित्यनव्यय
स्येति ह्रस्वः विषमोपलान् उन्नतपाषाणयुक्तान् स्तनन्धयसमत्वि
षौ बालवत्सुकुमारौ सामर्थ्यं पुनर्युवयोरचिन्त्यं स्तनं धयतः
पिबतः नासिकास्तनयोरिति खश् अरुर्द्विषदिति मुम् ॥ ९४ ॥

अथ खशाद्यधिकारः सत्वमित्यादि। युवां कथं इमान् मा
र्गान् आगतौ एतत् सूतमिति वक्ष्यमाणश्लोकेनान्वयः कीदृशान्

सलमेजयसिंहाद्यान् सलान् प्राणिनएजयन्ति कम्पयन्ति भीषय न्तीति यावत् खश्रेजेरिति खश् खित्यव्याजिति मन् ताट्टशाये सिं हासैराद्यान् व्याघ्रान् हिनस्तीति सिंहः पषादित्वाद्न् निपात नात् वर्णविपर्य्ययः नाडिन्धमान् मुहुर्मुहुर्नाडीं निःश्वासैर्धमन्ति उपतापयन्तीति नाडीमुष्टीस्तनेत्यादिना खश् श्वादानपेत्या दिना धोधमादेशः पूर्व्वेण मन् इस्वश्च विषमोपलान् उन्नतानत प्रस्तरयुक्तान् युवां कीदृशौ स्तनन्धयसमत्विषौ स्तनंधयति पिब तीति स्तनन्धयोवालकः पूर्व्ववत्खश् मन् च तेन समा त्विट् दीप्ति र्ययोः एतेन सौकुमार्य्यं दर्शितं स्तनन्धयशब्देनार्थात् तद्दीप्तिरुप लक्ष्यते दीप्तौ तत्समत्वमुचितं परम्परया धर्म्मिसाम्यं धर्म्मसाम्यं वा गम्यते॥ ९४॥

**उत्तीर्णौ वा कथं भीमाः सरितः कूलमुद्वहाः। आ सादितौ कथं ब्रूतं न गजैः कूलमुद्रुजैः॥ ९५॥**

उत्तीर्णावित्यादि। कथं वा केनोपायेन युवां सरितोनदीरु त्तीर्णौ भीमास्त्रासकरी यतः कूलमुद्वहाः कूलमापूर्य्य वहन्त्यः उदिकूलइति खश् गजैः कूलमुद्रुजैः कूलं भिन्दद्भिः कथं नासा दितौ न व्यापादितौ इति ब्रूतं कथयतं॥ ९५॥ ज०म०

उत्तीर्णावित्यादि। कथं वा युवां सरितोनदीरुत्तीर्णौ तर णमपि गतिः तेन गत्यर्थाढेत्यादिना कर्त्तरि क्तः कीदृशीः कूलमु द्वहाः कूलान्यापूर्य्य वहन्ति कूलं तीरमपि जलानि प्रापयन्ति वा भ०

अतएव भीमास्त्रासकरीः गजैर्हस्तिभिः कथं वा युवां माभ्यादितौ न प्राप्तौ न मारिताविति भावः कर्म्मणि क्तः कीदृशैः कूलमुद्रुजैः मत्ततया कूलं भिन्दद्भिः एतद्युवां मूतं कथयतं उभयत्र कूला दुद्रुजुद्वहइति खश् खित्यव्याजिति मन् ॥ ८५ ॥

रामोऽवोचद्धनूमन्तमावामभ्रंलिहं गिरिं। ऐव वि द्वन् पितुः कामात् पान्तावल्पंपचान्मुनीन् ॥ ८६ ॥

ज०म० रामइत्यादि। हनुर्वदनैकदेशः सोऽस्यास्तीति निन्दायां मतुप् अन्येषामपि दृश्यतइति दीर्घः हनूमान् हनुमानपीति विश्वदर्श नात् द्वैरूप्यं तस्य किल जातमात्रस्य आदित्यरथं गृह्णतो हनुरयं भग्नमिति श्रूयते तं रामोऽवोचत् उक्तवान् तत् किमित्याह हे विद्वन् यत्रमुं गिरिमावामेव आगतौ तत् पितुः कामादभिप्रा यात् आङ्पूर्व्वादिणोलङ् रूपं अभ्रंलिहमुच्चैस्तरं अभ्रंलेढीति वहाभ्रेलिहइति खश् किं कुर्व्वाणौ पान्तौ रक्षन्तौ मुनीन् अल्पं पचान् अल्पसन्तुष्टान् अल्पं पचन्तीति मितनखेचेति मितेत्यर्थ ग्रहणात् खश् चकारस्यानुक्तसमुच्चयार्थत्वात् ॥ ८६ ॥

भ० रामइत्यादि। रामोहनूमन्तं अवोचत् पर्व्वताघातभग्नत्वात् कुत्सिता हनूरस्यास्तीति निन्दायां मतुः हनूशब्दात् तन्वादेर्व्वा इति पाक्षिकऊप् उतोऽयुङ्‌रञ्जादेरित्यस्य प्रत्युदाहरणे रज्वां दौ तु हनुरिति क्वचित्पुस्तके दृश्यते तत्तु लिपिकरप्रमादा

दिति केचित् नान्वर्थे ऽचोर्थ इति केचित् हनूमान् हनुमानपीति विश्वदर्शनादूहुच्यमेव किमुक्तवानित्याह हे विदन् आवां पितुः कामादभिलाषादमुं गिरिं ऐव आगतौ तृणोघीव अदादित्वात् शपोलुक् अभ्रंलिहमाकाशं लेढि प्राप्नोतीति तृभृट्टज्जीत्यादिना अभिधानादनान्वपि खः खितीति मन् अभिधानात् गुणाभावः आवां कीदृशौ मुनीनां पान्तौ रक्षन्तौ पालरक्षणे शतुः कीदृशान् अल्पंपचान् स्वल्पसन्तुष्टान् दरिद्रान् वा घटीखारीत्यादौ मितनखमानादित्यत्रार्थस्यैव ग्रहणं तेनाल्पशब्दात् पचः खश् अल्पं यथास्यात्तथा पचानिति केचित् मुनिरक्षणेन दुष्टहिंसाप्रवृत्तयोरावयोः कुतः सिंहादिभयं तादृशोस्य सरिदुत्तरणमपि नाशक्यमिति पूर्व्वप्रश्नेषु सर्व्वेोत्तरं सूचितं ॥ ९६ ॥

अमितम्पचमीशानं सर्व्वभोगीणमुत्तमं। आवयोः पितरं विद्धि ख्यातं दशरथं भुवि ॥ ९७ ॥

कः पुनः पिता यदादेशादागतावित्यत आह। अमितम्पचमित्यादि। आवयोः पितरं दशरथनामानं भुवि विख्यातं विद्धि जानीहि ऊशल्भ्योहेर्धिः अमितंपचं महामन्त्रिणं पूर्व्ववत् खश् मुमृचततोनञ्समासः ईशानमोशनशीलं स्वामिनमित्यर्थः ताच्छील्येत्यादिना चानश् सर्व्वभोगीणं सर्व्वसत्वभोगाय हितं आत्मन्विश्वजनेति खः भोगशब्दोऽत्र शरीरवाची अट्कुप्वादिना णत्वं ॥ ९७ ॥ ज०म०

अमितमित्यादि। कः पिता यदादेशादत्रागतावित्याह आव भ०

यो: पितरं दशरथं विद्धि जानीहि ऊधसोऽनङिः कीदृशं अमित
मघं प्रचुराघप्रदं घटीखारीत्यादिना खश् पश्चान्नञ्समासः ईशा
नं ऐश्वर्य्ययुक्तं ईश‌लङ्‌ऐश्वर्य्ये शानः सर्व्वभोगाय सर्व्वशरीराय
हितं भुज्यतेऽनेनेति भोगः शरीरं ततोविकारसंघेत्यादिना हि
तार्थे ईनः पुर्णोऽदान्तेइत्यादावतङ्गादित्यस्य योगविभागात्
णत्वं उत्तमं श्रेष्ठं भुवि ख्यातं पृथिव्यां प्रसिद्धं सर्व्वज्ञातत्वात्
॥ ८७ ॥

छलेन दयितारण्यादृक्षसारुन्तुदेन नः। असूर्य्य
म्पश्यया मूर्त्त्या हृता तां मृगयावहे॥ ८८॥

ज०म० यदि पितुरादेशादागतौ किमत्र गमनेनान्वेषयथ इत्याह।
छलेनेत्यादि। नोऽस्माकं दयिता अरण्याद्राक्षसेन हृता कीदृ
शेन अरुन्तुदेन मर्म्मस्पृशा विध्वरुषोस्तुद इति खश् मुम् असूर्य्य
म्पश्यया आदित्यगोप्यया मूर्त्त्या शरीरेणोपलक्षिता असूर्य्य
ललाटयोरिति खश् तां हृतां मृगयावहे गवेषयावः मृग अन्वे
षणे स्वार्थिकण्यन्तः युवयोः पौरुषान्वितत्वात् कथं हृतेत्याह
छलेन छद्मना ॥ ८८॥

भ० छलेनेत्यादि। पितुराज्ञया दण्डकागमनेऽपि कथं अत्राग
मनमित्याह अस्माकं दयिता अरण्यादृक्षसा हृता कथं युव
योरग्रे हृतेत्याह छलेन छद्मना नतु बलात् कीदृशेन रक्षसा
अरुन्तुदेन मर्म्मस्पृशा घटीखारीत्यादिना खश् खित्यव्याजिति
मम आर्त्तेः मोलोपः अमादृशकाले वसन्तविद्या तां हृतां मृगया

सद्दे अन्वेषयावः मृगतृष्णामार्गणौ मार्गणमन्वेषणं मूर्त्या शरी रेणोपलक्षिता विशेषणे तृतीया कीदृश्या असूर्य्यम्पश्यया सूर्य्यमपि न पश्यन्त्या अतिगोप्ययेत्यर्थः पूर्व्वेण खश् स्थादानेत्यादिना दृशेः पश्यादेशः सूर्य्येण सह समासोगमकत्वात्॥ ९८॥

प्रत्यूचे मारुतीराममस्ति वालीति वानरः। शमयेदपि संग्रामे योललाटन्तपं रविं॥ ९९॥

त्वं पुनः कस्य वेत्यतआह। प्रत्यूचेइत्यादि। रामं मारुतिः प्रत्यूचे प्रत्युक्तवान् अस्ति वालीतिनाम्ना कपीश्वरः यः संग्रामे युद्धे ललाटन्तपं सर्व्वेषामुपरि वर्त्तमानं पूर्व्ववत् खश् शमयेत् पराजयेदिति सम्भावने लिङ् वालिशब्दोनान्तः इदन्तश्च तथा च वाली वालिश्च कथ्यते इति शब्दभेदः॥ ९९॥ जं०म०

प्रत्यूचइत्यादि। मारुतिर्हनूमान् रामं प्रत्यूचे किम्प्रत्यूचे इत्याह वालीति नाम्ना वानरोऽस्ति यः संग्रामे प्रवृत्ते रविं सूर्य्यमपि शमयेत् पराजयेत् शक्यासम्भावनेति लो कीदृशं रविं ललाटन्तपं सर्व्वेषामुपरिवर्त्तिनं मध्याह्नकालीनमपि प्रचण्डमपीत्यर्थः यद्वा सूर्य्योऽपि चेत्तस्य ललाटं तपति तदा तमपि शमयेत् सुतरामेवान्यायकारिणमित्यर्थः घटीखारीत्यादिना खश्॥ ९९॥ भ०

उग्रम्पश्येन सुग्रीवस्तेन भ्राता निराकृतः। तस्य मित्रीयतोदूतः संप्राप्तोऽस्मि वशम्वदः॥ १००॥

उग्रम्पश्येनेत्यादि। तेन भ्रात्रा उग्रंपश्यता पापं विजानता उग्रंपश्येत्यादिना निपातितं यस्य सुग्रीवो निराकृतोऽभिभूतस्तस्य जं०म०

ष्टि दूतः प्राप्तोऽस्मि वशम्वदः वशमनुकूलं वदतीति वशम्वदः प्रियवशेवदःखच् कीदृशस्य मित्त्रीयतोमित्त्रमिच्छतः सुपश्रात्मनः क्यच् ॥ १०० ॥

भ० उग्रमित्यादि । तेन भ्रात्रा वालिना सुग्रीवोनिराकृतः देशा न्निःसारितः कीदृशेन उग्रम्पश्येन पापं पश्यता उग्रदृष्टिना वा घटीखारीत्यादिना खश् तस्य सुग्रीवस्य दूतोऽहं सम्प्राप्तोऽस्मि आगतोऽस्मि कीदृशस्य मित्त्रीयतः आत्मनोमित्त्रमिच्छतः तथा भवन्तमेव क्योऽव्ययाद्यस्येति क्यः अवर्णस्य ईत्व ततः शहः वशमनु कूलं वदतीति वशम्वदः प्रियवशादित्यादिना खः अस्मीति क्रिया पदं अस्मदर्थेऽव्ययं वा ॥ १०० ॥

प्रियम्वदोऽपि नैवाहं ब्रुवे मिथ्या परन्तप। सख्या तेन दशग्रीवं निहन्तासि द्विषन्तपं ॥ १०१ ॥

ज०म० किन्तेन सख्येनेति चेदाह प्रियंवदइत्यादि। प्रियम्वदतथा लोकोमिथ्या वदति अहं प्रियम्वदोऽपि पूर्ववत् खच् परंतप शत्रू णामुपतापद द्विषदिति खच् वाचंयमपुरन्दरौचेत्यमागमोनि पात्यते नैवाहं मिथ्या ब्रुवे वदामि तेन सुग्रीवेण सख्या मित्त्रेण दशग्रीवं निहन्तासि हनिष्यसि हन्तेर्लुटि रूपं कीदृशं द्विषन्तपं शत्रूणामुपतापयितारं पूर्व्ववत्खच् ॥ १०१ ॥

भ० प्रियमित्यादि । किन्तेन मित्त्रेणेत्याह तेन सुग्रीवेण सख्या त्वं दशग्रीवं हन्तासि निहनिष्यसि हन्तेर्लुटि कीदृशं द्विषन्तपं शत्रूणा मुपतापकं द्विभृदइत्यादिना द्विषच्छब्दात्तपोऽभिधानादसंज्ञा

थामपि खः मनीषादित्वात्तलोपे खित्यव्याजिति मन् किम्वा द्वे ष्टीति द्विषः छगृघ्राप्रीजुष्इति कः तस्मात्तपः खः प्रियम्वदत्वा न्मृषा ब्रवीषि चेदाह हे परन्तप शत्रूणामुपतापक प्रियम्वदो ऽपि सन् नैव मिथ्या ब्रुवे वदामि परन्तपेति रामसम्बोधनात् द्विषन्तपमिति रावणविशेषणात् द्वयोः साम्यमुक्तं तेन तज्जयाय रामस्य मित्रान्तरापेक्षा युक्तेति भावः प्रियम्वदइति प्रियवशादि ति खः परन्तपेत्यत्र द्विषन्तपवत् खः॥ १०१॥

वाचंयमोऽहमनृते सत्यमेतद्ब्रवीमि ते। एहि सर्व्वं सहं मित्रं सुग्रीवं कुरु वानरं॥१०२॥

वाचंयमइत्यादि। वाचंयमपुरंदरौचेत्यमागमोनिपात्यते जं०म० तस्मात् सत्यमेतत् पूर्व्वोक्तं ब्रवीमि ते तुभ्यं तादर्थ्ये चतुर्थी यत एवं तस्मादेहि आगच्छ सुग्रीवं वानरं मित्रं कुरु कीदृशं सर्व्वंसहं सर्व्वं सहतइति पूःसर्व्वयोरिति खच्॥ १०२॥

वाचमित्यादि। न मिथ्या ब्रुवइति प्रागुक्तं द्रढयन्नाह अहं अ भ० नृते असत्ये वाचंयमामौनी तस्माद्भ्रग्रीवं निहन्मास्मि इति यदु क्तं एतत्तुभ्यं सत्यमेव ब्रवीमि तादर्थ्ये चतुर्थी तस्मात् एहि आग च्छ सुग्रीवं वानरं मित्रं कुरु कीदृशं सर्व्वंसहं सर्व्वकार्य्यक्षमं तृभृ वृइत्यादिना अभिधानादसंज्ञायामपि खः वाचंयमइति दाचा शब्दात् यमः पूर्व्ववत् खः खित्यव्याजिति मन् ह्रस्वस्य परे तु वाक् शब्दोपपदेन साधयन्ति॥ १०२॥

सर्व्वंकषयशःशाखं रामकल्पतरुं कपिः। आदा याभ्रंकषं प्रायान्मलयं फलशालिनं ॥१०३॥

ज॰म॰ सर्व्वंकषेत्यादि। रामः कल्पतरुरिव यस्तमादाय गृहीत्वा कपिः प्रायात् गतः कीदृशं रामं सर्व्वंकषयशःशाखं सर्व्वं कषन्ति व्याप्नुवन्ति यानि यशांसि सर्व्वकूलेत्यादिना खश् तान्येव शाखा यस्य फलशालिनमभिमतफलसम्पादनात् अभ्रंकषमुच्चैस्तरं मलयं पूर्व्ववत् खच् ॥१०३॥

भ॰ सर्व्वमित्यादि। रामएव कल्पतरुः तमादाय कपिर्हनूमान् मलयं प्रायात् प्रगतः रामं कीदृशं सर्व्वं कषयन्ति व्याप्नुवन्ति सर्व्वं पापं नाशयन्ति वा यानि यशांसि तान्येव शाखायस्य तं फल शालिनं अभिमतफलसम्पादनात् मलयं कीदृशं अभ्रंकषं आ काशव्यापकं अत्युच्छ्रितत्वात् फलशालिनमिति मलयस्य विशेष णात् श्रमापहारकत्वं सूचितमिति केचित् प्रियवशाद्वयत्तींत्या दिना खः ॥१०३॥

मेघंकरमिवायान्तमृतुं रामं क्षमान्वितः। दृष्ट्वा मेने न सुग्रीवोवालिभानुं भयङ्करं ॥१०४॥

ज॰म॰ मेघंकरमित्यादि। राममायातं दृष्ट्वा सुग्रीवोवालिनं भानु मिव भयंकरं भीतिजनकं न मेने न बुद्धवान् मेघर्त्तीत्यादिना खच् क्षमान्वितोग्लानोवालिभानुना पीडितत्वात् कीदृशं रामं मेघंकरं ऋतुमिव प्रावृट्कालमिव पूर्व्ववत् खच् ॥१०४॥

मेघमित्यादि। राममागतं दृष्ट्वा सुग्रीवोभानुमिव वालिनं भय　भ०
ङ्करं भीतिजनकं न मेने न मन्यतेस्म कीदृशः क्लमेनान्वितः म्लानः
रामं कीदृशं मेघङ्करं मेघोत्पादकं ऋतुमिव वर्षाकालमिव वर्षा
कालस्य सूर्य्याच्छादकत्वेन क्लान्तश्रमभयापहारित्वात् साम्यं
प्रियवशाद्धर्य्यर्त्तिमेघादिति खः ॥ १०४ ॥

उपाग्न्यकुरुतां सख्यमन्योन्यस्य प्रियङ्करौ। क्षेमङ्क
राणि कार्य्याणि पर्य्यालोचयतां ततः ॥ १०५ ॥

उपाग्नीत्यादि। उपाग्नि अग्निसमीपे रामसुग्रीवौ सख्यमकुरु　ज०म०
तां इतःप्रभृत्यावयोः सख्यमिति अन्योन्यस्य प्रियङ्करौ क्षेमप्रियम
द्रेष्वण्चेति चकारात् खच् ततः सख्यकरणानन्तरं क्षेमङ्कराणि
हितजनकानि यथा कार्य्याणि प्रत्यालोचयतां निरूपितवन्ताावि
त्यर्थः। पठपुटेत्यत्र चुरादिकाण्डे धातौ लोचृ पठ्यते तस्य लङि
रूपं ॥ १०५ ॥

उपाग्नीत्यादि। रामसुग्रीवौ उपाग्नि अग्निसमीपे सख्यं मैत्रीं　भ०
अकुरुतां कीदृशं अग्निसाक्षिकं सख्यमिति भावः अन्योन्यस्य प्रिय
ङ्करौ प्रियं कुरुतइति क्षेमप्रियमद्रात्कृञ्वेति खः विकारसंघेति
सखिशब्दात् भावे यः ततः सख्यानन्तरं परस्परस्य क्षेमङ्कराणि
कुशलजनकानि कार्य्याणि पर्य्यालोचयतां निरूपितवन्तौ लो
चृदर्शनइत्यस्य ण्यां रूपं पूर्ववत् खः ॥ १०५ ॥

आश्रितभ्रवमुत्क्रुष्टं वल्गितं श्वयितं स्थितं। वक्र मन्यत काकुत्स्थः कपीनां स्वेच्छया कृतं ॥१०६॥

ज॰म॰ आश्रीत्यादि। आश्रितभ्रवमश्नं आश्रितेभुवःकरणभावयो रिति खच् उत्क्रुष्टं किलकिलायितं वल्गितं धावनं तथा श्वयितं स्थितञ्च कपीनां स्वेच्छया कृतं एतत्काकुत्स्थोवक्रमन्यत श्लाघितवान् पुण्यभाजइमे यदेषां स्वेच्छाविहारिणां चेष्टितं अस्माकन्तु शोकमग्नानां न किञ्चिदस्तीति सर्व्वत्र भावे निष्ठा ॥१०६॥

भ॰ आश्रितमित्यादि। आङ्पूर्व्वादश्नातेः क्तः आश्रितस्तद्ग्रभोजनस्य भवनं आश्रितभ्रवं भावधेत्वाश्रिताद्भुवइति खः उत्क्रुष्टं शब्दकरणं वल्गितं गमनं श्वयितं श्वयनं पूशीधृषेत्यादिना गुणः स्थितं अवस्थानं दोषीमास्थामिति क्तिः सर्व्वत्र भावे क्तः कपीनामेतत्सर्व्वं स्वेच्छया कृतं काकुत्स्थोवक्र अमन्यत स्तुतवान् पुण्या एते स्वेच्छयैवं व्यवहरन्ति अस्माकन्तु शोकमग्नानां न किञ्चिदस्तीति भावः स्वभावसिद्धत्वादाहार्य्यशोभारहितत्वात् प्रशंसा वा ॥१०६॥

ततोवलिन्दमप्रख्यं कपिर्विश्वम्भराधिपं। सुग्रीवः प्राब्रवीद्रामं वालिनोयुधि विक्रमं ॥१०७॥

ज॰म॰ ततइत्यादि। ततः कार्य्यालोचनानन्तरं सुग्रीवोऽब्रवीत् वक्तिर्द्विकर्म्मकः किमुक्तवान् वालिनोयुधि विक्रमं शौर्य्यमिति प्रधान

कर्म्म राममित्यकथितं कीदृशं रामं बलिन्दमप्रख्यं विष्णुतुल्यं बलिं दमयतीति संज्ञायां भृतृवृजीत्यादिना खच् अमन्तस्य मित्व ह्रस्वत्वे तथा विश्वं विभर्त्तीति विश्वम्भरा तस्या अधिपं अधिपातीत्यधिप. आतश्चोपसर्गइति कः ॥१०७॥

ततइत्यादि। कार्य्यालोचनानन्तरं सुग्रीवः कपिर्य्युधि संग्रामे बलिनो विक्रमं रामं प्राब्रवीत् रामं कीदृशं बलिन्दमप्रख्यं बलिं दमयतीति बलिन्दमस्त्रिविक्रमस्तेन तुल्यं तृभृवृदृत्यादौ ण्यन्त दमेर्ग्रहणं अरिन्दमइत्युदाहरणे कर्म्मोपपदेन सूचितं केवलस्य दमेरन्तर्भूतण्यर्थत्वात् सकर्म्मकत्वमिति केचित् अकर्म्मकोऽपि दमिरिष्यतइति गोयीचन्द्रेणोक्ता दमिला परिसंख्यातानितिनिदर्शितं विश्वं विभर्त्तीति विश्वम्भरा पृथ्वी पूर्व्ववत् खः तस्या अधिपं स्वामिनं अधिपातीत्यधिपः ह्लनजनादिति डः ॥१०७॥ भ०

वसुन्धरायां कृत्स्नायां नास्ति वालिसमोबली। हृदयङ्गममेतत्त्वां ब्रवीमि न पराभवं ॥१०८॥

इति खजधिकारः॥

वस्वित्यादि। वसुन्धरायां पूर्व्ववत् खच् वालिना समोऽन्योबली बलयुक्तोनास्तीति हृदयङ्गमं मम स्वानुभवं ब्रवीमि मम स्वानुभवं हि वस्तु हृदयङ्गममित्युच्यते तेन संज्ञायामित्यधिकृत्य, गमश्चेति खच् न पुनस्त्वां पराभवमभिभवं ब्रवीमि ॥१०८॥ ज०म०

भ० वस्वित्यादि। कृत्स्नायां समस्तायां वसुन्धरायां पृथिव्यां वालितुल्योबलवान् नास्ति वसु धरतीति तृभृवृ इत्यादिना खः एतत्तु हृदयङ्गमं आत्मानुभूतमेव त्वां ब्रवीमि हृदयं गच्छतीति पूर्व्ववत् खः अनुभूतस्येयं संज्ञा न पुनस्त्वां पराभवं न ब्रवीमि तस्माद्भवतः पराभवं न त्वां वदामि तेन नास्ति वालिसमोबलीति प्रागनुभूतं कथितं न तु त्वत्तोऽधिकोऽयमिति सम्प्रति ज्ञापितं। इति खमधिकारः॥१०८॥

दूरगैरन्तगैर्व्वाणैर्भवानत्यन्तगः श्रियः। अपि संक्रन्दनस्य स्यात् क्रुद्धः किमुत वालिनः॥१०९॥

ज०म० एवम्पराक्रमोऽसौ तत्र किं त्वं करिष्यसीत्याह दूरगैरित्यादि। यतोभवान् क्रुद्धस्सन् संक्रन्दनस्यापि शक्रस्यापि नन्द्यादिभ्योल्युः वाणैः करणभूतैः दूरगैः दूरं गच्छन्तीति अन्तगैः कार्य्य समापकैः अन्तात्यन्तेत्यादिना डः श्रियोलक्ष्म्याः अत्यन्तगः विनाशयिता स्यात् अत्यन्तं पर्य्यवसानं गच्छतीति किं पुनर्वालिनोलक्ष्म्या अत्यन्तगोभवान्विनाशयितेति॥१०९॥

भ० दूरगैरित्यादि। रामं प्रोत्साहयन्नाह भवान् क्रुद्धः सन् संक्रन्दनस्य इन्द्रस्यापि श्रियोलक्ष्म्यावाणैरन्तगोभवेत् किं पुनर्वालिनः श्रियः सुतरामेतस्यथानाशयिता स्यात् वाणैः कीदृशैः दूरगैर्दूरपातिभिः अन्तगैः कार्य्यसमापकैः दूरमन्तञ्च गच्छतीति हनजमाद्भमाद्दैः दितिगर्भं संक्रन्दितवान् इति नन्द्यादित्वादनः॥१०९॥

वरेण तु मुनेर्व्वाली सञ्जातोदस्युहारणे। अवार्य्य प्रसरः प्रातरुद्यन्निव तमोपहः॥११०॥

वरेणेत्यादि। मुनेस्तु वरेण दस्युहः दस्यून् शत्रून् बध्यादिति जःम० आशिषि हनइति डः अतोरणे अवार्य्यप्रसरोऽनभिभवनीयगतिः सञ्जातः कइव तमोपहइव तमोपहः आदित्यः तमोऽपहन्ती ति अपंक्लेशतमसोरिति डः प्रातः प्रभाते उद्यन् उद्गच्छन् उत्पूर्व्वादिणः शतरि इणो यण् अवार्य्यप्रसरस्तदवस्थावपि सर्व्वं वाक्यं सावधारणं भवतीति प्रातरप्युद्यन्नवार्य्यप्रसर एवेति तेन सर्व्वकाले अस्यावार्य्यप्रसरत्वं सिद्धं नतु प्रातरेवोद्यन्नवार्य्यप्रसरइति॥११०॥

वरेणेत्यादि। रामस्याध्यवसायं जिज्ञासुः पुनरपि वालिविक्रममाह मुनेर्व्वरेण तु दस्युहः सवाली रणेऽवार्य्यप्रसरः संजातः भ० काले उद्यन् तमोपहः सूर्य्यइव दस्यून् शत्रून् हन्तीति हनजनादिति डः हन्तेराशिषिडइति परे तन्मते वाली दस्यून् बध्यादिति मुनेर्व्वरेण अवार्य्यप्रसरोजातः स्वमते आशीरर्थानुक्तौ न क्षतिः वरेण दस्युहन्तृत्वे आशीर्गम्यतएव अवार्य्योऽखण्डनीयः प्रसरो गतिर्यस्य सतथा सृगतौ अनि रूपं उत्पूर्व्वस्येणः शतरि उद्यन् तमोऽपहन्तीति पूर्व्ववत् डः तमःक्लेशार्थेभ्योऽपपूर्व्वहन्तेर्डइति परः॥११०॥

अतिप्रियत्वान्न हि मे कातरं प्रतिपद्यते। चेतो वालिवधं राम क्लेशापहमुपस्थितं॥ १११॥

इति डाधिकारः॥

ज॰म॰ अतीत्यादि। हे राम मदीयं चेतोवालिवधं कर्म्मीभूतमुपस्थितं प्राप्तं न हि प्रतिपद्यते नैव प्रत्येति यस्मात् कातरं व्याकुलं वालिनोऽतिबलयुक्तत्वात् कीदृशं वधं क्लेशापहं दुःखस्योन्मूलकं पूर्व्ववड्डः अतिप्रियत्वाद्वालिवधस्य यस्य हि यत्प्रियं तत्सिद्धमपि असौ न प्रत्येति॥ १११॥

भ॰ अतीत्यादि। हे राम वालिवधस्यातिप्रियत्वात् मे मम चेतो वालिवधमुपस्थितमुपपन्नमपि न प्रतिपद्यते न प्रत्येति यतः कातरं बालिभयाद्व्याकुलं उपस्थितेऽपि प्रिये कातरस्य प्रतीतिर्नास्तीति भावः वालिवधं कीदृशं क्लेशापहं दुःखस्योन्मूलकं अतएवास्यातिप्रियत्वं क्लेशमपहन्तीति पूर्व्ववत् डः॥ १११॥

शीर्षघातिनमायातमरीणां त्वां विलोकयन्। पतिघ्नीलक्षणोपेतां मन्येऽहं वालिनः श्रियं॥ ११२॥

ज॰भ॰ उपस्थितोऽस्य वधइति कथं ज्ञायतइत्याह शीर्षेत्यादि। अरीणां शीर्षघातिनं कुमारशीर्षयोर्णिनिः निपातनात् शिरसः शीर्षभावः आयान्तं विलोकयन् वालिनः श्रियं पतिघ्नीलक्षणोपेतामहं मन्ये पतिं हन्ति यल्लक्षणं तेनोपेतामिवेतीवार्थोऽत्र द्रष्टव्यः अमनुष्यकर्तृकेचेति टक् गमहनेत्युपधालोपः होहन्तेरिति कुत्वं॥ ११२॥

शीर्षेत्यादि। वालिवधस्योपस्थितत्वं दर्शयन्नाह आगतं त्वां विलोकयन्नहं वालिनः श्रियं पतिघ्नलक्षणोपेतां मन्ये श्रियो वालिपत्नीत्वेन निरूपणात् पतिहन्तृचिह्नयुक्तत्वात् वालिवधो गम्यते पतिं हन्तीति हनष्टगष्टक् हनगमित्युङ्लोपः हनोघ्नो घ्नः अमनुष्यकर्तृकाङ्कन्तेष्टगिति परः त्वां किम्भूतं अरीणां शीर्षघातिनं शिरश्छेदिनं गृहादित्वाणिन् कुमारशीर्षाभ्यां हन्तेर्णिनिति परः उत्प्रेक्षाव्यञ्जकोऽत्र मन्येशब्दः अन्यथास्थितस्यान्यथा कथनात्॥ ११२॥　भ०

शत्रुघ्नान्युधि हस्तिघ्नोगिरीन् क्षिप्यन्नकृत्रिमान्। शिल्पिभिः पाणिघैः क्रुद्धस्त्वया जय्योऽभ्युपायवान्॥ ११३॥

शत्रुघ्नानित्यादि। किंच युधि संग्रामे वाली त्वया जय्यः शक्यो जेतुं यदि युष्मदस्त्राणां शक्तिर्दृष्टा ताश्च द्रष्टुमिच्छामीति वक्ष्यमाणाभिप्रायः जय्यजय्यौ शक्यार्थे इत्ययादेशनिपातनं कीदृशः अभ्युपायवान् युद्धोपाययुक्तः किं कुर्व्वन् क्रुद्धः क्षिप्यन् गिरीन् दिवादित्वाच्छ्यन् अकृत्रिमान् देवनिर्मितान् शत्रुघ्नान् शत्रून् हन्तीति अमनुष्येति टक् हस्तिघ्न इव हस्तिघ्नः हन्तुं शक्तः शक्तौ हस्तिकपाटयोरिति सूत्रस्य मनुष्यकर्तृकार्थारम्भकत्वात् वाली चामनुष्यः शिल्पिभिर्युद्धकुशलैः वानरैः सह क्षिप्यन् सहार्थस्य गम्यमानत्वात् सहयोगे तृतीया पाणिघैः पाणिवादकैः ते हि हस्तियुद्धेऽन्यस्य वाद्यस्यासम्भवात् हस्तिमुखमेव वादयित्वा गिरीन् प्रहरणान् क्षिपन्ति पाणिघताडघौ शिल्पिनीति कर्त्तरि निपातनं॥ ११३॥　ज०म०

भ० . अनुप्रानित्यादि। प्रत्ययजनककर्म्मद्वारा रामविक्रमं ज्ञातु मिच्छन् महतामग्रत: साचात् स्वाभिप्रायकथनायुक्तत्वात् छलेन रामं स्तुवन्नेवाह ईदृशोऽपि वाली त्वया अय्य: जेतुं शक्य: पण्या वद्येत्यादिना निपात: कीदृश: अभ्युपायवान् युद्धोपाययुक्त: क्रुध्यन् सन् गिरीन् चिपन् चिपौनु मुदि कीदृशान् अल्पचिमान् देवनिर्म्मितान् एतेन स्वभावसिद्धमुक्तितत्वं सूचितं अनुप्नान् चिप्य माणागिरय: अनुं घ्नन्ति अनुं हन्तुं गिरीन् चिपतीति भाव: पति घ्नवत् टक् पुन: कीदृश: हस्तिघ्न: हस्तिनं हन्तीति पूर्व्ववत् टक् हस्तिकपाटाभ्यां हन्ते: शक्तौ टगिति पर: तेन हस्तिनं हन्तुं शक्त इत्यर्थ: स्वमते अर्थादेव शक्तिर्गम्यते शिल्पिभिर्युद्धकुशलैर्वानरै रुपलक्षित: पाणिघै: पाणिवादकै: युद्धे तेषां वाद्यान्तराभावात् हर्षेण हस्तयुगमेव वादयन्ति विशेषणे तृतीया शिल्पिभि: सह गिरीन् चिपन् इति वा सम्बन्ध: एतेन तत्सदृशास्तत्सहाया अपि सन्तीति सूचितं पाणिभ्यां पाणौ हन्तीति पाणिघोनिपातनात् ॥११३॥

आढ्यङ्करणविक्रान्तोमहिषस्य सुरद्विष:। प्रियङ्करणमिन्द्रस्य दुष्करं कृतवान् वधं ॥११४॥

ज०म० आढ्य। अनाढ्यमाढ्यं करोत्यनेनेति आढ्यसुभगेत्यादिना करणे ख्युन् आढ्यङ्करणं विक्रान्तं यस्य वालिन: अनाढ्य: सन् विक्रान्तेनाढ्योभूतइत्यर्थ: महिषस्य सुरद्विषोदुन्दुभेर्वधं मरणं स: कृतवान् दुष्करं कष्टसाध्यं प्रियङ्करणमिन्द्रस्य तुष्टिकरं अप्रियं प्रियङ्करोत्यनेनेति पूर्व्ववत् ख्युन् ॥११४॥

आढ्यमित्यादि। किञ्च वाली युधि महिषस्य देवशत्रोर्वधं भ० कृतवान् कीदृशः अनाढ्यमाढ्यः क्रियते येन तादृशं विक्रान्तं विक्रमोयस्य सतथा अनाढ्यः सन्नपि विक्रमेणाढ्योभूतइत्यर्थः मग्न पलितेत्यादिना खनट् बधं कीदृशं इन्द्रस्य प्रियङ्करणं प्रीङ्प्रीतौ कगृह्यापीति कप्रत्यये प्रियः प्रीतिमान् महिषभयेन प्रागप्रियः प्रियः क्रियते अनेनेति पूर्व्ववत् खनट् प्रीतिजनकमित्यर्थः यद्वा इन्द्रोलोकानामप्रियआसीत् शत्रुबधाक्षमत्वात् पुनश्शत्रुब धेन तु प्रियः क्रियतइत्यर्थः यतो दुष्करं कष्टसाध्यं एतेन इन्द्रा दप्यधिकोऽयं बलीति सूचितं॥ ११४॥

प्रियम्भावुकतां यातस्तं क्षिपन् योजनं मृतं। स्वर्गे प्रियम्भविष्णुश्च कृत्स्नं शक्तोऽप्यबाधयन्॥ ११५॥

प्रियमित्यादि। तमेवं सुरद्विषं मृतं पादाङ्गुष्ठेन योजनमध्वानं ज०म० क्षिपन् क्षिपेर्लोदादिकस्योभयपदिनोरूपं प्रियम्भावुकतां यातस्त था स्वर्गे प्रियंभविष्णुश्चासीत् कर्त्तरि भुवइत्यनेनाढ्यादिषूपपदेषु खिष्णुच्खुकञौ शक्तोऽपि समर्थोऽपि कृत्स्नं लोकमित्यर्थात् अबा धयन् अपीडयन् बधसंयमनइति चौरादिकः तस्य शतरि रूपं यद्दृष्टशक्तया शक्योजेतुं यदि त्वदस्त्राणां सामर्थ्यं दृष्टमित्यभिप्रा येणाब्रवीत् सुग्रीवः॥ ११५॥

प्रियमित्यादि। तं मृतं महिषं पदाङ्गुष्ठेन योजनं अध्वानं भ० क्षिपन् प्रेरयन् प्रियम्भावुकतां प्राप्तः प्राक् यस्याप्रियआसीत् दुष्टबधात् तस्यापि प्रियभावं प्राप्तः बाधितुं शक्तः समर्थोऽपि

तत्त्वं शोकं मवाधयन् अपीडयन् स्वर्गस्य प्रियमासीत् तथापि प्रियोभूतः भुवोघेक्षिण्युत्सुकमाविति स्वार्थे क्षिणुत्सुकञौ वधक् मध्ये क्षिप्वापुरादिः योऽजनमध्येनाव योजनान्तरितदेशोऽस्य ते यदाध्वादिव्याप्ताविति योजनात् द्वितीया एवं सुग्रीवः प्राप्त वीड्रामसमिति प्रागुक्तेन सम्बन्धः॥ ११५ ॥

जिज्ञासोः शक्तिमस्त्राणां रामोन्यूनधियः कपेः।
अभिनत् प्रतिपत्त्यर्थं सप्त व्योमस्पृशस्तरून्॥ ११६ ॥

ज०म० रामोऽपि तदभिप्रायं विदन् यत्कृतवान् तदाह। जिज्ञासोरित्यादि। अस्त्राणांशराणां शक्तिं जिज्ञासोः ज्ञातुमिच्छोः कपेः सुग्रीवस्य न्यूनधियः स्वल्पबुद्धेः यतः प्रमाणान्तरेणापरिज्ञानात् प्रत्यक्षेण ज्ञातुमिच्छतीति प्रतिपत्त्यर्थं संप्रत्ययार्थं रामः सप्त तरून् तालान् पङ्क्त्या स्थितान् एकेन शरेणाभिनत् व्योमस्पृशः स्पृशो ऽनुदके क्विन्॥ ११६ ॥

भ० जिज्ञासोरित्यादि। यदि तवास्त्राणां भेदकत्वं दृष्टं स्यात्तदा त्वया तादृशोवाली जेतुं शक्यतइति सम्भाव्यतइति सुग्रीवाभिप्रायं रामोऽपि ज्ञातवान् यतोन्यूनबुद्धेरतएवास्त्राणां शक्तिं ज्ञातुमिच्छोः कपेः सुग्रीवस्य प्रतिपत्त्यर्थं सम्प्रत्ययार्थं रामः सप्त तालान् अभिनत् भिदेर्यो रुधादित्वात् श्नम् व्योमस्पृशः अत्युच्छ्रितानित्यर्थः व्योम स्पृशन्तीति चाप्नुवितीति क्विप् उदकवर्ज्जमुपपदात् स्पृशःक्विनिति परः॥ ११६ ॥

ततोवालिपशौ बध्ये रामर्त्विग्जितसाध्वसः। अभ्य भून्निलयं भ्रातुः सुग्रीवोभिनदन् दधृक्॥ ११७॥

तत इत्यादि। ततस्तदभेदादनन्तरं सुग्रीवोभ्रातुर्निलयम अभ्यभूत् अभिभूतवान् कीदृशः दधृक् धृष्टः ऋत्विगित्यादिना निपातितं धृषेः क्विन् द्विर्वचनं क्विन्प्रत्ययस्य कुरिति कुत्वं षकारः चर्त्वं ककारः यस्माद्वालिनि पशाविव बध्ये वधार्हे रामेण ऋत्विजा याजकेन जितसाध्वसः अपनीतसाध्वसः तस्माद्धृक् ऋतौ यजति ऋतुं वा यजति ऋतुप्रयुक्तोवा यजतीति ऋतुपूर्व्वाद्यजेः क्विन् यजादित्वात्संप्रसारणम् इदन्तलिकशब्दनिर्व्वचनं रूढितस्तु याजयितृषु ब्राह्मणेषु क्विन्प्रत्ययस्य कुः निनदन् कित्वकित्वाशब्दं कुर्व्वन् ॥११७॥ ज०म०

तत इत्यादि। प्रत्ययानन्तरं सुग्रीवोनिनदन् शब्दं कुर्व्वन् भ्रातुर्व्वालिनोनिलयं निवासं अभ्यभूत् अभिभूतवान् भुवश्चिवेति सेर्लुक् वालिनि पशाविव बध्ये सति रामेणैव ऋत्विजा याजकेन जितमपनीतं साध्वसं भयं यस्य येन वा सतथा अतएव दधृक् धृष्टः ऋतौ यजतीति चासुपिति क्विप् यजस्वपादेरिति जिः ऋत्विगिति कुः धृषप्रागल्भ्ये क्विपि दधृक् दहत्युष्णवागित्यादिना निपातः ऋत्विजा पशुरपि हन्यतइति भावः॥ ११७॥ भ०

गुहायानिरगाद्वाली सिंहोमृगमिव ध्रुवन्। भ्रातरं युद्धिप्रयः संख्ये घोषेणापूरयन्दिशः॥ ११८॥

ज॰म॰ गुहायादित्यादि। तस्य शब्दमाकर्ण्य गुहायानिरगाद्वाली निर्गतः इणोगा लुङि गातिस्थेति सिचोलुक् भ्रातरं द्युवन् अभिगच्छन् द्युअभिगमने अस्मादादिकस्य वर्त्तमानसामीप्ये लटः शतरि उवङादेशे रूपं संख्ये युद्धे भियोयुङ् भीतेर्योक्ता कर्म्मणिष्ठत् भीतिं युञ्जन्नित्यर्थः युजेः पूर्ब्बवत् क्विन् युजेरसमासइति नुम् संयोगान्तलोपः क्विन्प्रत्ययस्य कुः ङकारः कः कमिव सिंहोमृगमिव द्युवन् घोषेण दिशआपूरयन् दिशन्ति ताइति दिशः पूर्ब्बवत् क्विन् ॥ ११८ ॥

भ॰ गुहेत्यादि। सुग्रीवस्य शब्दं श्रुत्वा वाली गुहायाः सकाशात् निरगात् निर्गतः इणोगाश्चां भूस्थापिवदेणइति सेर्लुक् सिंहो यथा मृगं द्यौति तद्वत् भ्रातरं द्युवन् आभिमुख्येन गच्छन् द्युस भिसर्पणे भविष्यत्सामीप्ये की अभिधानात् संख्ये युद्धे भियोयुङ् भयस्य प्रयोक्ता भयप्रदइत्यर्थः युजेः क्विप् युजिरोऽसेनुन्घा विति नुण् ङित्यादौ युजेःपृथक्ग्रहणात् प्राङ्ङ् सोर्नुः ङपेन्नम् नोरिति ङः स्यान्तस्य लुप् घोषेण शब्देन दिशआपूरयन् दिशतीति दिक् त्रासुषिति क्विप् ॥ ११८ ॥

व्यायच्छमानयोर्मूढो भेदे सदृशयोस्तयोः। बाणमुद्यतमायंसीदिक्ष्वाकुकुलनन्दनः ॥ ११९ ॥

ज॰म॰ व्यायच्छेत्यादि। तयोर्व्वालिसुग्रीवयोर्व्यायच्छमानयोः कलहायमानयोः सदृशयोः समानयोः भेदे पृथक्त्वे मूढोश्चान्तः सन्

इक्ष्वाकुकुलनन्दनो रामो वाणमुद्यतं सज्जीकृतमायंसीत् उपसंहृतवान् समदाङ्भ्योयमो ग्रन्थ इति तङ् न भवति अकर्त्रभिप्रायत्वात् तत्र कर्त्रभिप्राय इति वर्त्तते आङो यमहन इत्यनेनापि न स्यात् सकर्म्मकत्वात् तत्राकर्म्मकादिति वर्त्तते समानपूर्व्वस्य दृशेः समानान्ययोश्चेत्युपसंख्यानात् त्यदादिष्वित्यादिना कञ् दृग्दृशवतुष्विति समानस्य सभावः॥ ११८॥

व्यायेत्यादि। इक्ष्वाकुकुलनन्दनो रामस्तयोर्वालिसुग्रीवयो भेदे विवेचने मूढः भ्रान्तः सन् वालिवधायोद्यतं कृतसन्धानमपि वाणं सुग्रीववधशङ्कया आयंसीत् संहृतवान् यमरमणमात इति इमसनौ कीदृशयोस्तयोः व्यायच्छमानयोः कलहायमानयोः युध्यमानयोर्व्वा आत्माकृढादङावाहनयम इति न मं सदृशयोरा कृत्या अन्योन्यं तुल्ययो मूढत्वे हेतुरयं समानो दृश्यत इति त्यदादिना टक् समानेदं किमद इति समानस्य सादेशः॥ ११९॥ भ०

ऋष्यमूकमगात् क्लान्तः कपिर्मृगसदृग्द्रुतं। किष्किन्ध्याद्रिसदात्यर्थं निष्पिष्टः कोष्णमुच्छ्वसन्॥ १२०॥

ऋष्यमूकमित्यादि। कपिः सुग्रीवः किष्किन्ध्याद्रिसदा वालिना किं किं दधातीति किष्किन्धा गुहा आतो ऽनुपसर्गे कः पारस्करादिदर्शनात् पूर्व्वस्य सुडागमो मलोपः षत्वञ्च निपात्यते तदुपलक्षितो ऽद्रिः किष्किन्धाद्रिः तत्र सीदतीति सत्सूद्विषेत्यादिना क्विप् तेनात्यर्थं निष्पिष्टत्वात् क्लान्तः सन् ऋष्यमूकं द्रुतमगात् समानोपपदात् दृशेः पूर्व्ववत्क्विन् कोष्णमीषदुष्णमुच्छ्वसन् कवञ्चोष्ण इति चकारात् कोः कादेशः॥ १२०॥ अ०भ०

भ० ऋष्येत्यादि। कपिः सुग्रीवः किष्किन्धाद्रिसदा वालिना अत्यर्थं निष्पिष्टः पीडितः अतएव क्लान्तः सन् कोष्णं ईषदुष्णं ऋष्यमूकम् द्रुतं शीघ्रं ऋष्यमूकं अगात् गतवान् मृगसदृक् पलायने द्रुतगमनात् मृगतुल्यः क्विपि सदृक् सदृशवत् किखि भर्व्वानरैभिरिष्यत इति इत्भेर्व्यन्तात् घञलनट इति अल् निपातनात् किखेः किष्का देशः किं किं दधातीति किष्किन्धेत्यन्ये किष्किन्धामूर्द्धन्यषकारवती षकारोपान्तापि किष्किन्ध्येति श्रीपतिः किष्किन्धा गुहा तदुपलक्षितोऽद्रिस्तत्र सीदतीति चासुषिति क्विप्॥१२०॥

कृत्वा वालिद्रुहं रामो मालया सविशेषणं। अङ्गदस्वं पुनर्हन्तुं कपिनाह्वाययद्रणे॥१२१॥

ज०म० कृत्वेत्यादि। वालिद्रुहं सुग्रीवं वालिनं द्रुह्यतीति सत्सित्यादिना क्विप् मालया सविशेषणं सचिह्नं कृत्वा भेदपरिज्ञानार्थं रामः अङ्गदस्वं वालिनं अङ्गदं सूतइति पूर्व्ववत्क्विन् श्वोस्सुपीतिः यणादेशः तं रणे हन्तुं कपिना सुग्रीवेणाह्वाययत् अभिभवं कारितवान् ह्वयतेर्हेतुमण्णिचि शाछेत्यादिना युक्॥१२१॥

कृत्वेत्यादि। वालिद्रुहं सुग्रीवं वालिभेदज्ञानाय मालया सविशेषणं सचिह्नं कृत्वा रामोऽङ्गदस्वं वालिनं रणे हन्तुं कपिना सुग्रीवेण पुनराह्वाययत् आह्वानमकारयत् घोऽत्रौञ्जेरित्यादौ अखादनीक्रन्दायशब्दायह्वादेति वर्ज्जनात् ण्यन्तस्य कर्त्तुः कपेर्न कर्म्मत्वं शाछासाह्वेत्यादिना यक् अङ्गदं सूते जनयतीति चासुषित्यादिना क्विप् कत्वाद्यनेकाचइति वत्वं वालिने द्रुह्यतीति पूर्व्ववत् क्विप्॥१२१॥

तयोर्व्वानरसेनान्योः संप्रहारे तनुच्छिदं। वालिनोदूरभाग्रामोबाणं प्राणादमत्यजत्॥ १२२॥

तयोरित्यादि। वानरसेनान्योः वानरस्वामिनोः एरनेकाच इति यण् संप्रहारे युद्धे प्रवृत्ते रामोबाणमत्यजत् वालिनस्तनुछिदं तनुं शरीरं छिनत्तीति पूर्व्ववत् क्विप् छेचेति तुक् प्राणादं प्राणापहारिणं प्राणानत्तीति प्राणादं अदोनन्नइति विट् दूरभाक् दूरमवस्थितोरामोदूरं भजतइति भजोण्विः॥ १२२॥ ज०म०

तयोरित्यादि। तयोर्व्वानरसेनानामीश्वरयोः संप्रहारे युद्धे प्रवृत्ते सति दूरभाक् दूरदेशस्थितोरामोवालिनस्तनुच्छिदं अतएव प्राणादं प्राणभक्षकं बाणं अत्यजत् क्षिप्तवान् सेनां नयति तनुं शरीरं छिनत्ति प्राणानत्तीति च चासुषिति क्विप् अत्तेरनन्नात् क्विबिति परः दूरं भजतइति ठाक्लजसहवहोविण्॥ १२२॥ भ०

वालिनं पतितं दृष्ट्वा वानरारिपुघातिनं। बान्धवाक्रोशिनोभेजुरनाथाः ककुभोदश॥ १२३॥

वालिनमित्यादि। रिपुघातिनं रिपून् हन्तुं शीलमस्येति सुप्यजातौ णिनिः तं वालिनं पतितं दृष्ट्वा वानरादश ककुभोदश दिशोभेजुः अनाथाः सन्तः स्वामिनोहतत्वात् बान्धवक्रोशिनोबान्धवादव क्रोशन्तीति कर्त्तर्य्युपमानइति णिनिः॥ १२३॥ ज०म०

वालिनमित्यादि। वालिनं पतितं दृष्ट्वा वानरादश ककुभो दिशोभेजुः पलायिताइत्यर्थः रिपुघातिनं विपुं हन्तीति ग्रहादि भ०

त्वाचिन् बान्धवाक्रोशिन: बान्धववत् आक्रोशन्त: क्रन्दन्त: कर्त्त र्य्युपमानेणिनिति पर: स्वमते ग्रहादित्वाणिन् इवार्थस्य गम्य मानत्वं अनाथा: वालिनाशेन स्वामिरहिता: ॥ १२३ ॥

धिग्दाशरथिमित्यूचुर्मुनयो वनवर्त्तिन:। उपेयु र्मधुपायिन्य: क्रोशन्त्यस्तं कपिस्त्रिय: ॥ १२४ ।

ज०म० धिग्दाशरथिमित्यादि । येषां सत्यन्यस्थाने वृत्तौ च वनएव वर्त्तितुं शास्त्रतोनियम: ते वनवर्त्तिनोमुनय: अतइति णिनि: धिगिमं दाशरथिमित्यूचु: उक्तवन्त: येनानपराधेऽपि वालिनो हृशं कृतमिति कपिस्त्रियश्च वालिनमुपेयु: मधुपायिन्य: आभी क्ष्ण्येन मधु पिवन्त्य: वहुलमाभीक्ष्ण्येइति णिनि: क्रोशन्त्योहा नाथेति रुदन्त्य: ॥ १२४ ॥

भ० धिगित्यादि । दाशरथिं रामं धिगिति वनवर्त्तिनो मुनयऊचु: महतामन्यासक्तघातित्वानौचित्यात् धिक्समयेत्यादिना दाश रथेर्द्वितीया वने वर्त्तन्तइति ग्रहादित्वात् णिन् कपिस्त्रिय: क्रोश न्त्यो हा नाथेति क्रन्दन्त्यस्तं वालिनं उपेयुरुपगता: उपपूर्व्वस्येण श्चाउसि रूपं मधुपायिन्य: मधूनि पीतवत्य: ग्रहादित्वात् णिन् यन्त्रिलुत्कृदिति यन् परमते तु आभीक्ष्ण्ये तु णिन् पुन:पुनर्मधु पिवन्ति स्मेत्यर्थ: आभीक्ष्ण्यार्थस्य णिनोक्तत्वात् न दित्वं स्वमतेऽप्य भिधानादेव ॥ १२४ ॥

रामपुच्छैरुपालब्ध शूरमानी कपिप्रभु: । प्रणवेदन या म्लायन् साधुम्मन्यमसाधुवत् ॥ १२५ ॥

रामभित्यादि। कपिप्रभुर्बाली राममुच्चैर्महता शब्देनोपालब्ध जे०म० उपालब्धवान् लभिरात्मनेपदयनिट् तस्य लुङि झषस्तथोरिति धत्वे लोपः झषस्तथोर्धोधः झलाञ्जश्झशि शूरमानी शूरमात्मानं मन्यमानः आत्ममाने खश्चेति चकाराण्णिनिः अणवेद्गया म्लायन् म्लानिमुपगच्छन् साधुमन्यं साधुमात्मानं मन्यमानं रामं तेनैव खश् तस्मिन् सार्व्वधातुके परतो दिवादित्वाच्छ्यन् पूर्व्वपदस्य मुम् असाधुवदसाधुमिव असाधुना तुल्यं वर्त्तते इति वतिः॥ १२५॥

रामभित्यादि। अणवेद्गया म्लायन् कपिप्रभुर्बाली उच्चैः भ० शब्देन राममुपालब्ध निन्दितवान् लभेस्तनि झषस्ताजत्सीति सेर्लोपः ढभाम्तथोरिति तस्य धः झपस्थोरिति भस्य वः शूर मानी आत्मानं शूरमन्यमानः अभिधानात् मन्यतेरात्मनोम नने णिन् यद्वा शूरसम्बन्धिमानोविद्यतेऽस्येति नैकाजाद्विति इन् वीराभिमानवानित्यर्थः शूरश्चासौ मानी चेति वा रामं कीदृशं साधुमन्यं साधुमात्मानं मन्यमानं भ्रातृवधूहरणेनोचि तस्य दण्डस्यैव करणात् मन्यात्स्वार्थेइति खश् श्यित्वाद्हले दिवा दित्वात् श्यन् खित्यव्याजिति मम् असाधुवत् असाधुना तुल्यं असा धात् हननात् चक्षम्यइति चत् असाधुं यथा निन्दति तथोपा लब्धेति वा॥ १२५॥

मृषासि त्वं हविर्योजी राघव च्छद्मतापसः। अन्य व्यासक्तघातित्वाद्ब्रह्मघ्नां पापसम्मितः॥ १२६॥

ज॰म॰ वृथायीत्यादि। हे राघव त्वं छद्मना तापसः सन् वृथैव मिथ्यैव हविर्याजी हविषा करणेनेष्टवानसि न लोकप्राप्तभवद्दत्यभिप्रायः करणेयज इति भूते णिनिः इतःप्रभृति भूतइत्यधिक्रियते यतो ब्रह्मघ्नां पापसंमितः ब्रह्म हतवन्त इति ब्रह्मेत्यादिना क्विप् तेषां पापेन तुल्यः कुतः अन्यव्यासक्तघातित्वात् अन्यस्मिन् सुग्रीवे व्यासक्तं मां हतवान् कर्मण्यहन इति णिनिः तत्र कुत्सितग्रहणं कर्त्तव्यमित्युक्तं यदि सुग्रीवेण विरोधः किं तवायातमिति कुत्सितहननं ॥ १२६ ॥

भ॰ वृथेत्यादि। हे राघव त्वं हविर्याजी वृथा स्वर्गादिफलावाप्त्ये हविषा करणेन इष्टवानिति मिथ्या यज्ञादित्वात् णिन् करणे यजो भूतेऽर्थिस्मिति परः स्मृते करणादिर्भूतकालस्य विशेषा मुक्तेरर्थाद्गम्यते यतश्छद्मना तापसः तपस्वी न तु वस्तुतः अन्यव्यासक्तघातित्वात्त्वं ब्रह्मघ्नां ब्रह्माणं हतवतां पापसम्मितः पापेन सम्मितस्तुल्यः तुल्यपापाश्रयत्वात् पुरुषोऽपि तुल्य इत्युच्यते पापेन करणभूतेन ब्रह्मघ्नां तुल्य इत्यन्वयः अन्यस्मिन् सुग्रीवे व्यासक्तं हतवानिति यज्ञादित्वाणिन् कर्मणो हनःकुत्सायामिति परः हनस्तक् च्चेर्नोऽग्नितिपेति घः ततस्तो भाव इति त्वं ब्रह्माणं हतवानिति चासुपिति क्विप् ब्रह्मभूणवृत्रात्क्विप्नोऽभूत इति परः स्मृते अविशेषात् कालत्रयं प्राप्तमत्रातीतविवक्षा सदानोऽसोपद्दत्याकारलोपे हनोऽब्जः ॥ १२६ ॥

पापकृत्सुकृतां मध्ये राज्ञः पुण्यकृतः सुतः। माम पापं दुराचार किं निहत्याभिभाषसे ॥ १२७ ॥

तदेव दर्शयन्नाह पापेत्यादि। हे दुराचार मामपापं निहत्य पापकृत् कृतकिल्बिषः राज्ञोदशरथस्य पुण्यकृतः सुतः सुकृतां मध्ये किमभिधास्यसि वक्ष्यसि किं चेपे न किञ्चिदभिधानव्यमस्तीतिभावः सर्व्वत्र सुकर्म्मपापेत्यादिना क्विप्॥ १२७॥ ज॰म॰

पापेत्यादि। हे दुराचार अपापं मां निहत्य सुकृतां शोभनक्रियावतां मध्ये किमभिधास्यसि किं वक्ष्यसि यतस्त्वं पुण्यकृतो दशरथस्य सुतः पुत्रोऽपि भूत्वा पापकृत् पापं सुष्ठु पुण्यञ्च कृतवानसि आसुसित्यादिना क्विप् पुण्यादेः कर्म्मणः सोश्चकृञः कर्त्तरि भूतइति परः स्वमतेऽविशेषात् सर्व्वं विवक्षितं॥ १२७॥ भ॰

अग्निचित्सोमसुद्राजा रथचक्रचिदादिषु। अनलेष्विष्टवान् कस्मान्न त्वयापेक्षितः पिता॥ १२८॥

अग्निचिदित्यादि। कस्मात्त्वया पिता नापेक्षितः नानुवृत्तः येनैवं कृतवानसीति कीदृशः अग्निचित् आहिताग्निः अग्निं चितवानिति अग्नौचेरिति क्विप् सोमसुत् सोमं सुतवान् सोमयाजी सोमेसुञइति क्विप् अनलेषु अग्निषु इष्टवान् रथचक्रचिदादिषु रथचक्रवच्चीयतइति कर्म्मण्यग्न्याख्यायामिति क्विप् आदिशब्दाच्छ्येनचिदादिग्रहणं अग्न्यर्थोहि तदाकारइष्टकाचयइत्युच्यते तद्धारेणाग्निरपि॥ १२८॥ ज॰म॰

अग्नीत्यादि। कथं त्वया पिता दशरथोराजा नापेक्षितः न चिन्तितः नानुवृत्तोवा येनैवं कृतमिति भावः अग्निचित् आहिताग्निः सोमसुत् सोमयाजी रथचक्रचिदादिषु अग्निविशेषेषु भ॰

दृष्टवान् कृतयज्ञः अग्निं चितवान् सोमं सुतवान् रथचक्रवच्चो चते इति च चासुचित्यादिना क्विप् रथचक्रचिदादिश्चित्यादि शब्दात् श्येनचिदादिष्वपि अन्यर्थो रथचक्राद्याकार इष्टकार चनाविशेषः क्रियते तद्वारेणाग्निरपि रथचक्रचिदादितयाख्य परिदृश्यते दृष्टवानिति यजेः क्तवतुः पदस्रपाद्योरिति जिः ॥ १२८ ॥

मांसविक्रयिणः कर्म्म व्याधस्यापि विगर्हितं। मां घ्नता भवताकारि निःशङ्कं पापदृश्वना ॥ १२९ ॥

ज॰म॰ मांसेत्यादि। मांसविक्रयिणः कुत्सितकर्मकारिणो व्याधस्यापि विगर्हितं निन्दितं कर्मणोनिर्विक्रियइति इनिः तत्र कुत्सितग्रहणं कर्त्तव्यमित्युक्तं निकृष्टकर्मकरणेनेति यद्भवता पापदृश्वना पापं दृष्टवता दृशेः क्वनिप् नसंयोगाद्वमन्तादिति अल्लोपप्रतिषेधः कर्म अकारि कृतं कर्मणि लुङ् निःशङ्कं शङ्कां त्यक्त्वा किं कुर्व्वता मां घ्नता मारयता हन्तेः शतरि गमहनेत्युपधालोपः होहन्तेरिति कुत्वं ॥ १२९ ॥

भ॰ मांसेत्यादि। मांसविक्रयिणोव्याधस्यापि यद्विगर्हितं कर्म तत्त्वया मां घ्नता निःशङ्कं शङ्कां त्यक्त्वा कृतं पापदृश्वना पापं दृष्टवतापि पापानभिज्ञेन मांसोपजीविना व्याधेनापि अन्यासक्तस्य निष्प्रयोजनत्वादानरस्य च हननं निन्द्यते भवता तु पापं जानतापि तत्कृतमिति भावः व्याधस्येति कर्त्तरि सम्बन्धविवक्षा यदा व्याधस्यापीदृशं कर्म लोकैर्विशेषेण निन्दितमित्यर्थः मांसविक्रयी

ऽस्थास्तीति नैकाजादिति इन् विक्रीणातेर्भूते कुत्सायामिति परः तन्न साधु अत्र व्याधस्य मांसविक्रयणे कुत्साया अभावात् दृशेस्त्वा सुवित्यादिना क्वनिप् ॥ १२९ ॥

बुद्धिपूर्व्वं ध्रुवन्न त्वा राजकृत्वा पिता खलं। सह युध्वानमन्येन योऽहिंनोमामनागसं ॥ १३० ॥

बुद्धिपूर्व्वमित्यादि। त्वत्पिता त्वां खलं असाधुचरितं ध्रुवन् गच्छन् ध्रुगतिस्थैर्य्ययोरिति रुदादौ पठ्यते तस्य गतौ ज्ञानार्थे वर्त्तमानस्य शतरि विकरणलोपे उवङादेशे रूपं यन्न राजकृत्वा कस्य तवेत्यर्थात् राजनियुधिकृञ इति क्वनिप् तत्तस्य बुद्धिपूर्व्वं ध्रुवमवश्यं तस्येति व्याख्याने कृत्प्रयोगे कर्म्मणि षष्ठ्या भवितव्यं यस्त्वं मामनागसमपापमन्येन सह युध्वानं अन्येन सुग्रीवेण सह योद्धुं प्रवृत्तं सहेचेति क्वनिप् अहिनः हिंसितवान् हिंसेर्लङि मध्यमपुरुषैकवचने अमि,श्नान्नलोपे हल्ङ्यादिलोपे रूले च रूपं ॥ १२० ॥ ज०म०

बुद्धीत्यादि। खलं दुष्टचरितं त्वां पिता दशरथो यन्न राजकृत्वा राजानं न कृतवान् तद्बुद्धिपूर्व्वं खलमविज्ञानपूर्व्वकमेव ध्रुवं निश्चितं त्वासुवित्यादिना कृञः क्वनिप् खस्यतनपिति दीर्घोषीनामित्यादिना त्वादेशः क्वचिदपवादविषयेऽप्युत्सर्गोऽपि प्रवर्त्तत इति न्यायात् ढचेक्वतीत्यस्य विषयेऽपि कर्म्मकियेत्यादिना द्वितीया केचित्तु ध्रुविस्थैर्य्ये इत्यस्य शतरि ध्रुवन् धातूनामनेकार्थत्वात् ज्ञानार्थः पिता त्वा खलं ध्रुवन् यन्न राजकृत्वा अर्थात्तव तद्बुद्धि भ०

पूर्व्वमित्याहुः अन्ये तु इति निषेधे आग्रहः अरण्ये पीडायां वा राजहंसेत्य च तवेत्यर्थाद्गम्यते नञः प्रश्नेषात् अवलमिति मामि त्यस्य वच्यमाणस्य विशेषणमित्याहुः खलमाह यस्त्वं मां अहि नो हतवान् कीदृशं अन्येन सुग्रीवेण सह युध्यानं योद्धुं प्रवृत्तं युधेः पूर्व्ववत् क्वनिप् अनागसं अनपराधं अहिनइति हिंसिहिं सायां ध्याः क्विप् रुधादित्वात् अम् ननोनलोपइति इदनुबन्ध जन्यनकारस्य लोपः हसङ्यादिसेरिति सेर्लोपः॥ १३० ॥

पञ्च पञ्चनखाभक्ष्या ये प्रोक्ताः कृतजैर्द्विजैः। कौशल्याज शशादीनां तेषां नैकोऽप्यहं कपिः॥ १३१ ॥

ज०म० मांसार्थं हतइति चेदाह पञ्चपञ्चेत्यादि। हे कौशल्याज कौशल्याजात सप्तम्यां जनेर्डः ये पञ्च पञ्चनखाः शशकः शल्लकी गोधा खड्गी कूर्म्मश्च पञ्चमइति कृतजैः कृतयुगजातैः सप्तम्यां जनेर्डः द्विजैर्द्विजातैः अन्येष्वपि दृश्यतइति डः सप्तम्यामित्युपलचणं असप्तम्यामपि दृश्यते भक्ष्याः भक्षणीयाः प्रोक्ताः तेषामहमेकोऽपि न भविता अहं कपिः तत्किमिति हतोऽहं त्वयेति॥ १३१॥

भ० पञ्चेत्यादि। राजभिर्म्मांसाय मृगाहन्यन्तइति समानं निराकुर्व्वन्नाह हे कौशल्याज ये पञ्चनखाः पञ्च शशकः शल्लकी गोधा खड्गी कूर्म्मश्च पञ्चमइत्यादिवाक्येन कृतजैः सत्ययुगजातै र्द्विजैर्महर्षिभिर्भक्षणयोग्याः प्रोक्ताः कथिताः तेषां शशादीनां मध्ये अहं नैकोऽपि यतःकपिरहं अतोऽभक्ष्यत्वान्मम वधोव्यर्थएव कौशल्यायाः सकाशाज्जातः कृते जातः द्विर्जातइति च हनजना दिति डः पैतृकधर्म्मग्राहितया कुत्सार्थं मातुरुत्कीर्त्तनं॥ १३१ ॥

कथं दुष्टः स्वयं धर्मे प्रजास्त्वं पालयिष्यसि। आत्मानुजस्य जिह्रेषि सौमित्रेस्त्वं कथन्न वा॥ १३२॥

कथमित्यादि। स्वयमात्मना धर्मे दुष्टः दुस्थः सन् अपद्‌ः सुपुस्थइत्यौणादिकः कुप्रत्ययः कथं प्रजाः पालयिष्यसि नैवेति भावः उपसर्गेचसंज्ञायामिति जनेर्डः कथं वा सौमित्रेर्भ्रातुरात्मानुजस्य कनीयसः आत्मानमनुजात इत्यनौ कर्मणि इति डः न जिह्रेषि न लज्जसे॥ १३२॥ ज०म०

कथमित्यादि। त्वं कथं प्रजाः पालयिष्यसि अपि तु नैवेति भावः यतः स्वयमात्मनो धर्मे दुःस्थः दुःखेन तिष्ठतीति ष्ठनजनादिति डः दुष्ठुरिति पाठे औणादिकः कुप्रत्ययः'षलक्षाभिधानात् प्रजायन्तइति प्रजालोकाः पूर्व्वेण डः स्त्रीलं संज्ञा पाभिधानात् आत्मानुजस्य सौमित्रेः कथं न वा जिह्रेषि न लज्जसे आत्मानमनुजातइति पूर्व्ववत् डः॥ १३२॥ भ०

मन्ये किञ्जमधं घ्नन्तं त्वामक्षत्रियजे रणे। लक्ष्मणाधिज दुर्वृत्तं प्रयुक्तमनुजेन नः॥ १३३॥

मन्यइत्यादि। किञ्जं त्वामहं कुतोऽपि जातं न राजजातं मन्ये पञ्चम्यामजाताविति डः घ्नन्तं मारयन्तं अक्षत्रियजे रणे अक्षत्रियादजाते हे लक्ष्मणाधिज लक्ष्मणाग्रज नोऽस्माकमनुजेन भ्रात्रा प्रयुक्तं जातावपि दृश्यते अक्षत्रियजइति उपसर्गे च संज्ञायामित्युक्तं असंज्ञायामपि दृश्यते लक्ष्मणाधिजइति अनौकर्मणीत्युक्तं अकर्मण्यपि दृश्यते अनुजइति सर्व्वत्रान्येष्वपि दृश्यतइति डः इत्युपपदाधिकारः॥ १३३॥ ज०म०

भ॰ मन्येइत्यादि। हे लक्ष्मणाधिज हे दुर्वृत्त दुश्चरित्र अहं त्वां किञ्च कुतोऽपि जातं कुत्सिताद्वा जातं मन्ये न तु राज्ञोजातं यतः अक्षत्रियजे क्षत्रियादजाते रणे मां घ्नन्तं मारयन्तं अस्माकमनुजेन कनिष्ठेन सुग्रीवेण प्रयुक्तं सर्व्वत्र जनजनादिति जनेर्डः परे तु विशेषसूत्राण्युक्त्वा अन्यत्रापि दृश्यतइत्यनेन तेषां प्रायिकत्वं बोधयन्ति तथाहि पञ्चम्यमादजातेर्डः इत्यस्य किञ्जइत्युदाहरणं जातेरपि अक्षत्रियजइत्युदाहृतं उपसर्गात् संज्ञायामित्यस्य प्रजास्त्वं पालयिष्यसीत्युदाहृतं असंज्ञायामपि अधिज इति कर्म्मणोऽनेरित्यस्य आत्मानुज मा जिह्वेषीत्युदाहरणं अकर्म्मणोऽपि अनुजइति अतएव मद्वाधिया वापदेवेन विशेषिणाक्तः ॥१२३॥

प्रत्यूचे वालिनं रामोनाकृतं कृतवानहं। यज्वभिः सुत्वभिः पूर्व्वैर्जरद्भिश्च कपीश्वर ॥१२४॥

ज॰म॰ प्रत्यूचइत्यादि। रामोऽपि वालिनं प्रत्यूचे प्रत्युक्तवान् किमित्याह हे कपीश्वर पूर्व्वैर्जरद्भिर्वृद्धैः जीर्य्यतेरतृन् यज्वभिः याज्ञिकैः सुत्वभिः सोमयाजिभिः सुयजोर्ङ्वनिप् नाकृतं कृतवानहं अपि तु कृतमेव कृतवानहं निष्ठेति भूते क्तक्तवतू॥१२४॥

भ॰ प्रत्यूचइत्यादि। रामोवालिनं प्रत्यूचे किं प्रत्युक्तवानित्याह हे कपीश्वर यज्वभिर्याज्ञिकैः सुत्वभिः सोमपीतिभिः पूर्व्वैर्जरद्भिर्वृद्धैर्मान्धातृप्रभृतिभिर्यन्न कृतं तदहं न कृतवान् दृष्टवानिति

आसुषिति वनिप् सुत्वानिति क्वनिप् स्वस्वतन्पिति जीर्य्यतीति शतृः जीनोजीर्णोजरन्नपीत्यमरः ॥ १२४ ॥

ते हि जालैर्गले पाशैस्तिरश्चामुपसेदुषां। ऊषुषां परदारैश्च सार्द्धं निधनमैषिषुः ॥ १२५ ॥

तेहीत्यादि। हि यस्मात्ते पूर्व्ववृद्धाजालैर्गले पाशैश्च तिरश्चां मृगपक्षिसरीसृपाणां तिरोऽञ्चतीति ऋत्विगित्यादिना क्विन् आनि अचइत्यल्लोपः तेषां निधनं विनाशमैषिषुः इच्छवन्तः इषेर्लुङि रूपं कीदृशं उपसेदुषां समीपमुपगतवतां तेषां समीपवर्त्तिनाम् पद्रवकारित्वात् भाषायामिति क्वसुः परदारैश्च सार्द्धमूषुषां उषितवतां पूर्व्ववत्क्वसुः वसेर्यजादित्वात्संप्रसारणं ॥ १२५ ॥ ज॰म॰

तेहीत्यादि। पूर्व्वोक्ते हेतुरयं हि यस्मात् तेऽपि पूर्व्वे वृद्धास्तिरश्चां पक्षिमृगादीनां जालैर्गले पाशैश्च निधनं ऐषिषुः इच्छन्ति स्म न केवलं तिरश्चां परदारैः परस्त्रीभिः सार्द्धं ऊषुषां कृतनिवासानाञ्च परदारैः सह वासमपिमश्लोके वच्यति अतएव वध्यत्वप्रतिपादकं रूपद्वयमेव त्वय्यस्ति उभयविशेषणमाह उपसेदुषां समीपमुपगतानां स्ववाक्यस्थितानामपीत्यर्थः केचित्तु परदारैः सार्द्धमूषुषामिति तिरश्चामित्यस्य विशेषणं वध्यत्वदर्शनायेत्याहुः तिरोऽञ्चतीति क्विप् सहसन्तिरइति तिर्य्यादेशः तिर्य्यगमुमूयगिति तिरश्चादेशः उपपूर्व्वसदलोपमत्रदिति क्वसुः वसोर्णसेकाजिति इम् धुर्द्धिष्यक्तीति द्वित्वं तृफलेति अतएत्वं खिलोपश्च वसोर्वःसेमपीति उः वसेः पूर्व्ववत् क्वसुः इम् च व्यथ भ॰

प्रयामास तथा सुषेणनामानं पश्चिमां दिशं प्रास्थापयत् वान
राणां कोव्या सहेत्युभयत्र योज्यं योऽश्रौजःशब्दाय्यनगतीत्या
दिना प्रयोज्यस्य कर्म्मत्वं प्रपूर्व्वस्य तिष्ठतेर्गत्यर्थत्वात् उदगिति
उदक्शब्दाद्दिग्देशकालेष्विति सप्तम्याःस्तात् तस्य लुक् चात्पर
त्वात् तदन्तस्याव्ययत्वं लोकोपचारात् ॥ ५१ ॥

प्राचीं तावद्भिरव्यग्रः कपिभिर्व्विनतोययौ। अग्र
ग्राह्यैरिवादित्योवाजिभिर्दूरपातिभिः ॥ ५२ ॥

प्राचीमित्यादि ॥ कपिभिस्तावद्भिरित्येककोटिसंघातैः सह ज०म०
विनतः प्रणतः सुग्रीवइत्यर्थात् अव्यग्रः अनाकुलः प्राचीं पूर्वां
दिशं ययौ यथा आदित्योवाजिभिरग्रग्राह्यैः मुक्तवल्गैः करण
भूतैः रश्मीचेति यन् दूरयायिभिः ॥ ५२ ॥

प्राचीमित्यादि। विनतनामा वानरोऽव्यग्रोऽनाकुलः स भ०
तावद्भिः कोटिसंख्यातैः कपिभिः सह प्राचीं पूर्व्वां दिशं ययौ सुग्री
वाज्ञयेत्यर्थात् यथा आदित्यः सूर्य्याऽग्रग्राह्यैर्मुक्तरज्जुभिर्दूर
पातिभिर्वाजिभिरश्वैः सह प्राचीं याति तथा अग्राह्येत्यग्रकोर
ज्जुवाचकः अदितेरपत्यमिति गर्गादित्वात् ण्यः केचित्तु विन
तोनगः सुग्रीवः प्राचीं ययावित्याहुस्तत्तु रामायणविरुद्धं
॥ ५२ ॥

ययुर्व्विन्ध्यं शरन्मेघैः प्रासादैः प्रवरैरिव। प्रच्छन्नं
मारुतिप्रष्ठाः सीतां द्रष्टुं प्लवङ्गमाः ॥ ५३ ॥

ज०म० ययुरित्यादि। मारुतिप्रष्ठाः हनूमदग्रेसराः सीतां द्रष्टुं विन्ध्य पर्व्वतं ययुः शरन्मेघैः प्रावारैरिव प्रावरणैरिव प्रछन्नं वृणोते राच्छादनइति घञ् प्रवरैः श्रेष्ठैः अनाच्छादने ग्रहेत्यादिना अप्॥ ५३॥

भ० ययुरित्यादि। प्लवङ्गमावानराः सीतां द्रष्टुं विन्ध्यपर्व्वतं ययुः प्लवेन गच्छतीति तृभूवृहजीत्यादिना खः कीदृशाः मारुतिर्हनूमान् प्रष्ठोऽग्रसरो येषां ते तथा प्राद्यगेस्थस्य षत्वमभिधानात् मनीषादित्वाद्वा कीदृशं शरन्मेघैः प्रच्छन्नं प्रवरैः श्रेष्ठैः प्रावारैः प्रच्छदपटैरिव अभिधानात् प्राङ्पूर्व्वात् वृञआच्छादने घञ् अन्वयात्॥ ५३॥

परिभावं मृगेन्द्राणां कुर्व्वन्तोनगमूर्द्धसु। विन्ध्ये निर्म्मांशुमार्गस्य चेरुः परिभवोपमे॥ ५४॥

ज०म० परीत्यादि। मृगेन्द्राणां सिंहानां परिभावमभिभवं कुर्व्वन्तः विन्ध्ये चेरुः भ्रान्ताः परौभुवोवज्ञानइति घञ् कीदृशे परिभवोपमे आदित्यमार्गस्य परिभवनं अत्युच्चलात् घञभावपक्षे अप्॥ ५४॥

भ० परीत्यादि। ते नगमूर्द्धनि गिरिशिखरे मृगेन्द्राणां सिंहानां परिभावं तिरस्कारं कुर्व्वन्तो विन्ध्ये चेरुः सञ्चरन्ति कीदृशे सूर्य्य वर्त्मनः परिभवइव तथात्युच्चलात् परिभवशब्देनाच तत्कर्त्ता लक्ष्यते आदित्यमार्गस्य परिभवेणोपगता सा लक्ष्मीः शोभा यस्येति वा यद्वा तत्परिभवक्रियययैवाच लोकभयदत्वेन साम्यं

विवक्षितं परिपूर्व्वान्नुवोधश्लौ स्वभावादवस्थानार्थता न गच्छ
तीति नगः हनजनादिति डः ॥ ५४ ॥

भ्रेमुः शिलोच्चयांस्तुङ्गानुत्तेरुरतरान्नदान्। आशं
सवोलवं शत्रोः सीतायाश्च विनिश्चयं ॥ ५५ ॥

भ्रेमुरित्यादि। उत्पूर्व्वाच्चिनोतेः एरजित्यच् शिलाभिरुच्चयो ज०म०
येषां तान् शिलोच्चयान् भ्रेमुः भ्रमणक्रियायाव्याप्यत्वात्सकर्म्म
कता नदान् अतरान् तरितुमशक्यान् उत्तेरुः उत्तीर्णवन्तः
शत्रोर्लवमुच्छेदनं सीतायाश्च विनिश्चयं विनिर्णयमाशंसवः आशं
सनशीलाः सनाशंसभिच्चउः नरलवौच्चदोरविति अण्प्रत्यया
न्तौ विनिश्चयइति एरेरित्यच्॥ ५५ ॥

भ्रेमुरित्यादि। ते भीमान् भयदान् शिलोच्चयान् पर्व्वतान् भ०
भ्रेमुः तृफलेत्यादिना अतएत्वं खिलोपश्च भ्रमणस्य गतिविशेष
त्वात् सकर्म्मकता शिलाभिरुच्चयोवृद्धिर्येषां उच्चीयतइति वा
उच्चयस्तूपः शिलाभिरुच्चयः शिलोच्चयः अतरान् अन्यैस्तरितु
मशक्यान् नदान् उत्तेरुः तृतरेऽभिभवस्तुत्यां उत्तीर्णाः किञ्चा
शत्रोर्लवं छेदं आशंसवइच्छवः सीतायाविशेष्य निश्चयञ्च आशं
सवः सनभिक्षाशंसउः चितृलूभ्योऽल्॥ ५५ ॥

आदरेण गमन्तश्चक्रुर्विषमेष्वप्यसंभ्रमाः। व्यापुवन्तो
दिशोऽन्यादान्कुर्व्वन्तः सव्यधान्हरीन्॥ ५६ ॥

ज॰म॰ आदेत्यादि। विषमेष्वपि प्रदेशेषु गमं गमनं चक्रुः आदरेणा नवज्ञया ग्रहेरित्यप् अप्रघसाः त्यक्ताहाराः उपसर्गेऽदइति अपि घञपोश्चेति अदेर्घस्रादेशः हरीन् सिंहान् सव्यधान् सप्र हारान् व्यधजपोरित्यप् सप्रहारत्वादन्यादान् परित्यक्ताहा रान् कुर्व्वन्तः नैाणचेति निपूर्व्वाददेरण्प्रत्ययः तस्मिन्नदेर्न घस्रा देशः चकारादपि तत्र नियमः दिशोव्याप्नुवन्तः सर्व्वव्यापिनः ॥ ५६ ॥

म॰ आदेत्यादि। ते विषमेष्वपि देशेषु गमं चक्रुः रामस्य कार्य्यमि त्यादरेण न तु परस्य कार्य्यमित्यवज्ञया कीदृशाः अप्रघसाः सम्य गाहाररहिताः निरन्तरभ्रमणात् दिशोव्याप्नुवन्तः हरीन् सिंहान् सव्यधान् सप्रहारान् अतएवान्यादान् आहाररहि तान् कुर्व्वन्तः गमश्चव्यधिभ्योऽल् घञ्ञ्दःघन्चल्घञीति अदे र्घसादेशः निपूर्व्वाददोनाव्यन्येतिकेति णप्रत्ययः घञि तु घसा देशप्रसङ्गात् नरदोणात्वाविति परः जेमनं लेपआहारोनिघसो न्याददृत्यपीत्यमरः ॥ ५६ ॥

सञ्चेरुः सहसाः केचिदस्वनाः केचिदाटिषुः। संया मवन्तोयतिवन्निगदानपरेऽमुचन् ॥ ५७ ॥

ज॰म॰ सञ्चेरुइत्यादि। सहसाः सस्मिताः अस्वनास्तूष्णीकाः स्वनहसो र्वेत्यप् यतिवत् संयामवन्तः नियमवन्तः यमः समुपनिविषुचेति घञ् आटिषुः अटितवन्तः अटेर्लुङि रूपं अपरे निगदाम्वचना न्यमुचन् नौगदेत्यादिना विकल्पेनापोविधानात् घञ् ॥ ५७ ॥

सन्नेत्यादि। केचिद्वानराः सत्रमाः सन्नास्तेदुः तृषसेति भ॰
अतएवं खिन्नाश्च केचिद्रखनामौनिनः यतिवत्संयामवन्तः
संयमिनः सन्तश्राटिषुर्गतवन्तः अट्गतौ धांमिः अनुस्थिदेरिति
अनव्यस् अपरे निगदान् अमुचन् अन्तःस्थितस्य शब्दस्य वहिनिः
सारणं मोक्षः तं कृतवन्त इत्यर्थः सत्रस्वननिगदाश्चलन्ताः
संयामोघञन्तः॥ ५७॥

अथ क्रमादनिःक्वाणानराः चीणपणाइव। अम
दाः सेदुरेकस्मिन्नितम्बे निखिला गिरेः॥ ५८॥

अथेत्यादि। अथ परिभ्रमणादनन्तरं क्रमेण परिश्रमेण अम ज॰म॰
दाः गतहर्षाः मदोऽनुपसर्गेइत्यप् अतएव निःक्वाणाः निश्शब्दाः
क्वणोवीणायाञ्चेत्यपोविकल्पेन घञ् वीणादिविषयमेतत् क्वणेर्नि
पूर्व्वादनुपसर्गाद्दीणादिविषयाच्च विकल्पेनाणप्रत्ययइत्युक्तं एक
स्मिन् गिरेर्नितम्बे सेदुः निषसाः निखिलाः समस्तावानराः चीण
पणाइव अर्थरहितानराइव पणायन्तइति पणाः व्यवहाराय
कृते पणे व्यवस्थायन्ते नित्यं पणः परिमाणे इत्यप्॥ ५८॥

अथेत्यादि। भ्रमणानन्तरं ते निखिलाः सर्व्वे वानराः कस्य भ॰
चिद्गिरेर्नितम्बे सेदुर्निषसाः कीदृशाः क्रमेण श्रमेण निःक्वाणा
निःशब्दाः अमदा हर्षरहिताः चीणपणानष्टधनाइव निःक्वाणो
घञन्तः क्वणः शब्दमात्रे घञसौ सप्रादेरपि वीणाध्वनौ तु सप्रा
देरेवेति परः स्वमते अभिधानं नियामकमित्युक्तेः सएव नियमः
क्रमपणमदाअलन्ताः पण्यते व्यवह्रियतेऽनेनेति पणः पणोव

राटमाचे सान्मूखे कार्षापणे यद्दे। कथ्यशाकटिकाद्यूतव्यवहारे भृतौधनइति विश्वः ॥ ५८ ॥

ततः ससम्भ्रदास्तत्र निरैचन्त पतत्त्रिणः। गुहा द्वारेण निर्यातः समजेन पशूनिव ॥ ५९ ॥

ज०भ० ततइत्यादि। ततो विश्रामानन्तरं ते तत्र तस्मिन् पर्व्वते पतत्त्रिणः पक्षिणोनिरैचन्त ईक्षितवन्तः ईक्षेर्लङि रूपं कीदृशान् गुहाद्वारेण निर्यातः निर्गच्छतः निष्पूर्व्वायातेः शत्रन्तस्य शसि रूपं ससंमदाः सहर्षाः प्रमदसंमदाविति निपातितं समजेन द्वन्द्वेन पशूनिव निर्यातः समुदोरजपशुष्वित्यप् ॥ ५९ ॥

भ० ततइत्यादि। उपवेशानन्तरं ते ससम्मदाः सहर्षाः सन्तस्तत्र पर्व्वते गुहाद्वारेण निर्यातोनिर्गच्छतः पतत्त्रिणः पक्षिणोनिरैचन्त दृष्टवन्तः समजेन समूहेन निर्गच्छतः पशूनिव तद्वदितिस्फूर्त्तानित्यर्थः समदसमजावसन्तौ व्यजोरे इत्यादौ अवन्तवर्ज्जमाषाजेर्व्यादेशः संप्राभ्यां मदोहर्षे समुद्राभजः पशुसंहरेरपयोरदिति परेषां विशेषद्वयं निःपूर्व्वादीचेर्यो यातेः शत्रः ॥ ५९ ॥

वीनामुपसरं दृष्ट्वा तेऽन्योन्योपहवागुहां। प्राविशन्नाह्वप्रशान्नाद्यावमुपलिप्सवः ॥ ६० ॥

ज०भ० वीनामित्यादि। वीनां पक्षिणामुपसरं नैरन्तर्य्येण निर्गमनं दृष्ट्वा उपसरइव उपसरनैरन्तर्य्यमात्रेणोपलक्षितत्वात् उपसरोहि

स्त्रीगवीषु पुंगवानामभिगमनमुच्यते यच नैरन्तर्य्येण भवति प्र जनेर्सर्त्तेरित्यप् वानराश्चन्योन्योपह्वाः परस्परमाक्रान्तं येषां आगच्छतागच्छत प्रविशामइति ह्वः संप्रसारणमित्यप् संप्रसा रणञ्च गुहां प्राविशन् प्रविष्टवन्तश्चाहवप्रज्ञाः युद्धप्रज्ञाः आह्व यते युद्धाय स्पर्द्धतेऽचेत्याङ्कि युद्धइत्यप् संप्रसारणञ्च आहाव मुपलिप्सवः उदकाधारमुपलब्धुमिच्छवः निपानमाहावइति घञि संप्रसारणं निपात्यते वृद्धिरस्त्येव अणप्रत्यये सवृद्धिः॥ ६०॥

वीनामित्यादि। वीनां पक्षिणामुपसरं उपर्य्यधोगमनं दृष्ट्वा भं॰ ते वानरागुहां प्राविशन् कीदृशाः अन्योन्यस्य उपह्वआक्रान्तं येषां ते तथा आहवे युद्धे प्रज्ञाः पण्डिताः अतएव गुहाप्रवेशे निर्भयत्वं आहावमुदकाधारमुपलब्धुमिच्छवः उपसरोऽत्यन्तः अभिधानात् उपर्य्यधोगमनार्थः उपसरो हि स्त्रीगवीषु पुङ्गवा नामभिगमनमुच्यते यचोपर्य्यधोभावेन भवतीत्युपमानादिह उपसरश्चब्देन उपर्य्यधोगामित्वमुच्यतइति केचित् गर्भग्रहणा र्थोपसरणे सर्त्तेरपिति परसूत्रं तन्मते उपसरोगर्भार्थं ग्राम्य धर्माचरणं तच वहिर्निःसरतां पक्षिणां सम्भवत्येव ऊत्तिहोमेऽ द्दने इत्यस्मादसघञौ उपसर्गेणान्यार्थता परेषां मते ह्वेञोरूपं अभ्युपनिविभ्याह्वेञोऽसङ्ख्येति तथा आङोयुद्धेह्वेञोऽसङ्ख्ये ति आङोनिपाने ऊसेति तेषां सूत्रत्रयं॥ ६०॥

कुर्व्वन्तोह्वमाप्तानां पिपासावधकाङ्क्षिणः। द्वारं तमोघनप्रख्यं गुहायाः प्राविशन् द्रुतं॥ ६१॥

ज०म० कुर्व्वैत्यादि। गुहां प्रविश्य तस्याः द्वारमपरं प्राविशन् आप्ता मां स्निग्धानां हवमाह्वानं कुर्व्वन्तः भावेऽनुपसर्गस्येत्यप् संप्रसारणं च पिपासा पातुमिच्छा तस्या वधोऽपनयनं हनश्च वध इत्यप् वधादेशश्च तं काङ्क्षितुं शीलं येषामिति काचिमाचिकांक्षाया इत्यस्मात्सुप्यजातौ णिनिः इदितोनुम् साधुकारिणि वा कीदृशं द्वारं तमोघनप्रख्यं तमसो घनः मूर्त्तिः काठिन्यं तेन सदृशं मूर्तौ घनइति हन्तेरण्प्रत्ययो घनादेशश्च निपात्यते मूर्त्तिमत्तमइव द्वारमित्यर्थः॥ ६१॥

भ० कुर्व्वैत्यादि। ते आप्तानां स्निग्धानां हवमाह्वानं कुर्व्वन्तो गुहाया द्वारं द्रुतं प्राविशन् कीदृशाः पिपासायास्तृष्णाया वधं हननं काङ्क्षन्तीति ग्रहादित्वात् णिन् ताच्छील्ये आभीक्ष्ण्ये वा णिन्निति परः स्वमतेऽपि तदर्थता प्राप्यते यतो णिन्विधायकसूत्रे अर्थविशेषो नोक्तः किन्तु ढचेच्छतीत्यादौ भव्यर्णार्थणिन्नित्युक्तं तेनाभिधानादर्थविशेषेऽपि णिन् स्यादिति ज्ञापितं द्वारं कीदृशं तमोघनप्रख्यं तमसां घनेन काठिन्येन प्रख्यं सदृशं मूर्त्तिः काठिन्यमुच्यते तदुपचारात् मूर्त्तिमत्तयाइवेत्यर्थः मेघप्रख्यं तमश्च प्राविशन्निति केचित् हवमिति ह्वञ्स्पर्द्धायामिति ह्वेञ इत्यस्यालन्तस्य रूपं धातूनामनेकार्थत्वात् आह्वानार्थता ह्वेञोऽल् ह्वञ्च भावे नत्वुपसर्गादिपरः हन्तेरलि हनवधष्टोच्चलीति वधादेशः काठिन्यादौ हन्तेरल् घनादेशश्चेति परः स्वमते निपातः॥ ६१॥

तस्मिन्नन्तर्घणे पश्यन् प्रघाणे सौधसद्मनः। लौहोद्धनघनस्कन्धाललितापघनां स्त्रियं॥ ६२॥

तस्मिन्नित्यादि। द्वारमतिक्रम्य यः सावकाशप्रदेशः सोऽन्तर्घण जं०म०
इत्युच्यते तथा ह्यन्तर्हन्यते क्रोडीभवत्यस्मिन्निति अनुगतार्थत्वं
अन्तर्घणोदेशइत्यन्तःपूर्व्वाद्धन्तेरप् घनादेशः घणादेशोवा ये प
कारं पठन्ति यत्तु संज्ञीभूतोवाह्लीकेषु देशविशेषइत्युक्तं तत्संज्ञा
शब्दमाश्रित्य तस्मिन्नन्तरे यत्सौधस्य धवलगृहं तस्य प्रघाणे
एकदेशे प्रघणः प्रघाणश्चेति निपातितं स्त्रियं ललितापघनां
ललिताङ्गीमपश्यन् अपघनोऽङ्गमिति निपातनं लोष्टोद्घनघन
स्कंधाः यस्मिन् स्थापयित्वा काष्ठादीनि संस्क्रियन्ते सउद्घनः
आधान तद्वत् घनः स्कन्धोयेषामिति उद्घनोऽत्याधानमिति
निपातनं॥ ६२॥

तस्मिन्नित्यादि। तस्मिन् गुहाभ्यन्तरे अन्तर्घणे द्वारसमीप भ०
सावकाशप्रदेशे यत् सौधस्य धवलगृहं तस्य प्रघणे द्वारप्रकोष्ठा
भ्यां वहिःप्रदेशे ललितापघनां मनोहरशरीरां स्त्रियं तेऽपश्यन्
कीदृशाः लोष्टोद्घनघनस्कन्धाः यस्मिन् स्थापयित्वा काष्ठादिकं
हन्यते सउद्घनः लोष्टस्य यउद्घनस्तद्वद्घनोनिविडः स्कन्धोयेषां
ते तथा लोष्टवदुद्घनः काष्ठविशेषइत्यन्ये परमते अन्तर्हन्यते
यस्मिन्नित्यन्तर्घणोऽभ्यन्तरदेशउच्यते अन्तरोहन्तेरलि देशे
घनादेशः विभाषया णत्वं लभते मूर्द्धन्यान्तत्वे घणोऽलि रूपं
दन्त्यान्तत्वे तु घनोनिपातः परमते प्रकृष्टं हन्यते गम्यतेऽस्मि
न्निति प्रघाणः प्राङ्गणद्वारवाह्यपिण्डके हन्तेर्घञन्तो घनादेशस्य
पूर्व्वपदस्थान्निमित्तात् संज्ञायां णत्वं लभते णत्वाभावे रूपं प्रघा
णप्रघणालिन्दावहिर्द्वारप्रकोष्ठकेइत्यमरः परमते ऊर्द्धं हन्यते
अस्मिन् सउद्घनः उदः प्रतिकाष्ठके हन्तेरप् घनादेशश्च लभते

निपातः निधाय तक्ष्यते यत्र काष्ठे काष्ठं सउद्घनइत्यमरकोषे काष्ठ इत्युपलक्षणं घनः पूर्ब्बवत् परमते ऽपहन्यते ऽनेनेत्यपघनो देहः अपादङ्गेहन्तेरल् घनादेशश्च स्वमते निपातः वस्तुतः अन्तर्धणा दयोरूढाः व्युत्पत्तिस्तु यथा कथञ्चिदेव ॥ ६२॥

सा स्तम्बघ्नपदन्यासान् विघनेन्दुसमद्युतिः। परिघोरुभुजानाह हसन्ती स्वागतं कपीन् ॥ ६३ ॥

अ०म० सास्तमित्यादि। सा स्त्री हसन्ती कपीन् स्वागतं वचश्राह कीदृशी विघनेन्दुसमद्युतिः विहन्यते अभिभूयते अन्या द्युतिर्येन सविघनः करणेयोविदुष्विल्यप् घनादेशश्च सचेन्दुश्चेति सः तत्समा द्युतिर्य्यस्याः स्तम्बोहन्यते येन पादन्यासेन सस्तम्बघ्नः तृणकाष्ठादिः स्तम्बेकचइति करणे कः गमहनेत्युपधालोपः तादृशः पादन्यासा येषां कपीनामिति परिहन्यते येन परौघइत्यप् घादेशश्च परिघो अर्गलः तदनुकारिणोविपुलावाहवोयेषामिति ॥ ६३ ॥

भ० सेत्यादि। सा हसन्ती स्वागतमिति कपीनाह कीदृशान् स्तम्बघ्नपदन्यासान् स्तम्बोहन्यते तृणकाष्ठादिकमुपमर्द्यते येन तादृशः पदन्यासोयेषां तान् हनपरगहृगिति कर्त्तरि विहितष्टक् कर्त्तुः कभावइति अन्यत्र हश्यते घेऽपि न घतिः हनगमित्युल्लोपे हनो क्तोघ्नः स्तम्बघ्नश्चस्तम्बघनः स्तम्बोयेन निहन्यते स्तम्बोगुच्छस्तृणादि न इत्यमरः परिघवदुरवो विपुलाभुजायेषां परिघोऽस्त्रविशेषः परमते परिहन्यतेऽनेनेति हन्तेरलाद्य रूपं हलश्चेत्यं सा कीदृशी विघनेन्दुसमद्युतिः विगतोघनोमेघोयस्मात् तादृशस्य शरत्कालीनस्य चन्द्रस्येव दीप्तिर्यस्याः परमते हन्तेरल् मेघे घनादेशश्च स्वमते निपातः ॥ ६३ ॥

पिप्रायाद्रिगुहोपघ्नानुद्घान् संघसमागतान्। फलै
र्नानारसैश्चित्रैः स्वादुशीतैश्च वारिभिः॥ ६४॥

पिप्रेत्यादि। तान्विविधैः फलैर्वारिभिश्च पिप्राय तर्पितवती जं०म०
अद्रिगुहोपघ्नान् अद्रिगुहैव उपघ्न आश्रयो येषां कपीनां उपघ्न आ
श्रय इत्यप् उपधालोपश्च निपात्यते संघसमागतान् समूहेनाग
तान् उद्घान् प्रशस्तान् संघोद्घौगणप्रशंसयोरिति समुदोरुपपदयो
र्हन्तेरपि टिलोपश्च निपात्यते॥ ६४॥

पिप्रेत्यादि॥ सा फलैर्वारिभिश्च तान् पिप्राय तर्पितवती कीदृ भ०
शान् अद्रिगुहा उपघ्न आश्रयो येषां तान् उपघ्न आश्रये हन्तेरल्
प्रत्ययश्चेति परः स्वमते हनश्च वध इत्यस्य कुत्वाभावइत्यन्यत्र
प्रवृत्तिः अभिधानादाश्रयार्थता स्यादुपघ्नोऽन्तिकाश्रयइत्यमरः
उद्घान् प्रशस्तान् परमते ऊर्द्ध्वं हन्यते ज्ञायतइति उदःप्रशस्ते
हन्तेरल् घादेशश्च स्वमते हनअनादित्यस्य कुत्वाभावइत्य
न्यत्र प्रवृत्तेः गमादित्वात् घणोऽडः संघेन समूहेनागतान् संहननं
संहन्यते वास्मिन्निति समोहन्तेरल् समूहे घादेशश्चेति परः स्व
मते उद्घवत् फलैः कीदृशैः नानारसैः नानाविधरसयुक्तैः चित्रै
रद्भुतैः वारिभिः कीदृशैः स्वादुशीतैः मधुरशीतलैः॥ ६४॥

निघानिघतरुच्छन्ने तस्मिंस्ते लब्धिमैः फलैः। तृप्ता
स्तां भाजयुमतीं पप्रच्छुः कस्य पूरियं॥ ६५॥

निघेत्यादि। तस्मिन्प्रपणे निघानिघैर्निर्मिमाणानिमित्तैस्तरुभिः जं०म०
छन्ने निघोनिमित्तमिति निपूर्व्वाद्धन्तेरपि डिलोपे निपात्यते समा

रोहपरिणाहाभ्यां निमित्तमित्युच्यते ते कपयः लब्धिमैर्लाभनि र्वृत्तैः स्थितः स्थिः फलैस्तृप्ताः सन्तस्तां स्त्रियं भ्राजथुमतीं शोभावतीं पप्रच्छुः पृष्टवन्तः कस्येयं पूरिति ट्वितोऽथुच् तदन्तान्मतुप् ॥ ६५ ॥

भ० निघेत्यदि। तस्मिन् सौधसद्मनः प्रघाणे ते वानरास्तां पप्रच्छुः तस्मिन् कीदृशे निघानिघैर्दैर्घ्यविस्ताराभ्यां तुल्यातुल्यैस्तरुभिर्वृचै म्छन्ने आवृते परमते निःशेषेण हन्यन्ते ग्रायन्तेदति नेस्तुल्यारो हपरिणाहे हन्तेर्डौघादेशश्च खमते घणोरूपं विम्बकुसमेनिघ इत्यमरः ते कीदृशाः लब्धिमैर्लाभेन निर्वृत्तैः फलैस्तृप्ताः लभट्वा ड्‌ष्प्राप्तौ ट्वितस्त्व्ने विमक् ढभात्तयोर्धः तां कीदृशीं भ्राजथु मतीं शोभावतीं टुभ्राजृ्दीप्तौ ट्वितोऽथुर्भावे किं पप्रच्छुरित्याह कस्येयं पूरितिं अग्रिमश्लोकेनाप्यन्वयः ॥ ६५ ॥

रक्षणं करोषि कस्मात्त्वं यत्नेनाख्यायतां शुभे।
स्वप्ने निधिवदाभाति तव सन्दर्शनं हि नः ॥ ६६ ॥

ज०भ० रक्षणमित्यादि। हे शुभे कस्माद्वा रक्षणं रक्षां करोषि एत यत्नेनादरेण नोऽस्माकमाख्यायतां उभयत्रापि यजयाचेति नङ् यस्मात्स्वप्ने निधिवत् निधिरिव तव संदर्शनमाभाति नोऽस्माकम तिदुर्लभत्वात् स्वप्नइति स्वपोनन् निधिरिति उपसर्गेघोःकिः ॥ ६६ ॥

रक्षणमित्यादि। हे शुभे कस्माद्वा त्वं रक्षणं रक्षां करोषि अर्थात् पूर्य्याः एतत् यत्नेनादरेणाख्यायतां कथ्यतां हि यस्मात् स्वप्ने निधिरिव तव सन्दर्शनं अतिदुर्लभत्वान्नोऽस्माकमाभाति अतः पूर्व्वमननुभूतत्वात् एवं पृच्छामइति भावः खपरक्षयतीत्या

दिवा सर्व्वेच नक्त रवेर्पलं निधिरिति किईोऽस्मगैरिति कि:
उस्येचीत्यालोप: ॥६६॥

ततोजलधिगम्भीरान् वानरान् प्रत्युवाच सा। इयं
दानवराजस्य पू: सृष्टिर्व्विश्वकर्म्मणः ॥ ६७॥

ततइत्यादि। ततस्तस्मादनन्तरं सा प्रत्युवाच जलं धीयते अस्मिन्निति अधिकरणेचेति कि: जलधि: समुद्र: तद्वद्गम्भीरान चोभ्यत्वात् इयं पू: दानवराजस्य विश्वकर्म्मण: सृष्टि: सृज्यतइति सृष्टि: कर्म्मणिस्त्रियांक्तिन्। इत: स्त्रीलिङ्गमधिकृत्योच्यते॥ ६७॥ 

ततइत्यादि। तदनन्तरं सा वानरान् प्रत्युवाच कीदृशान् जलधिवत् गम्भीरान् अचोभ्यान् जलानि धीयन्तेऽत्रेति ढाङ्के इति कि: किं प्रत्युवाचेत्याह दानवराजस्य इयं पू: विश्वकर्म्मण: सृष्टि: पूर्व्वं कस्य पूरिति स्वामिन:कर्त्तुश्च प्रश्नइत्युभयमुक्तं सृज्य तइति क्ति: "कस्त्र्यघेइति कर्म्मणि स्त्रियां क्ति:। इत: स्त्रीक्तदधिकार: ॥ ६७॥ 

निहतस्य स्थितिं भिन्दन् दानवोऽसौ बलद्विषा।
दुहिता मेरुसावर्णेरहं नाम्ना स्वयम्प्रभा॥ ६८॥

निहेत्यादि। असौ दानवराज: स्थितिं मर्य्यादां भिन्दन् त्यागापायचोभावइति क्तिन् बलद्विषा इन्द्रेण निहत: यस्य पाहं दुहिता सपिता नाम्ना मेरुसावर्णि: अहञ्च नाम्ना स्वयंप्रभेति॥ ६८॥ 

निहेत्यादि। बलद्विषा इन्द्रेण असा दानवराजोनिहत: 

यतः क्षितिं मर्य्यादां भिन्दन् त्यजन् अहं मेरुसावर्णिनाम्नोदुहिता कन्या नाम्ना च स्वयंप्रभा पितुरात्मनश्च प्रसिद्धनामोत्कीर्त्तनेन दानववधानन्तरमिन्द्रेणाहमिह नियुक्तेति किम्वदन्ती सूचिता तिष्ठतेः क्तः दोषेमास्यामिति ङिः मर्य्यादाधारणा क्षितिरित्यमरः स्वयंप्रभेति स्वयं प्रभाति शोभतइति आतोऽन्तःअङ्गेरिति ङः स्वयमात्मना प्रभा यस्यादिति वा ॥ ६८ ॥

जूतिमिच्छथ चेत्तूर्णं कीर्त्तिं वा पातुमात्मनः। करोमि वोवह्नियूतीन् पिधध्वं पाणिभिर्दृशः ॥ ६९ ॥

ज०म० जूतिमित्यादि। यदि तूर्णं शीघ्रं जूतिं गमनमिच्छथ कीर्त्तिं वा आत्मनः पातुं रक्षितुं वः युष्मान् वह्नियूतीन् वह्निर्भूतान् ऊतियूतीत्यादिना निपातितः तत्र योतेर्जवतेश्च क्तिन् दीर्घत्वस्य निपातने कीर्त्तिरपि कृत्संशब्दने स्वार्थिकोणिच् उपधायाश्चेतीत्वं तस्मात् क्तिन् अतः पाणिभिः हस्तैर्दृष्टीः पिधध्वं छादयध्वं अपिपूर्व्वाद्धाञोलोटि द्विर्व्वचनेदधस्तथोश्चेति अभ्यासस्य भष्भावे श्नाभ्यस्तयोरित्याकारलोपे श्नसांजग्रश्नमीति धातोरीकारे वष्टिभागुरिरित्युपसर्गाकारलोपे च रूपं ॥ ६९ ॥

भ० जूतिमित्यादि। यूयं चेत् यदि तूर्णं शीघ्रं जूतिं गमनमिच्छथ प्रभुकार्य्यं कृत्वा आत्मनश्च कीर्त्तिं पातुं रक्षितुमिच्छथ तदा पाणिभिर्हस्तैर्दृशश्चक्षूंषि पिधध्वं आच्छादयत ततोऽहं वोयुष्मान् वह्नियूतीन् वह्निर्देशे यूतिर्मिश्रणं येषां तादृशान् वह्निर्गतानित्यर्थः जुगत्यां युलमिश्रणे सातिहेतीति जूतियूती भावक्तन्ते निपात्येते कृत्क्संशब्दे कित्वाचुरादिः कीर्त्त्यते चेति कर्मणि क्तिः

कीर्त्तंकृतइति कीर्त्तादेशः ओर्लोपः अपिपूर्व्वात् धाञोगीध्वं ध्वा दीरेदिः खेर्दत्वं ओह्योरित्यालोपः अभान्तस्येति खेर्दस्य धत्वं अप् अस्योरिति मूलधातोर्दत्वं वातोऽवाप्योरिति पक्षे अपेरतोलुक् ॥ ६९ ॥

अज्यावती निरुद्धाक्षान् विद्येवानुष्ठितक्रियान्।
निरचिक्रमदिच्छातोवानरांसंक्रमावतः॥ ७०॥

अज्येत्यादि। सा अज्यावती प्रशस्तगमनवती अजयजोर्भावे क्यप् प्रशंसायां मतुप् वानरान्निरुद्धाक्षान् निरचिक्रमत् निष्क्रामितवती क्रमेर्णन्तस्य लुङि सन्वल्लघुनीति सन्वद्भावात् सन्यत इतीत्वं दीर्घोलघोरिति न दीर्घत्वं संयोगपरस्य गुरुत्वात् अनुष्ठितक्रियानाचरिततदुपदिष्टव्यापारान् क्रञःशचेति शः सार्व्वधातुकेयक् रिङादेशस्य चङ्क्रमावतः कुटिलगतिमतः अःप्रत्ययादित्यकारः इच्छातइति वानराणामिच्छायाः इच्छेति निपातितं इषेः शप्रयः इभावश्च निपात्यते विद्यासंज्ञायाम्मिति क्यप् यथा विद्या अनुष्ठितक्रियान् कृतपुरस्वरणान् पुरुषानिच्छातोऽभीष्टं सम्पादयति तद्वत्सेति ॥ ७० ॥

अज्येत्यादि। सा अज्यावती प्रशस्तगतिमती वानरानिच्छातो निरचिक्रमत् निष्क्रामयामास यथा विद्या तत्त्वज्ञानं इच्छातः अनुष्ठितक्रियान् विहितध्यानधारणादीन् संसारान्निष्क्रामयति तद्वत् वानरानपि अनुष्ठितक्रियान् आचरिततदुपदिष्टव्यापारान् यतोनिरुद्धाक्षान् आच्छादितदृशः सक्थ्यक्ष्णःषःस्वाङ्ग इति षः पक्षे जितेन्द्रियान् अक्षशब्दइन्द्रियवचनः चंक्रमावतः

अन्धकारे कुटिलगतियुक्तान् पचे तीर्थादिचंक्रमणकारिणः अज गतौ शीग्रजयजविदेत्यादिना क्यप् ततोऽस्त्यर्थे प्रशंसायां वतुः विदज्ञाने पूर्व्ववत् क्यप् क्रियतइति क्रिया कुःशस्तेति शः च्छद्धिः सुधोरितीयः क्रमेर्य्यन्तात् जिश्रिद्रुस्रुइत्यङ् खेःसन्वत् ख्यस्तेत् खःस्तेरिति गुरुत्वान्न दीर्घः इयुइच्छायां तुलेक्षेत्यादिना निपातः क्रमेर्यङन्तात् शंस्वादः यङोलुक् ततोवतुः ॥ ७० ॥

निष्क्रम्य शिक्षया तस्यास्त्रपावन्तो रसातलात्। ज्ञात्वा मासमतिक्रान्तं व्यथामवललम्बिरे ॥ ७१ ॥

ज॰म॰ निष्क्रम्येत्यादि। तस्याः शिक्षया उपदेशेन गुरोश्चहलइत्यकारः तस्माद्रसातलान्निष्क्रम्य निर्गम्य त्रपावन्तः स्त्रिया उपदेशेन निष्क्रान्तावयमिति त्रपेति षिद्भिदादिभ्योऽङ् मासमतिक्रान्तं ज्ञात्वा वहिर्निर्गताः सन्तः व्यथां भयं भिदादित्वादङ् अवललम्बिरे वयं मासावधिना प्रेषिताः स च मासोविनैव कार्य्येणातिक्रान्तइति स्वामिनोभयं ॥ ७१ ॥

भ॰ निष्क्रम्येत्यादि। तस्याः स्वयम्प्रभायाः शिक्षया उपदेशेन रसातलात् निष्क्रम्य स्वयं निष्क्रमाशक्त्या त्रपावन्तोलज्जायुक्ताः सन्तः राज्ञा अवधित्वेन निश्चितं मासं अतिक्रान्तं ज्ञात्वा ते व्यथां राज्ञः सकाशाद्भयं अवललम्बिरे आपुः शिक्षेः सेमक्षात्सरोरिति अप्रत्ययः त्रपूषङ्लज्जायां षित्त्वात् भीषिचिन्तिपूजीत्यादिना ङः व्यथषमङ्दुःखेचालेभये घटादित्वात् पूर्व्वेण ङः यद्यपि कविकल्पद्रुमे घटादेः सानुबन्धत्वं दृश्यते तथापि पूर्व्वाचार्य्यक्रमदर्श

मात् मुग्धबोधस्य कविकल्पद्रुमात् प्राक् कृतत्वेन भीषिचिन्ती त्यादौ आलर्घटादेरित्यस्य न वैयर्थ्यं रुजामिति पाठे तेनैव भिदादित्वात् ङः॥ ७१॥

चिन्तावन्तः कथाश्चक्रुरुपधाभेदभीरवः। अज्ञात्वा नृपतेः कार्य्यं पूजां लप्स्यामहे कथं॥ ७२॥

चिन्तेत्यादि। उपधानमुपधा परीक्षा आतश्चोपसर्गइत्यङ् तत्परिशुद्धोहि भृत्यः कार्य्येषु नियुज्यते तदकरणादुपधाया भेदोऽभावः तस्माद्भीरवः चिन्तावन्तइति कर्त्तव्यतामूढाः कथां चक्रुः कृतवन्तः कीदृशमित्याह अज्ञात्वा नृपतेः कार्य्यं पूजां लप्स्यामहे कथमिति नैवेत्यर्थः चिन्तादयः चिन्तिपूजीत्यादिना अङन्ताः॥ ७२॥ जं०भ०

चिन्तेत्यादि। नृपतेः कार्य्यं अज्ञात्वा कथं वयं पूजां लप्स्यामहे अपि तु अवज्ञाताएव भविष्यामइति कथां ते चक्रुः कीदृशाः उपधाभेदभीरवः राज्ञा धर्म्मादिभिर्भृत्यानां या परीक्षा क्रियते सोपधा तस्याभेदः कार्य्यासामर्थ्येन भङ्गः तद्भीरवः अतएव चिन्तावन्तः चिन्तिकथिपूजिभ्योभीषिचिन्तीत्यादिना ङः उपपूर्व्वात् धाञआतोऽन्तः अद्वेरिति ङः उपधाधर्म्माद्यैर्यत्परीक्षण मित्यमरः॥ ७२॥ भ०

प्राथेपासनया शान्तिं मन्वानोवालिसम्भवः। युक्त्वा योगं स्थितः शैले विमृष्टवांश्चित्तवेदनां॥ ७३॥

ज०म० प्रायइत्यादि। उपासनेति आसश्रन्थोयुच् प्रायेण उपवासे नोपासना अनशनेनासनमित्यर्थः तया शान्तिं कल्याणं मन्वानो ऽवगच्छन् उपायान्तराभावात वालिसम्भवोऽङ्गदः योगश्चित्त वृत्तिनिरोधः तं युक्ता संवध्य शैले स्थितः चित्तवेदनां चित्तपीडां विवृण्वन् घट्टिविदिवन्दिभ्योयुच्वक्तव्यइति युच्॥ ७३॥

भ० प्रायइत्यादि। वालिसम्भवोऽङ्गदोयोगं चित्तवृत्तिनिरोधं युक्ता आत्मना सह संवध्य शैले स्थितः किं कुर्व्वन् प्रायेण उप वासेन उपासनया स्थित्या तस्य सेवया वा तदाचरणरूपया शान्तिं कल्याणं मरणं वा मन्वानः मन्यमानः प्रायस्त्वानशने मृत्यौ तुल्यवाङ्बह्वयोरपि। शान्तिः शमेऽपि कल्याणे इति च विश्वः शिलासङ्कउपवेशे उपपूर्व्वोऽयं सेवायामपि ओपिश्रन्थिग्र न्थीत्यादिना अनः चित्तवेदनां मनःपीडां विवृण्वन् प्रकाशयन् विदेः पूर्व्वेण अनः॥ ७३॥

प्रस्कन्दिकामिव प्राप्तोध्यात्वा ब्रूते स्म जाम्बवान्।
धिक् शालभञ्जिकाप्रख्यान् विषयान् कल्पनारुचीन्
॥ ७४॥

ज०म० प्रस्कत्यादि। त्वया का क्रिया कर्त्तव्येत्यन्यैः पृष्टः सन् जाम्ब वान् ध्यात्वा विचिन्त्य ब्रूते स्म प्रस्कन्दिकामिव रोगविशेषमिव प्राप्तोयातः उत्साहाभावात् रोगाख्यायांण्वुल्वक्तव्यं शालभञ्जि का क्रीडाविशेषः संज्ञायामिति ण्वुल् नित्यंक्रीडेत्यादिना सः तत्प्रख्याविषयारूपादयः अतितुच्छत्वात् अतस्तान् धिक् किन्तु कल्पनारुचीन् कमनीयान्॥ ७४॥

प्रस्कोत्यादि। त्वया किं कार्य्यमित्यन्यैः पृष्टोऽसम्मवान् चचप तिर्ध्यात्वा ब्रूते स्म उक्तवान् प्रस्कन्दिकां चयरोगं प्राप्त इव तस्मा द्धाभावात् स्कन्दिरशोषणेगत्यां नाम्न्यन्येतिक्केति रोगार्थे ण्वुल् स्त्रीत्वमभिधानात् काश्यनाशीरिति अतद्रूलं किं ब्रूते स्म इत्याह विषयान् रूपादीन् धिक् यतः शालभञ्जिका नागरक्रीडाविशेष स्तत्तुल्यान् भञ्जोधीमोटने प्रस्कन्दिकावत् संज्ञायां ण्वुल् तुल्यत्व माह कल्पनया विकल्पवशेन पचे स्वयं रचनया रुचिरभिलाषो यत्र तान् एतेन सर्व्वेषां काल्पनिकत्वमिति वेदान्तमतं दर्शितं क्षपेर्व्यन्तात् जीविपन्योति अनः क्षपः कृपः॥ ७४॥

यां कारिं राजपुत्रोऽयमनुतिष्ठति तां क्रियां। अह मप्यनुतिष्ठामि सोऽप्युक्त्वैवमुपाविशत्॥ ७५॥

यामित्यादि। अयं राजपुत्रोऽङ्गदोयाङ्कारिं क्रियामनुतिष्ठ ति तां क्रियां अहमप्यनुतिष्ठामि विभाषाख्यानपरिप्रश्नयोरिञ्चे ति करोतेरिञ् पचे कृञःशचेति शः सोऽप्येवमुक्त्वा उपाविशत् अनशनेन स्थितः॥ ७५॥ अ०म०

यांकेत्यादि। विषयाणां काल्पनिकत्वेन जीवनं विफलमिति यां कारिं क्रियां अयं राजपुत्रोऽङ्गदोऽनुतिष्ठति करोति अह मपि तां क्रियां प्रायोपासनां अनुतिष्ठामि इत्युक्त्वा सोऽपि जाम्ब वान् उपाविशत् अनशने स्थितः कृञः प्रश्नाख्याने निरिति निः॥ ७५॥ भ०

उवाच मारुतिर्वृद्धे संन्यासिन्यत्र वानरान्। अहं पर्य्यायसंप्राप्तां कुर्व्वे प्रायोपवेशिकां॥ ७६॥

अ०म० उवाचेत्यादि। मारुतिर्वानरानुवाच वृद्धे जाम्बवति संन्यासिनि अनशनवति अहमप्यत्र शैले पर्य्यायेण परिपाट्या सम्प्राप्तां प्रायोपवेशिकां अनशनं कुर्व्वे पर्य्यायार्हेत्यादिना ण्वुल्॥ ७६॥

भ० उवाचेत्यादि। मारुतिर्हनूमान् वानरान् उवाच किमुवाचेत्याह अत्र जाम्बवति वृद्धे संन्यासिनि त्यक्ताहारे सति अहमपि पर्य्यायेण क्रमेण प्राप्तां प्रायेण उपवासेन उपवेशिकां स्थितिं कुर्व्वे प्रायः स्यान्नोऽशनत्यागः सन्न्यासोऽनशनं स्मृतमिति हलायुधः उपपूर्व्वाद्विशेः पर्य्यायेणक इति परः स्त्रमते स्वभावेत्यादौ स्वण्क इत्यनेन स्त्रियां भावे ण्वकः स्यादिति ज्ञापितं॥ ७६॥

अभावे भवतां योऽस्मिन् जीवेत्तस्यास्त्वजीवनिः। इत्युक्त्वा सर्व्वएवास्थुर्व्वध्वा योगासनानि ते॥ ७७॥

अ०म० अभावइत्यादि। अभावे विनाशे भवतां योऽस्मिन् लोके जीवेत् तस्यास्त्वजीवनिः धिग्जीवितं आक्रोशे नञ्यनिः एवमुक्त्वा सर्व्वएव अस्थुः स्थिताः तिष्ठतेर्गातिस्थेति सिचोलुक् बध्वा योगासनानि विरचय्य पद्मासनादीनि॥ ७७॥

भ० अभावइत्यादि। भवतामभावे विनाशेऽस्मिन् लोके योजीवेत् तस्याजीवनिर्मरणं धिग्जीवनं वास्तु नञोन्याक्रोशेस्त्रीति अनिः इत्युक्त्वा सर्व्वएव ते वानरायोगासनानि पद्मासनानि बद्धा अस्थुः स्थिताः तिष्ठतेर्घ्या भूस्थेति सेर्लुक् अनउस् उशेषीत्या लोपः॥ ७७॥

अक्लेश्यमसिनाग्न्यन्तं कबन्धवधमभ्यधुः। धिङ्नः
प्रपतनं घोरं क्लेदान्तत्वमनाथवत्॥ ७८॥

अक्लेत्यादि। इतः स्त्रीलिङ्गभावं निवर्त्य कृदुदाह्रियते। ज॰म॰
कबन्धवधं योजनबाह्वोर्वधमभ्यधुः अभिहितवन्तः अभिपूर्वोधा
अभिधाने वर्त्तते कीदृशं अक्लेश्यं प्रयासरहितं कस्मात् असिना
सुखमरणात् तथाग्न्यन्तं अन्ते तस्याग्निरभूत् अस्माकं धिक्
प्रपतनं विनाशं दुःखेन घोरत्वात् क्लेदान्तत्वं अन्ते पूतीभावस्त
द्यचास्ति अर्शआदित्वादच् अनाथवत् अनाथानामिव अक्लेश्य
प्रपतनशब्दौ भावसाधनौ कृत्यल्युटोवहुलमिति॥ ७८॥

स्त्रीलिङ्गकृदधिकारं निवर्त्त्य कृदुच्यते। अक्लेश्यमित्यादि भ॰
ते कबन्धस्य योजनबाह्वोर्वधं मरणं अभ्यधुः उक्तवन्तः अभिपूर्व्वं
धाञश्चां रूपं अस्थुरितिवत् कीदृशं असिना अक्लेश्यं क्लेशाजनकं
खड्गेन शीघ्रहननात् नातिदुःखदमित्यर्थः अग्न्यन्तं दाहेन अग्नेर
न्तोऽवसानं यत्र अतएव परकालेऽपि न दुःखदमिति भावः अना
थवत् नाथरहितानामिव नोऽस्माकं प्रपतनं मरणं धिक् इत्यप्य
भ्यधुरिति सम्बन्धः यतोघोरं उपवासदुःखवाहुल्यात् क्लेदान्तत्वं
दाहाभावात् क्लेदएवान्ते यस्य तस्य भावः क्लेदान्तत्वं तदिद्यते
ऽस्येति अर्शआदित्वादः क्लेदस्यान्तत्वं यत्रेति वा क्लेदमन्त
भूतं तनोति संवृणोतीति गमादित्वाड्डः इति वा अस्माकं प्रप
तनं क्लेदान्तत्वञ्चेत्युभयं धिक् घोरत्वादिह परत्र चेति केचित् न
क्लिशातीत्यक्लेश्यः ऋहलोर्ण्यदिति ढभावविहितोघ्यण् हलोःक
भावइत्युक्तेरच कर्त्तरि स्यात् यदा क्लेश्यं क्लेशः भावे घ्यण् न वि

घते श्लोघ्यं यथेति विग्रहः प्रपतनमिति भावे मन्नमनटोऽघे इत्य नट्॥ ७८॥

ततोमन्दगतः पक्षी तेषां प्रायोपवेशनं। अशनीय मिवाशंसुर्म्महामायादशोभनः॥ ७९॥

ज०म० ततइत्यादि। ततोऽभिहितानन्तरं महान् पक्षी सम्पातिनामा जटायुभ्राता आयात् आगतः मन्दगतोमन्दगमनः नपुंसके भावे क्तः आहिताग्नित्वात्परनिपातः तेषां यत्प्रायोपवेशनं तदशनीय मिव भोजनीयमिव कृत्यल्युटोवहुलमिति कृत्यः आशंसुः आशंस नशीलः अशोभनः शोभारहितः दावाग्निना सुष्टशरीरत्वात् ल्युडि ति भावे ल्युट् कर्म्मणि च येनेत्येतत्परिहृत्योदाहृतत्वात्॥ ७९॥

भ० ततइत्यादि। तदनन्तरं महान् पक्षी सम्पातिनामा तत्रा यात् आगतः यातेर्ल्लो रूपं कीदृशः मन्दगतः मन्दं गतं गमनं यस्य गमेर्भावे क्तः येषां वानराणां यत्प्रायोपवेशनं तत् अशनीय मिव स्वभक्ष्यमिव तृप्तिजनकत्वात् आशंसुः आशंसनशीलः भावे ऽनट् अनीयस्य कृद्बोःकभावइत्युक्तेः करणे वानीयः तदा अशनीयं भोजनसाधनं अशोभनः शोभारहितः सूर्य्यतेजसा दग्धपक्षत्वात् नन्द्यादित्वात्कर्त्तरि अनः न विद्यते शोभनं यस्ये ति वा भावेऽनट्॥ ७९॥

देहप्रशमनतुण्डाग्रं तं विलोक्याशुभाकरं। पापगो चरमात्मानमशोचन् वानरामुङ्कः॥ ८०॥

देहेत्यादि। वृश्च्यते येन तुण्डाग्रेण करणाधिकरणयोश्चेति करणे ल्युट् देहस्य व्रश्चनमिति कृद्योगात् षष्ठी देहव्रश्चनं तुण्डाग्रं यस्य तं विलोक्य वानरा अघभाकरं पापस्योत्पत्तिस्थानं आकर इवाकरः पुंसि संज्ञायां घः तत्र हि करणाधिकरणयोरिति वर्त्तते एवं उत्तरत्रापि चात्मानं पापगोचरं पापविषयं पापविषये पतितावयमिति मुहुरघोषन् घोषितवन्तः गोचरसञ्चरेत्यधिकरणे निपातितः ॥ ८० ॥ ज॰म॰

देहेत्यादि। तं पक्षिणं विलोक्य वानराः पापगोचरं पापविषयमात्मानं मुहुर्वारं वारं अघोषन् पापविषयोमदात्मेति सर्व्वे ऊचुरित्यर्थः कीदृशं पक्षिणं देहव्रश्चनतुण्डाग्रं वृश्चति अनेनेति व्रश्चनं करणेऽनट् देहस्य व्रश्चनं तुण्डाग्रं यस्य तं यद्वा देहं वृश्चति छिनत्तीति देहव्रश्चनं कभावेऽमी इति वचनात् कर्त्तरि अनट् नन्द्यादित्वाद्वा अनः अघभाकरं अघभस्य पापस्य आकरमुत्पत्तिस्थानं आकुर्व्वन्त्यस्मिन्निति संज्ञायामल् गावश्चरन्त्यस्मिन्निति गोचरोऽलन्तः स्वभावात् प्रत्यासन्नवाची ॥ ८० ॥ भ॰

जटायुः पुण्यकृत्यची दण्डकारण्यसञ्चरः। कृत्वा राघवकार्य्यं यः स्वरारूढोऽग्निसंस्कृतः ॥ ८१ ॥

जटेत्यादि। कृत्वा राघवकार्य्यं अग्निसंस्कृतः अग्निना कृतसंस्कारः स्वः स्वर्गमारूढः जटायुः पुण्यकृत संचरत्यस्मिन्निति संचरः पूर्व्ववत् निपातितः दण्डकारण्यं संचरोऽवस्थानं यस्येति ॥ ८१ ॥ ज॰म॰

भ० जटेत्यादि। जटायुः पक्षी पुण्यकृत् पुण्यं कृतवान् भासुकिति क्विप् स्वस्तत् कीदृशः दण्डकारण्यं सञ्चरः स्थानं यस्य सतथा सञ्चरत्यस्मिन्नित्याधारेऽल् योराघवकार्य्यं सीताहरणविघ्नाप नादिकं कृत्वा अग्निना संस्कृतः कृतसंस्कारः सन् स्वः स्वर्गमारूढः गत्यर्थाढेत्यादिना रुहेः कर्त्तरि क्तः होढः ढभादिति धः ष्टुभि रिति ढः ढ्रोढ्रीति ढलुक् दीर्घश्च ॥ ८१ ॥

नरकस्यावतारोऽयं प्रत्यक्षोऽस्माकमागतः। अचे ष्टायदिहान्यायादनेनात्स्यामहे वयं॥ ८२ ॥

ज०म० नरेत्यादि। अवतीर्य्यते येन कर्म्मणेति अवेस्तॄस्त्रोर्घञ् सएवायं नरकस्यावतारः प्रत्यक्षोऽस्माकमागतः यद्यस्मादयमचेष्टाः निश्चलाः अनेन पक्षिणा अन्यायादयुक्त्या नीयते अनेनेति निपूर्व्वा दिणः अध्यायन्यायेति निपातनात् घञ् अत्स्यामहे भक्षयिष्यामहे कर्म्मणि ल्लृट्॥ ८२ ॥

भ० नरेत्यादि। नरकमवतरति येनाधर्म्मेण सएव प्रत्यक्षदृग्वि षयग्राह्योऽयं पक्षिरूपोऽस्माकमागतः रूपकालङ्कारोवा पक्षि विशेषणं वा अवपूर्व्वात्तरतेः करणे घञ् नरकस्येति कर्म्मणि षष्ठी यद्यस्मात् इह प्रदेशे अनेन पक्षिणा अन्यायादनौचित्यायु क्त्या वा वयमत्स्यामहे भक्षणीयाः यतोऽचेष्टाश्चेष्टारहिताः नीयतेऽनेनेति न्यायः निपूर्व्वादिणः करणे घञ् अदःकर्म्मणि ती ॥ ८२ ॥

हृदयोदङ्कसंस्थानं कृतान्तानायसन्निभं। शरीरा
खनतुण्डाग्रं प्राप्यामुं शर्म्म दुर्लभं॥ ८३॥

हृदेत्यादि। अमुं पक्षिणं प्राप्य कीदृशं हृदयोदङ्कसंस्थानं ज०म०
उदञ्चते आकृष्यते अनेनेति उत्पूर्व्वादञ्चतेरुदङ्कोदंकइति
घञ् निपात्यते हृदयस्योदङ्कः संदंशः तत्संस्थानं तत्सदृशं कृता
न्तानायसन्निभं यमजालतुल्यं तत्प्रविष्टस्य दुःखेन निर्गमत्वात्
जालमानायइति नयतेराङ्पूर्व्वात्करणे घञ् निपात्यते आख
न्यते येन तुण्डाग्रेण खनोघच् शरीरस्याखनं तादृक् तुण्डाग्रं
यस्येति प्राप्य शर्म्म सुखं दुर्लभं कृच्छ्रलभ्यं ईषदित्यादिना खल्
अच करणाधिकरणयोश्चेति निवृत्तं तयोरेव कृत्यक्तखलर्था
इति योज्यं उपसर्गात् खलघञोरिति प्राप्तस्य नुमः नसुदुर्भ्यां
मिति प्रतिषेधः॥ ८३॥

हृदेत्यादि। अमुं पक्षिणं प्राप्य अस्माकं शर्म्म सुखं दुर्लभं दुः भ०
खेन लभ्यतइति ईषद्दुःसुषुरिति खल् अमुं कीदृशं हृदयोदङ्कसं
स्थानं हृदयमुदञ्च्यते ऊर्द्ध्वमाकृष्यते येन तादृशं संस्थानमाकृति
र्यस्य तं ऊर्द्ध्वहृदयाकृतिमित्यर्थः हृदयोद्वेजकाकृतिमिति वा
उत्पूर्व्वादञ्चतेः करणे घञ् चजोः कुघिण्यतोरिति कत्वं गत्यर्थस्याञ्चतेः
क्षेमकत्वाभावात् अङ्कधातोरूपमित्यन्ये कृतान्तानायसन्निभं यम
जालसदृशं जाले प्रविष्टस्य दुःखेन निर्गमइति भावः आनीयते
ऽनेनेति आनायोजालं करणे घञ् आनायः पुंसि जालं स्यादित्य
मरः शरीराखनतुण्डाग्रं आखन्यते समन्ताद्विदार्य्यते येन त
दाखनं करणेऽल् शरीरस्याखनं तुण्डाग्रं यस्य तं आखरेति
पाठे खनोडडरेति डरः॥ ८३॥

ईषदाढ्यङ्करोऽप्येष न परत्राशुभक्रियः। अस्मान
त्तुमितोऽभ्येति परिम्लानो बुभुक्षया॥ ८४॥

ज॰म॰ ईषदित्यादि। यएष अस्मानत्तुमितः प्रदेशादभ्येति आगच्छति सपरत्र परलोके ईषदाढ्यङ्करोऽपि अनाढ्यैरीषदाढ्योऽपि न कृतः अशुभेन कर्मणेत्यर्थात् कर्तृकर्मणोश्च भूकृञोरिति च्व्यर्थे कर्मोपपदात्करोतेः खल् यतः परिम्लानोबुभुक्षया योहि कर्माशुभेन ईषदाढ्यङ्करोऽपि न कृतः सकथं न बुभुक्षया पीड्यते परिम्लायतीति कर्त्तरि बहुलवचनात् ल्युट् निष्ठान्तोवा संयोगादेरित्यादिना निष्ठानत्वं अशुभक्रियः सलङ्काशाभिर मत्वात्॥ ८४॥

भ॰ ईषदित्यादि। एषपक्षी बुभुक्षया परिम्लानः सन् अत्तुं भक्षयितुं इह प्रदेशे अभ्येति आभिमुख्येनागच्छति इतइति पाठे स्वस्थानादित्यर्थः न एष परत्र परलोके ईषदाढ्यङ्करोऽपि भविष्यति अनाढ्योऽयमीषदाढ्योऽपि न करिष्यते केनचित्कर्मणेत्यर्थः किम्वा यस्मात् परलोके ईषदाढ्योऽपि न कृतः शुभकर्मणार्थात् तेनायं बुभुक्षया म्लानः परलोके शुभकर्मणा यद्याढ्यः कृतः स्यात् तदा बुभुक्षया न पीडितः स्यादित्यर्थः ईषद्दुःसोरिति खल् खित्करणेन कर्तृकर्मणोर्व्यवधानमपि प्राप्तं तच्च ईषदाढ्यभवमित्युदाहरणेन स्पष्टीकृतं करोतेरिहाभूतप्रादुर्भावार्थत्वात् च्व्यर्थोलभ्यते परे तु सुदुरीषत्सु कर्तृकर्मभ्यामभूततद्भावे भूकृञः खलभावकर्मणोरित्याहुः अशुभक्रियः अशुभकर्मा परद्रोहित्वात् परिम्लानइति कभावेऽमीति कर्त्तर्य्यनट् किम्वा गत्यर्थाकर्मकेत्यादिना

कर्त्तरि क्तः सुक्षात्वोदित्यादिना गलं इत्येवमशोषन् वानरा मुक्तरित्यन्वयः॥ ८४॥

संप्राप्य वानरान् पक्षी जगाद मधुरं वचः। के यूयं दुरुपस्थाने मनसाप्यद्रिमूर्द्धनि॥ ८५॥

इति कृदधिकारः।

संप्रेत्यादि। वानरान् संप्राप्य पक्षी जगाद गदितवान् के यूयं अद्रिमूर्द्धनि पर्व्वतशिरसि दुरुपस्थाने दुःखेनोपस्थातुं शक्ये मनसापि किं पुनः शरीरेण आतोयुच् तथापि ईषदादयोऽनुवर्त्तन्ते कर्त्तृकर्म्मणोरिति न खर्य्यते। इति कृदधिकारः॥ ८५॥ ज०म०

संप्राप्येत्यादि। वानरान् संप्राप्य पक्षी मधुरं वचोजगाद किन्तदित्याह के यूयमद्रिमूर्द्धनि पर्व्वतशिखरे स्थिताः मनसापि दुरुपस्थाने दुःखेनैवोपस्थातुं शक्ये किं पुनः शरीरेण आतोऽनोऽ हरिद्रइति अनः। इति कृदधिकारः॥ ८५॥ भ०

आत्मनः परिदेवध्वे कुर्व्वन्तोरामसंकथां। समानोदर्य्यमस्माकं जटायुश्च स्तुथादरात्॥ ८६॥

इतः प्रकीर्णकस्रोकानाह। आत्मेत्यादि आत्मनः परिदेवध्वे शोचथ तेदृदेवृदेवनइति भौवादिकः शषि नसंयोगादमन्तादि त्यलोपेन भवति जटायुश्च समानोदर्य्यं भ्रातरमस्माकं समानोदरे शयितइति यत् आदरात्स्तुथ प्रकृतिं कुरुथ जटायुः ज०म०

पुण्यकृदित्यादिना रामसत्कथाश्च कुर्व्वन्तः अतः के यूयमिति
। ८६ ॥

भ॰ अथ प्रकीर्णकाः। आत्मेत्यादि। यूयं आत्मनः परिदेवध्वे
विलपथ देवृङ् देवने रामस्य संकथां कुर्व्वन्तोऽस्माकं समाना
दर्य्यं सहोदरं जटायुश्च आदरेण स्तुथ जटायुः पुण्यकृदित्यादि
ना तत्स्तुतिं कुरुथ अतः के यूयमिति पूर्व्वेणान्वयः सम्बन्धः समा
नोदरे शयितइत्यर्थे ढघेकादिति यः रूपनामेति विकल्पविधा
नात् न समानस्य सादेशः॥ ८६ ॥

शङ्काधवित्रवचनं प्रत्यूचुर्व्वानराः खगं। वयं शत्रु
लवित्रेषोर्दूतारामस्य भूपतेः॥ ८७॥

ज॰म॰ शंकेत्यादि। धुनोत्यपनयत्यनेनेति धवित्रं अर्त्तिलूधूइत्या
दिना करणे इत्रः किमयं करिष्यतीति शङ्कया धवित्रं वचनं
यस्य तं खगं वानराः प्रत्यूचुः शत्रुलवित्राइषवोवाणायस्य राम
स्य भूपतेस्तस्य वयं दूताः पूर्व्ववदित्रं ह्रला सः॥ ८७॥

भ॰ शङ्केत्यादि। वानराः खगं प्रत्यूचुः कीदृशं किमयं खगः
करिष्यति इत्येवंरूपायाः शङ्कायाधवित्रं अपनयनकारकं वचनं
यस्य तादृशं किमित्याह वयं रामस्य भूपतेर्दूताः कीदृशस्य
शत्रूणां लवित्राञ्छेदकरणानि इषवोयस्य धूञ्गिकम्पे लूञ्गि
छिदिश्चाभ्यां स्वृधूखनेति करणे इत्रः॥ ८७॥

कोनापि दौष्कुलेयेन कुल्यां माहाकुलीं प्रियां।
हृतां माहाकुलीनस्य तस्य लिप्सामहे वयं॥ ८८॥

केनेत्यादि। तस्य रामस्य प्रियां केनापि दौष्कुलेयेन हृतां दुष्कुलस्यापत्यमिति दुष्कुलाड्ढञ् कुल्यां कुले साध्वीं तत्र साधुरिति यत् माहाकुलीं माहाकुलीनस्येति महाकुलस्यापत्यमिति महाकुलादञ्खञाविति अञ्खञौ लिप्सामहे वयं लब्धुमिच्छामहे ॥ ८८ ॥ ज०म०

केनेत्यादि। तस्य रामस्य प्रियां वयं लिप्सामहे लब्धुमिच्छामः लभेः सनिमिमीत्यादिना इस् खिलोपश्च स्यादेरिति सोलोपः झपझसोरिति पत्वं प्रियां कीदृशीं केनापि दौष्कुलेयेन दुष्कुलोत्पन्नेन हृतां दुष्कुलशब्दात् अख्यादित्वात् ष्णेयः निष्पन्नवदितिवत् मूर्द्धन्यः कुल्यां कुले साध्वीं ढघेकादिति यः माहाकुलीं महाकुलात् जनकात् जातां वाक्वाद्यतदति शिवादित्वात् ष्णः तस्य कीदृशस्य महाकुलीनस्य महाकुलोत्पन्नस्य परमते महाकुलादपत्यार्थे षीनः ततः शिवादित्वात्ष्णः किम्बा महाकुलाद्दूरस्याज्जातद्रत्यर्थे ढघेकादिति षीनः ॥ ८८ ॥ भ०

त्रिंशत्तममहर्यातं मत्वा प्रत्यागमावधिं। अकृतार्थाविषीदन्तः परलोकमुपास्महे ॥ ८९ ॥

त्रिंशदित्यादि। त्रिंशतः पूरणं विंशत्यादिभ्यइति तमट् त्रिंशत्तमं यदहः तत्प्रत्यागमावधिं प्रत्यागमनस्यावधिं यातं अतीतं मत्वा अकृतार्थाअनिष्पादितप्रयोजनाविषीदन्तोविषादं गच्छन्तो वयं परलोकमुपास्महे प्रायोपवेशनेन म्रियामहे ॥ ८९ ॥ ज०म०

भ० चिरमित्यादि। राज्ञा अस्माकं प्रत्यागमनस्यावधित्वेन नि
श्चितं चिरमतः पूरणं दिनं यातं गतं मत्वा वयं अकृतार्थाअनिष्पा
दितस्वप्रयोजनाः सन्तः विषीदन्तोविषादं कुर्व्वन्तः प्रायोपवेश
नया परलोकं उपास्महे गन्तुमिच्छामः चिरशब्दात् चिरत्वा
देर्व्वेति तमट्॥ ८८॥

म्रियामहे न गच्छामः कौशल्यायनिवल्लभां। उप
लभ्यामपश्यन्तः कौमारीं पततां वर॥ ९०॥
एते प्रकीर्णकाः।

ज०भ० म्रियेत्यादि। हे पततां पक्षिणां वर म्रियामहे न गच्छामः
कौमारीं अक्षतपूर्व्वदारपतिं लब्धवतीं कौमारादपूर्व्ववचनइति
साधुः कौशल्यायनिवल्लभां कौशल्याया अपत्यं कौशल्यायनी
रामः कौशल्यकार्म्मार्य्याभ्यांचेति फिञ् फस्यायनादेशः तस्य
वल्लभां दृष्टां उपलभ्यां प्रशस्तां पोरदुपधादिति यत् उपात्प्रशंसा
यामिति यत्प्रत्यये नुम् अपश्यन्तोऽनुपलभमानाः। एते प्रकी
र्णकाः॥ ९०॥

भ० म्रियेत्यादि। हे पततां वर पक्षिणां श्रेष्ठ वयं म्रियामहे न तु
गच्छामः अर्थात् प्रभुपार्श्वं यतः कौशल्यायनिवल्लभां रामप्रियां
अपश्यन्तः कौशल्याया अपत्यमिति नडादित्वात् प्फायनः ततः
स्वार्थेष्णिः कीदृशीं उपलभ्यां स्तुत्यां पूजकस्येति यः उपात्स्तुता
विति नुम् कौमारीं जितकार्त्तिकेयभार्य्यां यतिरूपवतीमित्यर्थः
कुमारस्य कार्त्तिकेयस्य पत्नी कुमारी पत्यामपासकाकादिति
ङीप् स्कन्दोमन्दमतिर्व्विवाहविमुखोधत्तेकुमारव्रतमिति काव्य

निकं मतु प्रहतं देवसेना नामेन्द्रकन्या कार्त्तिकेयस्य पत्नी प्रसिद्धा तथाहि शतक्रतोरूपवती देवसेनेति वै सुता। सा महेन्द्रेण रत्यर्थं भार्य्यार्थे नोपपादितेति स्कन्दपुराणीयं वचनममरकोषटीकायां मधुमाधवेन धृतं अथोपयन्त्रा सदृशेन युक्तां स्कन्देन साक्षादिव देवसेनामिति कालिदासः कुमारीं जयतीति ढघेकादिति ष्णः णित्तेत्रिः ययोर्लोपः पित्त्वादीप् किम्वा कौ पृथिव्यां मारीं माया लक्ष्या रोर्गतिर्यस्यां लक्ष्मीरूपामित्यर्थः एतेनादरातिशयउक्तः मा लक्ष्मीस्समकीर्त्तिता धने रा रीर्गतिः ख्याता रोदने च प्रकीर्त्तिता इति चैकाक्षरकोषः वङ्क्रप्रेयसी इत्युदाहरता वृतःक इत्यस्य व्यभिचारोदर्शितः तेनात्र काभावः किम्वा कुमारएव कौमारः स्वार्थे ष्णः कौमारस्य भार्य्यां रामस्य प्रथमपत्नीमित्यर्थः एतेनाप्यादरातिशयउक्तः अन्ये तु कुमारात् प्रथमपत्न्यां ष्णदत्याङः खमतेऽपि प्रथमपत्नीत्वमर्थाङ्गम्यते तथाहि कुमारशब्देन ऋ तदारपरिग्रहउच्यते तदूढात्वेन प्रथमपत्नीत्वं। एते प्रकीर्णकाः॥ ९०॥

जगाद वानरान् पक्षी नाध्यगीढ्वं ध्रुवं स्मृतीः। यूयं सङ्कुटितुं यस्मात् कालेऽस्मिन्नध्यवस्यथ॥ ९१॥

इतः क्षितिभेषमधिकृत्याह जगेत्यादि। ध्रुवं अवश्यं स्मृतिं स्मृतिशास्त्रं नाध्यगीढ्वं नाधीतवन्तदति पक्षी वानरान् जगाद विभाषालुङ्लृङोरिति विभाषागाङादेशः गाङ्कुटादिभ्य

इति षिचोक्त्विं घुमास्थेतीत्वं धिचेति षिचोलोप इणःषीढ्ढमिति मूर्द्धन्यः यस्माद्यूयमस्मिन् काले संकुटितुं अवसातुमध्यवस्यथ अभिप्रायं कुरुथ कुटादित्वात् ङित्त्वं ॥ ९१ ॥

भ० अथ ङिदतिदेशाधिकारः। पाणिनिमते कुटादिसूत्रसमूहैः ङानुबन्धत्वातिदेशात् स्वमते त्वगुणाधिकारः। जगेत्यादि। सपक्षो वानरान् जगाद किमित्याह ध्रुवं निश्चितं उतोऽपि वा यूयं स्मृतीर्धर्म्मसंहितानाध्यगीढ्वं नाधीतवन्तः इङश्चाध्वं गीङस्थोर्व्वेति गीरादेशः घत्वान्न णुः धेसलोपोवेति सेर्लुक् टोढो ढोधेढोति धस्य ढः यस्मादस्मिन् काले संकुटितुं मर्त्तुं यूयं अध्यवस्यथ इच्छथ कुटश्चकौटिल्ये प्रभुकार्य्यं त्यक्त्वा मरणमेवात्र कौटिल्यं धातोरनेकार्थत्वाद्वा कुटांणुश्रीञ्झितीति नियमादगुणत्वं अध्यवपूर्व्वस्य षोयन्नाशे इत्यस्य यन्योत्श्वमादीति ओकारलोपः ॥ ९१ ॥

नायमुद्विजितुं कालः स्वामिकार्य्याद्भवादृशां। हृतभार्य्ये च्युते राज्याद्रामे पर्य्युत्सुके भृशं ॥ ९२ ॥

ज०म० अयमेवावसितुं काल इति चेदाह नायमित्यादि। भवादृशां युष्मद्विधानां स्वामिकार्य्यादुद्विजितुं नायं कालः विज इडिति ङित्त्वं किमिति न भवतीति चेदाह राज्याच्च्युते भ्रष्टे रामे निर्व्वासितत्वात् तत्रापि हृतभार्य्ये भृशमत्यर्थं पर्य्युत्सुके सीतायां ॥ ९२ ॥

नायमित्यादि। भवादृशां युष्मद्विधानां सत्पुरुषाणां स्वामि कार्य्यात् उद्विजितुं चलितुं नायं कालः समयः कुतइत्याह राज्यात् च्युते भ्रष्टे रामे तत्रापि हृतभार्य्ये भृशमत्यर्थं पर्य्युत्सुके च सति तु भार्य्या युष्मद्वचनेन ज्ञातुमित्यर्थात् विजेर्णुर्निमीत्यगुणत्वं॥ ९२॥ भ०

यत्नं प्रोर्णुवितुं तूर्णं दिशं कुरुत दक्षिणां। प्रोर्णु विन्नीं दिवस्तत्र पुरीं द्रक्ष्यथ काञ्चनीं॥ ९३॥

यत्नमित्यादि। दक्षिणां दिशं प्रोर्णुवितुं आच्छादयितुं तुमुन् तूर्णं शीघ्रं यत्नं कुरुत तस्यान्दिशि पुरीं द्रक्ष्यथ काञ्चनीं प्राणि रजतादिभ्योऽञ् प्रोर्णुविन्नीं अभिव्यापिनीं तृचि रूपं दिवआकाशस्य कर्म्मणि षष्ठी विभाषोर्णोरिति ङित्त्वपक्षे उवङ् अङित्त्वपक्षे च गुणः कुरुतेति सार्व्वधातुकमपिदिति ङित्त्वे विकरणस्य गुणो न भवति तस्य चार्द्धधातुकत्वात् अङित्त्वे धातोर्गुणः अतउत् सार्व्व धातुकमपिदिति ङित्त्वे विकरणस्य गुणो न भवति॥ ९३॥ ज०म०

यत्नमित्यादि। दक्षिणां दिशं प्रोर्णुवितुं आच्छादयितुं तूर्णं शीघ्रमेव यूयं कुरुत तत्र दिशि काञ्चनीं स्वर्णनिर्म्मितां पुरीं द्रक्ष्यथ कीदृशीं दिवआकाशस्य प्रोर्णुविन्नीं अभिव्यापिकां कर्म्मणि षष्ठी ङिदिम्बोर्णोरिति ङित्त्वादगुणत्वे अच्श्नोरित्युव् पक्षे गुणः काञ्चनस्य विकारइत्यर्थे विकारसंघेति ष्णः वर्द्धोऽकिञ्जत्वइति दृशेश्छकारस्य रः॥ ९३॥ भ०

लङ्कां नाम्ना गिरेर्मूर्द्धि राचसेन्द्रेण पालितां। निर्जित्य शक्रमानीताद्दद्दृशुर्यां सुरस्त्रियः॥९४॥

ज॰म॰ लङ्कामित्यादि। याम्पुरीं नाम्ना लङ्कां सुरस्त्रियोदद्दृशुः दृष्टवत्यः असंयोगाल्लिट्किदिति कित्त्वं तां यातेति वक्ष्यमाणेन सम्बन्धः गिरेः सुवेलस्य मूर्द्धि स्थितां राचसेन्द्रेण पालितामिति दुर्गमलमाख्यातं शक्रं निर्जित्य सुरस्त्रियआनीतादिति च राव णस्य माहात्म्यं॥९४॥

भ॰ लङ्कामित्यादि। यां पुरीं नाम्ना लङ्कां सुरस्त्रियोदद्दृशुः तां द्रक्ष्यथेति पूर्व्वेण सम्बन्धः कित्ठीढीपमिति कित्त्वादगुणत्वं गिरेः सुवेलस्य मूर्द्धि स्थितां आश्रेयाधारसम्बन्धात् स्थितामिति लभ्यते राचसेन्द्रेण रावणेन पालितां रचितां सुरस्त्रियः कीदृश्यः शक्र मिन्द्रं निर्ज्जित्यानीताः राचसेन्द्रेण इत्यनुषञ्जनीयं एतेन तस्य वीर्य्यमपि ख्यापितं॥९४॥

वभूव याधिशैलेन्द्रं न्द्रदिवेवेन्द्रगोचरं। कुषित्वा जगतां सारं सैका शक्रे कृता भुवि॥९५॥

ज॰म॰ वभूवेत्यादि। अधिशैलेन्द्रं शैलेन्द्रस्य सुमेरोरुपरि सप्तम्यर्थे ऽव्ययीभावः इन्द्रगोचरमिन्द्रनिलयममरावत्याख्यां न्द्रदिवेव तिरस्कृत्येव वभूव इन्भिभवतिभ्यां चेति कित्त्वं जगतां सारङ्कु षित्वा निष्कुष्य सैका भुवि कृता निर्मितेत्यहं शङ्के तां यात न्द्रदि त्वाकुषित्वेति नक्तावेडिति किम्प्रतिषेधे प्राप्ते न्द्रडन्द्रदेत्यादि ना कित्त्वं॥९५॥

बभूवेत्यादि। या पुरी शैलेन्द्रस्य सुमेरोरुपरि इन्द्रस्य गोचरं विषयं अमरावत्याख्यं मृदित्वा अभिभूय बभूव अधिशैलेन्द्रं सुरालयं वा सप्तम्यर्थेऽव्ययीभावः अहमेवं शङ्के तर्कयामि जगतां सारमुत्कृष्टभागं कुषित्वा आकृष्य सैवैका भुवि कृता निर्म्मिता विश्वकर्म्मणेत्यर्थात् सेमचुधकुषेत्यादौ चुधादिवर्ज्जनात् कित्त्वं॥ ९५॥ भ०

अमृडित्वा सहस्राक्षं क्लिशित्वा कौशले निजे। उदित्वाऽलञ्चिरं यत्नात् सैका धात्रा विनिर्म्मिता॥ ९६॥

अमृडीत्यादि। सहस्राक्षमिन्द्रममृडित्वा असुखिनं कृत्वा निजैः आत्मीयैः कौशलैः चिरं क्लिशित्वा प्रयत्नं कृत्वा उदित्वा अभिधायालम्पर्य्याप्तमेवं करिष्यामीति यत्नात् महता प्रयासेन सैका धात्रा वि नर्मिता पूर्व्ववत्कित्त्वं॥ ९६॥ ज०म०

अमृडीत्यादि। सहस्राक्षं इन्द्रं अमृडित्वा असुखिनं कृत्वा निजे आत्मीये कौशले नैपुण्ये चिरं क्लिशित्वा क्लेशमनुभूय अलं पर्य्याप्तमेवमेवं करिष्यामीत्युदित्वा कथयित्वा चिरकालेन यत्नात् सैका धात्रा निर्मिता इत्यपि अहं शङ्क इत्यनेनान्वयः मृडमृदगुधकुषक्लिशवदवसः क्त्वा इति कित्त्वम् क्लिशः क्त्वानिष्ठयोरिति वेट् क्लिश उपतापे पूङ्क्लिशिभ्यां वेति इट् वेम् क्लिश गत्ओविरोधे इत्यस्य तु वेमूदित्यादिना वदेवाचि सर्व्वत्र सेम चुधेत्यादिवर्ज्जनात् कित्त्वं वदेर्यजादित्वात्सम्प्रसारणं कुशलस्य भावः कर्म्म वेति विकारसंघेति ष्यञ्॥ ९६॥ भ०

मुषित्वा धनदं पापोयां गृहीत्वावसद्द्विषन्। तां रुदित्वेव शक्रेण यात लङ्कामुपेक्षितां॥ ९७॥

मुषित्वेत्यादि। मुषित्वा धनदं वैश्रवणं तस्मात्पुरं पुष्पकञ्च विमानमपहृतं पापः पापाचरणात् यां गृहीत्वा अवसत् उषितः द्विषन् शत्रुः शक्रेण रुदित्वेवोपेक्षितामवधीरितां रुदविदेति कित्वं तत्र चकारेणक्त्वेत्यनुवर्त्तते॥ ९७॥

भ॰ मुषीत्यादि। धनदं कुवेरं मुषित्वा वञ्चित्वा ततएव यां लङ्कां गृहीत्वा पापः कुत्सिताचारो द्विषन् शत्रू रावणोऽवसत् तां यूयं यात गच्छत कीदृशीं शक्रेण इन्द्रेण रुदित्वा क्रन्दित्वेव उपेक्षितां त्यक्तां न तु पारयित्वेति भावः मुषगलुटने लघिरुदरोदे क्त्वु क्त्वेवा हमादेरित्यादिना कित्त्वादगुणत्वं ग्रहेः सेमचुधेत्यादिना कित्त्वात् ग्रहस्वपाद्योरिति जिः ग्रहेरिमोर्घइति दीर्घत्वं॥ ९७॥

विदित्वा शक्तिमात्मीयां रावणं विजिघृक्षवः। उक्तां पिपृच्छिषूणां वोमास्मभूत सुषुप्सवः॥ ९८॥

ज॰म॰ विदीत्यादि। आत्मीयां शक्तिं सामर्थ्यं विदित्वा पूर्व्ववत्कित्त्वं रावणं विजिघृक्षवः विगृहीतुमिच्छवः सुषुप्सवः शयितुमिच्छवो मास्मभूत न प्रमत्ताभवतेत्यर्थः रावणस्य वलीयस्त्वादिदमुक्तं मया वोयुष्माकम्पिपृच्छिषूणां प्रष्टुमिच्छूनां अत्र रुदविदेति सनः कित्त्वे सम्प्रसारणं प्रच्छेः किरश्च पञ्चभ्यइतीडागमः॥ ९८॥

विदित्वेत्यादि। आत्मीयां शक्तिं सामर्थ्यं विदित्वा ज्ञात्वा रावणं विजिघृक्षवो विरोधयितुमिच्छवः सन्तो यूयं सुषुप्सवः शयितुमिच्छवो मा स्म भूत सावज्ञा असावधाना भवतेत्यर्थः रावणस्य मायावित्वाद्बलवत्त्वाच्च एतत्सर्व्वं पिपृच्छिषूणां प्रष्टुमिच्छतां वो युष्माकं कृते मया उक्तं एतेनापृष्टभाषणेऽनौचित्यं परिहृतं सम्बन्धविवक्षया षष्ठी विदग्राने व्युक्तोऽवदृति कित्त्वं ग्रहउपादाने सन् नेमुगुहग्रहदृति अनिम् ग्रहस्वपप्रच्छांक्तिरिति जिः पूर्नानि मीत्यगुणत्वं चोढः श्रभान्तस्येति घत्वं षढोःकदृति कः किरादिति षः सन्भिचेति उः प्रच्छेःसनि स्मिङ्पूङ्त्यादिना इम् ॥ ९८ ॥

नाविविदिषुमभ्येति सम्पद्रुरुदिषुं नरं। किं मुमुषिषुवद्यात द्विषोनापचिकीर्षया ॥ ९९ ॥

नावीत्यादि। वेदितुं ज्ञातुमिच्छुर्यो न भवति तं नरमविविदिषुं रुरुदिषुं रोदितुमेषणस्वभावं सम्पद्विभूतिर्नाभ्येति नागच्छतीति योमयोक्तमिति योज्यं किन्न यात न गच्छत मुमुषिषुवत् चौरवदित्यर्थः पूर्व्ववत्कित्त्वं द्विषः शत्रोरपचिकीर्षया अपकर्त्तुमिच्छया इकोझलीति कित्त्वे गुणोन भवतीति अज्झनगमांसनीति दीर्घः ऋतइद्धातोः ॥ ९९ ॥

नावीत्यादि। सम्पत् सम्पत्तिरविविदिषुं वेदितुं ज्ञातुमनिच्छुं रुरुदिषुं अनध्यवसायात् रोदनेच्छुं नरं पुरुषं न अभ्येति न

अभिगच्छति तेन ज्ञापनार्थं प्रब्रवीमि वइति वक्ष्यमाणेन सम्बन्धः
द्विषः शत्रोरपचिकीर्षया अपकारेच्छया मुमुषिषुवत् चौरवत्
यूयं किं न यात तदैव सीतादर्शनसम्भवात् युङोऽवइत्यादिना
विदरुदमुषः सनः कित्वादगुणत्वं हलः सनि घोऽज्झनिक्रमा
मिति दीर्घः पुर्नानिमीत्यगुणत्वे च्छदिरणाविति इट् व्येनचूत
यीति दीर्घः संख्यादइति अः॥ ९९ ॥

बुभुत्सवोद्रुतं सीतां भुत्सीद्धं प्रब्रवीमि वः। मा च
भङ्क्त मृषोक्तं नः कृषीढ्वं स्वामिने हितं ॥ १०० ॥

ज०म० बुभुत्सेत्यादि। बुभुत्सवो ज्ञातुमिच्छवः यदि सीतां बुधेस्सनन्ता
द्रुसन्ताचेति कित्वं एकाचइति भष्भावः तदा द्रुतं तां भुत्सीध्वं
जानीतेति वो युष्मान् ब्रवीमि लिङ्सिचाविति कित्वं मृषोक्तं मिथ्यो
क्तं नोऽस्माकं माच भुङ्क्तं न जानीत अपितु सत्यं झलोझलीति
सिचोलोपः झलांजश्झशि कित्वं पूर्ववत् अतोयूयं स्वामिने
रामाय हितं कृषीढ्वं कुरुत उश्चेति कित्वं इणः षीध्वमिति मूर्द्धन्यः
॥ १०० ॥

भ० बुभुदित्यादि। सीतां बुभुत्सवोवोद्धुमिच्छवोयूयं द्रुतं शीघ्र
मेव भुत्सीध्वं जानीत इति वो युष्मान् अहं प्रकृष्टं ब्रवीमि अस्माक
मुक्तं वचनं मृषा मिथ्या मास्म भुङ्क्तं न जानीत अपितु सत्यमेव
अस्मदएकत्वे वा बहुत्वमभिधानात् स्वामिनो रामस्य हितं कृषीढ्वं
कुरुत षमार्थैनेत्यादिना षष्ठी स्वामिने इति पाठे अकार्थवच
निति चतुर्थी बुध्यीकवेदने सनि पुर्नानिमीत्यगुणत्वं अभाक्त

क्षेति भवं अन्यत्र क्त्वाः सीध्वं इगुडुर्मेढोति कित्त्वाद्गुणत्वं अपर च माङ्योगेऽमोऽभावः झषस्तादिति सेर्लोपः क्नोक्त्वाःसीध्वं पूर्व्व वत् कित्त्वं टोठोढोधोढिति धस्य ढत्वं ॥। १०० ॥

समगध्वं पुरःशत्रोर्मोदयध्वं रघूत्तमं। नोपायध्वं भयं सीतां नोपायंस्त दशाननः॥ १०१ ॥

समेत्यादि। इदमहमाशंसे यदुत शत्रोः रावणस्य पुरः अग्रतः समगध्वं सङ्गताभवत आशंसायां भूतवच्चेति लुङ् समोगम्य ह्वीति तङ् वागमइति सिचः कित्त्वे अनुदात्तेत्यनुनासिकलोपः ह्रस्वादङ्गादिति सिचोलोपः मोदयध्वं रघूत्तमं हर्षयत तत्का र्य्यकरणात् मा च भयमुपायध्वं सूचयत भयं माकार्ष्टेत्यर्थः आङोयमहनइति तङ् यमोगन्धनइति सिचः कित्त्वे अनुनासिक लोपः गन्धनं सूचनं अन्यथा युष्मासु गन्धितभयेषु नियतमसौ दशानः सीतामुपायंस्त स्वीकृतवान् स्यात् तस्य दुर्वृत्तत्वात् आशंसायां भूतवच्चेति अनिष्टाशंसायां लुङ् उपाद्यमःस्वीकरण इति तङ् स्वीकरणञ्चात्र विवाहनमुक्तं विभाषोपयमइति अकित्त्वपक्षे रूपं॥ १०१॥ ज०म०

समेत्यादि। इदमहमाशंसे यत् शत्रोरावणस्य पुरोऽग्रतो यूयं समगध्वं सङ्गताभवत अभिधानादाशंसायां टो आशंसायां भूतसामान्यविहिताच्चेति परः समोगम्यृच्छेति मं इगुडुर्मटीत्या दिना सेःकित्त्वात् वनतनाद्यनिमामिति मलोपः झषस्तादिति सिलोपः रघूत्तमं रामं यूयं मोदयध्वं हर्षयत तत्कार्य्यकरणात् भ०

भयं न उपायध्वं न सूचयत न कुरुतेत्यर्थः यमःसूचनइति सेः किस्मात् सलोपः आत्मनेपदाधिकारमध्ये यमःसूचनइत्यस्य करणादेव सूचनार्थे यमआत्मनेपदं किम्वा उपयमोविवाह इत्यनेन सं तत्र विवाहः स्वीकारः उपायमः स्वीकरणइति पर सूत्रं यमःसूचनेवाहुदाहे इत्यत्रापि उदाहः स्वीकारः स्वीकरणे वेति परसूत्रं स्वीकारार्थेन परिणयोऽपि गम्यते तदा भयं न उपायध्वं न स्वीकुरुत दशाननः सीतां न उपायंस्त विवाहेन न स्वीकृतवान् न स्वीकरोतु वा अत्राप्यात्मंशायां टी वाहुदाहइति किस्वाभावपक्षे सलोपाभावः इत्येवं जगाद वानरान् पक्षीत्य न्वयः॥ १०१॥

ततः प्रास्थिषताद्रीन्द्रं महेन्द्रं वानराद्रुतं। सर्व्वे किलकिलायन्तो धैर्य्यञ्चाधिषताधिकं॥ १०२॥

ज०म० ततइत्यादि। ततः सम्पातिवचनानन्तरं सर्व्वेवानरामहेन्द्रं पर्व्वतं प्रास्थिषत प्रस्थितवन्तः धैर्य्यञ्चाधिकमाधिषत आहितवन्त आत्मनि तिष्ठतेर्द्धातेश्च स्थाध्वोरिचेति कित्त्वमिलश्च तिष्ठतेः समवप्रविभ्यःस्थइति तङ् किलकिलायन्तः किलकिलाध्वनिं कुर्व्वाणाः अव्यक्तानुकरणेत्यादिना डाच् तदन्तात् लोहितादि डाज्भ्यःक्यष् वाक्यइति परस्मैपदं॥ १०२॥

भ० ततइत्यादि। सम्पातिवचनानन्तरं सर्व्वे वानरा महेन्द्रं पर्व्वतं प्रास्थिषत प्रस्थितवन्तः द्रुतं शीघ्रं मुहुरिति पाठे किलकिलायन्त इत्यनेन सम्बन्धः प्रपूर्व्वात्तिष्ठतेः प्रतिज्ञानिर्णयेत्यादिना सं स्था

ईर्ङिरिति ङिरनुबन्धस्य मान्तोऽदनतइत्यत् अधिकं धैर्यञ्च आत्मनि आधिषत आहितवन्तः धाञोञिन्त्यन्तेत्यादिना सं अन्यत् पूर्व्ववत् कीदृशाः किलकिलायन्तः किलकिलाशब्दं कुर्व्वन्तः नैकाचोव्यक्तानुकरणादिति डाच् डिलस्य डाच्लोहितादेरिति क्यः पञ्च ॥ १०२ ॥

निकुञ्जे तस्य वर्त्तित्वा रम्ये प्रक्ष्वेदिताः परं। मणिरत्नाधिशयितं प्रत्युदैक्षन्त तोयधिं ॥ १०३ ॥

निकुञ्जइत्यादि। तस्य पर्व्वतस्य निकुञ्जे लतादिपिहितस्थाने वर्त्तित्वा स्थित्वा नक्त्वावेङिति किक्त्वप्रतिषेधः परं प्रक्ष्वेदिताः उच्चैरव्यक्तशब्दकुर्व्वाणाः निष्ठाशीङिति किक्त्वप्रतिषेधः तोयधिं प्रत्युदैक्षन्त दृष्टवन्तः तस्कि रूपं कीदृशं मणिरत्नाधिशयितं क्तोऽधिकरणेचेति क्तः पूर्व्ववत्किक्त्वप्रतिषेधः कीदृशं मणिरत्नाधिशयितं मणयंइत्नमिति स्त्रीरत्नादावपि रत्नशब्दस्य दृष्टत्वात् एकपदव्यभिचारे विशेषणविशेष्यभावः तस्याधिशयितमवस्थानमित्यर्थः ॥ १०३ ॥ 

निकुञ्जइत्यादि। तस्य पर्व्वतस्य निकुञ्जे लतादिपिहितस्थाने रम्यत्वात् वर्त्तित्वा स्थित्वा परमतिशयेन प्रक्ष्वेदिताश्रव्यक्तशब्दं कर्त्तुमारब्धावानरास्तोयधिं समुद्रं प्रत्युदैक्षन्त दृष्टवन्तः कीदृशं मणिरत्नाधिशयितं मणिरत्नैर्मणिश्रेष्ठैरधिशयितं अधिष्ठितं कर्म्मक्रियेत्यादिना अधिपूर्व्वशीङ्आधारस्य कर्म्मत्वात् कर्म्मणि क्तः आधारेक्तइति केचित् भाक्ति स्थिदकूजने श्वेतादिक्तेक्तइति 

कर्त्तरि क्तः भावादिकर्मणोर्वेति पचे इट् उभयत्र पूङ्धृषेत्यादिना गुणः वर्त्तिलेत्यत्र सेमचुधेत्यादिना कित्त्वनिषेधात् गुणः॥ १०३॥

अमर्षितमिव घ्नन्तं तटाद्रिं सलिलोर्म्मिभिः। श्रिया समग्रं द्युतितं मदेनेव प्रलोठितं॥ १०४॥

ज०म० अमेत्यादि। सलिलोर्म्मिभिः कल्लोलैः तटाद्रीन् तटस्थान् पर्व्वतान् घ्नन्तं प्रत्युदैचन्त अमर्षितमिव मृषेस्तितिचायामिति कित्त्वप्रतिषेधः पश्चात् नञ्समः श्रिया हेतुभूतया समग्रं संपूर्णं द्युतितमिति कर्त्तरि निष्ठा यदि वा श्रिया कर्त्तृभूतया द्युतितं शोभितं अचेत्यध्याहृत्य तमैचन्तेति योज्यं एवञ्च कृत्वा उदुपधादित्यादिना भावे निष्ठायां विकल्पेन कित्त्वप्रतिषेधात् कित्त्वमुदाहृतं मदेनेव मत्ततयेव श्रिया हेतुभूतया प्रलोठितं घूर्णितुमारब्धं आदिकर्म्मणि निष्ठायामकित्त्वमुदाहृतं॥ १०४॥

भ० अमेत्यादि। तोयधिं प्रत्युदैचन्तेत्यत्रान्वयः सलिलोर्म्मिभिर्जलवेगैस्तटाद्रीन् तटसम्बन्धिनः पर्व्वतान् घ्नन्तं अमर्षितमिव क्रुद्धमिव पूङ्धृषेत्यादिना चमार्थस्य योगुणः पश्चान्नञ्समासः उर्म्मिः स्त्रीपुंसयोर्वीच्यां प्रकाशे वेगभङ्गयोरिति मेदिनी वीचिवाचिलेऽत्र सलिलपदं स्वरूपकथनार्थं श्रिया हेतुभूतया समग्रं सम्पूर्णं यथा स्यात्तथा द्युतितं शोभमानं गत्यर्थाकर्मकेति कर्त्तरि क्तः दीपितुमारब्धं वा तदा भावादिकर्मणोर्वेत्युदुपधादिकोऽन्यतरस्यामिति पचे गुणाभावः मदेन मत्ततयेव प्रलोठितं घूर्णितुमारब्धं तदा पचद्वयलात् आदिकर्मणि क्तः पूर्व्वत्र पचे गुणः॥ १०४॥

पूतं शीतैर्नभस्वद्भिर्यन्थित्वेव स्थितं रुचः। गुम्फित्वेव निरस्यन्तं तरङ्गान् सर्व्वतोमुकः॥ १०५॥

पूतमित्यादि। नभस्वद्भिर्व्वायुभिः शीतैः पूतं पवित्रीकृतं पूञ सेति विकल्पेनेट् अतएव पक्षे पूनः क्त्वानिष्ठयोः कित्त्वप्रतिषेधोऽत्र न भवति तत्र सेडित्यनुवर्त्तते रुचोदीप्तीर्ग्रथित्वेव संदर्भ्येव स्थितं नोपधात्थफान्ताद्वेति कित्त्वप्रतिषेधपक्षे रूपं सर्व्वतस्तरङ्गान् गुम्फित्वेव निरस्यन्तं क्षिपन्तं नोपधादिति विकल्पेन कित्त्वप्रति षेधः यचेत्यध्याहृत्य तमैक्षन्तेति योज्यं॥ १०५॥ ज०म०

पूतमित्यादि। शीतैः शीतलैर्नभस्वद्भिर्व्वायुभिः पूतं पवित्री कृतं तोयधिं प्रत्युदैक्षन्तेत्यनेन सम्बन्धः पूङ्क्तिमवमेति इटोऽभाव पक्षे पूङ्शीधृषेत्यादौ सेमग्रहणान्न गुणः नभःशब्दान्मोऽस्मत्पादतु रिति वतुः नदंतसाविति पदत्वनिषेधात् सौर्व्वि.फद्दत्यस्य पदान्त विषयत्वान्न विसर्गाभावः रुचोदीप्तीर्ग्रन्थित्वेव स्थितं सर्व्वत्र दीप्ति मत्त्वात् उत्प्रेक्षेयं ग्रन्थकिगसन्दर्भे थफान्नुकद्दति विकल्पेनाकि त्त्वात् नलोपाभावः सर्व्वत्र तरङ्गान् गुम्फित्वेव मुक्तः पुनःपुनर्निर स्यन्तं क्षिपन्तं गुन्फग्रग्रन्थे पूर्व्वेण पक्षे किश्वात् नस्तुङ्खोपद्दति नलोपः॥ १०५॥ भ०

वञ्चित्वाप्यम्बरं दूरं स्वस्मिंस्तिष्ठन्तमात्मनि। तृषि त्वेवानिशं स्वादु पिबन्तं सरितां पयः॥ १०६॥

ज॰म॰ वश्चीत्यादि। स्थित्यनतिक्रमादम्बरं दूरम्वश्चित्वातिक्रम्य वश्चिलुञ्चीति कित्त्वप्रतिषेधः तस्मिन्नात्मनि स्वरूपे तिष्ठन्तं अच मन्क्ष्व्यप्रशानिति नकारस्य रुत्वं पूर्व्वस्य त्वनुनासिकादेशः तृषि त्वेव तृषितद्व भूत्वा तृषिमृषीत्यादिना प्रतिषेधः तत्सलिलस्या स्वादुत्वात् सरितामपयः स्वादु पिवन्तं अनिशमजस्रं॥१०६॥

भ॰ वञ्चित्वेत्यादि। पुनः कीदृशं तोयधिं अम्बरमाकाशं वञ्चि त्वापि अतिक्रम्यापि स्वस्मिन् स्वकीये आत्मनि स्वरूपे तिष्ठन्तं मर्य्यादानतिक्रमात् पृथ्वगाउच्चोऽपि भूत्वा तां नातिक्रामतीति भावः वञ्चुगत्यां तृषमृषकृषेत्यादिना विकल्पेनाकित्त्वात् नलो पाभावः तृषित्वेव अनिशं सततं स्वादु मधुरं सरितां पयोनदीनां जलं पिवन्तं स्वजलस्य क्षारत्वात् जिहृषापिपासायां पूर्व्वेण कित्त्वादगुणत्वं॥१०६॥

द्युतित्वा शशिना नक्तं रश्मिभिः परिवर्द्धितं। मेरो र्ज्जेतुमिवाभोगमुच्चैर्दिद्योतिषुं मुहुः॥१०७॥

भ॰ द्युतीत्यादि। शशिना नक्तं रात्रौ द्युतित्वा दीप्तिमता भूत्वा रश्मिभिः परिवर्द्धितं वृद्धिं नीतं सन्तं तोयधिं मेरोराभोगमवष्टम्भं जेतुमिव मुहुरुच्चैर्दिद्योतिषुं वर्द्धितुमिच्छुमित्यर्थः अनेकार्थत्वाद्धा तूनां द्युतित्वा दिद्योतिषुमिति रलोव्युपधादिति किस्वाकित्त्वे मच क्षुकारोपधादिकारोपधाच्च रलन्ताद्धलादेर्धातोः परो क्त्वासनौ वा न कितौ भवतइति सूत्रार्थः॥१०७॥

द्युतित्वेत्यादि। पुनः कीदृशं तोयधिं अग्निना नक्तं रात्रौ भ० द्युतित्वा दीप्तिमता सता रश्मिभिः परिवर्द्धितं वृद्धिं नीतं द्युतल्लङ् दीप्तौ युङ्गोऽवोदृषादेरिति वा कित्वाद्गुणाभावः मेरोराभोगं परिपूर्णतां जेतुमिव ततउच्चैरधिकं मुहुः पुनःपुनः दिद्योतिषुं द्योतनमिच्छन्तं उच्चैर्भूत्वा द्युतिमिच्छन्तं वा धातोरनेकार्थतया उच्चैरूर्द्ध्वं वर्द्धितुमिच्छन्तमिति केचित् द्युतेः सनि द्युत्स्वाप्यो रिति खेर्ज्जिः पूर्व्वेण पचे कित्वाभावात् गुणः॥१०७॥

विलोक्य सलिलोच्चयानधिसमुद्रमभ्रंलिहान् भ्रम न्मकरभीषणं समधिगम्य चाधः पयः। गमागमसहं द्रुतं कपिवृषाः परिप्रैषयन् गजेन्द्रगुरुविक्रमं तरुमृ गोत्तमं मारुतिं॥१०८॥

इति भट्टिकाव्येऽधिकारकाण्डे द्वितीयः काव्यस्य सप्तमः सर्गः॥७॥

विलोक्येत्यादि। कपिवृषाः कपिमुख्या मारुतिं हनूमन्तं द्रुतं ज०म० परिप्रैषयन् व्यसर्ज्जयन् परिप्रपूर्व्वादिषुगताविति यस्मात् हेतुमण्ण्यन्तात् लङ् रूपं किं कृत्वेत्याह विलोक्य सलिलोच्चयान् सलिलो र्म्मीन् ऊर्द्ध्वचीयतइत्यचेरच् अधिसमुद्रं समुद्रस्योपरि अभ्रंलि हान् दूरमुच्छ्रितान् अधस्य पयः समधिगम्य ज्ञात्वा कीदृशं भ्रम द्भिर्म्मकरैर्भीषणं भयानकं भीषयतीति नन्द्यादित्वाल्ल्युः गमागम सहं गमनागमनयोग्यं मारुतिं गजेन्द्रस्येव गुरुर्व्विक्रमो यस्य

तरुमृगेषु वानरेषूत्तममिति सप्तमीति योगविभागात्समासः। इति ङित्त्वातिदेशाधिकारः॥ १०८॥

इति भट्टिकाव्यटीकायां जयमङ्गलायामधिकारकाण्डे द्वितीयः परिच्छेदः काव्यस्य सीतान्वेषणः सप्तमः सर्गः॥

भ० विलोक्येत्यादि अधिसमुद्रं समुद्रस्योपरि सलिलोच्चयान् तरङ्गान् अभ्रंलिहान् अत्युच्छ्रितान् विलोक्य अथश्च पयोजलं भ्रमद्भिरितस्ततो गच्छद्भिर्मकरैर्जलजन्तुविशेषैर्भीषणं भयानकं समधिगम्य ज्ञात्वा भयात् स्वयं गन्तुमशक्ताः कपिवृषाः कपिश्रेष्ठामारुतिं हनूमन्तं द्रुतं परिप्रैषयन् व्यसर्जयन् परिप्रपूर्व्वा दिषगताविति अस्मात् प्रेरणे ञ्यन्तात् घो मारुतिं कीदृशं गमने चागमने च समर्थं गजेन्द्रस्येव ऐरावतस्येव गुरुर्व्विक्रमो यस्य तं अतएव तरुमृगेषु वानरेषु उत्तमं श्रेष्ठं ऊर्द्ध्वं नीयत इत्यल् उच्चयः अधिसमुद्रमिति सप्तम्यर्थेऽव्ययीभावः अभ्रंलिहानिति तृभृवृहजीत्यादिना अभिधानादसंज्ञायामपि खः गुणाभावोऽप्यभिधानात् भीषणमिति नन्द्यादित्वादनः कभावेऽमो इत्यनेन वा अनट्। इति किदतिदेशाधिकारः॥ १०८॥

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरतसेनविरचितायां मुग्धबोधिन्यां भट्टिटीकायां अधिकारकाण्डे सप्तमः सर्गः॥

अगाधत ततो व्योम हनूमानुरुविक्रमः। अत्यशेरत तद्वेगं न सुपर्णार्कमारुताः॥ १।

आत्मनेपदमधिकृत्याह। अगाधतेति ततोविसर्जनानन्तरं हनूमान् समुद्रलङ्घनाय व्योमाकाशमगाधत प्रस्थितवान् गाधृ प्रतिष्ठालिप्सयोरित्यस्मात्लङ् अनुदात्तङितइति अनुदात्तेत्वादात्मनेपदं उरुविग्रहः कामरूपित्वात् तदानीमुत्पादितविपुलकायः तस्य चोत्पततोवेगं गरुडादित्यपवनाः नात्यशेरत नातिशयितवन्तः ङित्वात्लङ् शीङोरुट् शीङः सार्व्वधातुके गुणः॥१॥ ज॰म॰

आत्मनेपदाधिकारः स च स्वमते साधिकारः। अगेत्यादि ततः प्रेषणानन्तरं हनूमान् समुद्रलङ्घनाय व्योम आकाशमगाधत प्रस्थितवान् गाधृङ्प्रतिष्ठालिप्सयोः ङित्वान्नवशःपमे इति सं अगाहतेति पाठे डागाह्रविलोडे इत्यस्मात् घो उरुविग्रहः कामरूपित्वात्तदानीमुत्पादितमहाशरीरः सुपर्णार्कमारुतागरुडसूर्य्यवायवोऽपि तस्य हनूमतोवेगं न अत्यशेरत नातिचक्रमुः शीङ्लभित्स्वप्ने लानुबन्धत्वादादादिकः ङानुबन्धान्मं शीङोरेन्रिति गुणः मान्तोर्‌मिति रम् मान्तोऽदन्तइति अत् शोभनानि पर्णानि पत्नायस्य हिरण्मयत्वात् ससुपर्णः॥१॥ भ॰

अभायत यथार्केण सुप्रातेन शरन्मुखे। गम्यमानं न तेनासीदगतं क्रामता पुरः॥२॥

अभेत्यादि। यथा अर्केण सुप्रातेन सुप्रभातेन नीहाराद्यभावात् शोभनं प्रातरनेनेति सुप्रातः सुश्वेति समासान्तनिपातनं ज॰म॰

शरन्मुखे शरदारम्भे अभायत दीप्यते स्म भावकर्म्मणोरिति भावे तङ् तदर्त्तेनाभायत पुरोऽयतो यदर्केण गम्यमानमवष्टभ्यमानं वर्त्मेत्यर्थात् कर्म्मण्यात्मनेपदं तेन हनूमता क्रामता गच्छता क्षिति क्रमइति दीर्घत्वं नागतमासीत् अपितु सर्व्वमेव गतमिति ॥ २ ॥

भ० अभेत्यादि। शरन्मुखे शरदारम्भे सुप्रातेन सुप्रभातेनार्केण यथा अभायत दीप्यते स्म तथा तेन हनूमता अभायतेति सम्बन्धः भातेर्भावे घ्यामं शोभनं प्रातरस्येति सोःश्वःप्रातर्थ्यांडइति परः स्वमते प्रातरेव प्रातं स्वार्थेण्ः व्यटेर्लोपइति टिलोपः तेन समासः पुरोऽयतोऽर्केण गम्यमानं वर्त्मेत्यर्थात् क्रामता गच्छता तेन हनूमता अगतं नासीत् किन्तु गतमेव तेजसा वेगेन च हनूमतः सूर्य्य साम्यमुक्तं गमेः कर्म्मणि शानः ॥ २ ॥

वियति व्यत्यतन्वातां मूर्त्ती हरिपयोनिधी। व्यत्यैतान्चोत्तमं मार्गमर्केन्द्रेन्दुनिषेवितं ॥ ३ ॥

अ०म० वियेत्यादि। हरिपयोनिधी हनूमत्समुद्रौ मूर्त्ती स्वदेहौ वियत्याकाशे व्यत्यतन्वातां व्यतिविस्तारितवन्तौ तनोतेर्लङ् कर्त्तरि कर्म्मव्यतीहारइत्यात्मनेपदं उत्तमञ्च मार्गं अर्केन्द्रेन्दुनिषेवितं व्यत्यैतां व्यतिगतवन्तौ इणः परस्य लङ् कर्म्मव्यतीहारइत्यात्मनेपदं प्राप्तं नगतिहिंसार्थेभ्यइति गत्यर्थत्वात् प्रतिषिद्धं तेन तसस्तामादेशः तत्र हरेर्गच्छतः पुरतोयस्मिन्वियत्प्रदेशे स्वमूर्त्तिं विस्तारितुमवसरोभविता तत्र पयोनिधिरूर्म्मिभिः स्वमूर्त्तिं वितस्तार पयोनिधेश्च वेलातटप्लुततोयत्र स्वमर्त्तिं वितस्तार

यथा पयोनिधेर्यन्मार्गं गन्तुमवसरोभविता हरिस्तत्पत्य तं मार्गं गन्तुमैच्छत् यच्च हरेर्मार्गं गन्तुमवसरोभविता तं मार्गं पयोनिधिरभ्रंलिहैरूर्म्मिभिरैच्छत् यच्च यत्क्रियावसरे क्रियां करोति स तच्च तत्क्रियाकारीत्युपचर्य्यते यथा देवदत्तसाध्यां क्रियां यज्ञदत्तः कुर्व्वन् तत्कारीत्युच्यते ततस्तेतरेणेतरसम्बन्धिन्याः क्रियायाः करणात् अन्यतरसम्बन्धिन्यास्तेतरकरणात्सम्भवति कर्म्मव्यतीहारः॥३॥

विपतीत्यादि। हरिपयोनिधी हनूमत्समुद्रौ वियत्याकाशे भ० मूर्त्ती स्वदेहौ व्यत्यतन्वातां अन्योन्यं विस्तारितवन्तौ तन दुत्र्विस्तृतौ व्यतीहारे गतिहिंसेत्यादिना मं सूर्य्येन्दुचन्द्रनिषेवितं अतएव उत्तमं मार्गं आकाशं तौ व्यत्यैतां परस्परं जग्मतुः व्यतीहारे गतिहिंसाशब्दार्थहसान्येति गत्यर्थादिवर्ज्जनात् न व्यतीहारे मं हृणाभ्यां रूपं॥२॥

व्यतिजिग्ये समुद्रोऽपि न धैर्य्यन्तस्य गच्छतः। अगच्छन्नास्य न गतं प्रचण्डोऽपि प्रभञ्जनः॥४॥

व्यतीत्यादि।तस्य हरेर्गच्छतः स्वदेहस्याल्पतां कर्त्तुं योऽवसरो अ०म भावी तत्र समुद्रोनातिशयधैर्य्यं कृतवान् तेन तस्य धैर्य्यं न जितं तदानीं तस्योद्धतकल्लोलत्वात् अपिशब्दाच हनूमानपि समुद्रस्य शान्तत्वं कर्त्तुं योऽवसरोभावी तत्र नातिशयधैर्य्यं कृतवान् तेन तस्य धैर्य्यं वा न जितं तदानीं तस्य विपुलकायत्वात् तदेवं हनूमतः समुद्रोहनूमानपि समुद्रस्य धैर्य्यं न व्यतिजिग्ये नाभिबभूव

एकवचनस्य प्रत्येकाभिसम्बन्धात् कर्मव्यतीहारे पूर्ब्बवदात्मनेपदं वेल्लिटोर्मैरिति कुलं तस्य हनूमतोगतं गमनं प्रचण्डोऽपि महान् प्रभञ्जनोवायुर्न व्यत्यगच्छत् न प्राप्तवान्॥ ४॥

भ० व्यतीत्यादि। गच्छतस्तस्य हनूमतोधैर्य्यं समुद्रोऽपि न व्यतिजिग्ये नाभिभूतवान् निर्भयत्वात् अपिशब्दात् सोऽपि समुद्रस्य धैर्य्यं न व्यतिजिग्ये उद्वेगात् क्षोभेऽपि मर्य्यादालङ्घनात् एकवचनेऽपि उभयोरुभयापेक्षित्वाद्व्यतीहारः विपराभ्यां जेरिति न्यादेशः प्रचण्डोऽपि प्रभञ्जनोवायुरस्य हनूमतोगतं गमनं न अगच्छत् न प्राप्तवान् तस्यातिवेगत्वात् अस्येति क्तस्य भावकर्म्मीति भावक्तेन योगे कर्त्तरि षष्ठी॥ ४॥

व्यतिघ्नतीं पथिघ्नन्तं राक्षसीं पवनात्मजः। जघानाविश्य वदनं निर्यान् भित्वोदरं द्रुतं॥ ५॥

ज०म० तस्यातिजवेन गच्छतः पथि राक्षसी संप्राप्ता तामसौ व्यापादितवानित्याह व्यतीत्यादि हनिष्याम्येनमिति राक्षस्यायोवधकरणावसरः तत्र घ्नन् यः कश्चिदाप्तः तस्यैनां हनिष्यामीति योवधकरणावसरः तत्र घ्नतीमन्देवमितरेतरक्रियाकरणेन व्यतिघ्नतीं राक्षसीं नगतीत्यादिना हिंसार्थत्वादात्मनेपदप्रतिषेधः तां पवनात्मजोहनूमान् जघान कथं वदनमाविश्य उदरम्भित्वा द्रुतं निर्यान् निर्गच्छन् यातेःशतरि रूपं॥ ५॥

व्यतीत्यादि। पवनात्मजो हनूमान् गच्छन्नेव पथि संप्राप्तां राक्षसीं जघान किं कुर्व्वन् द्रुतं वदनं प्रविश्य उदरं भित्त्वा विदार्य्य निर्यान् निर्गच्छन् यातेः शतृ: कीदृशीं घ्नन्तं जनं व्यतिघ्नतीं अन्योन्यं घ्नतीं हिंसार्थवर्ज्जनात् व्यतीहारेऽपि न मं॥ ५॥ भ०

**अन्योन्यं स्म व्यतियुतः शब्दान् शब्दैस्तु भीषणान्।**
**उदन्वांस्तानिलोद्धूतोम्रियमाणा च राक्षसी॥ ६॥**

अन्योन्यमित्यादि। अन्योन्यमित्यन्योन्यस्येत्यर्थः कर्म्मव्यतीहारे सर्व्वनाम्नो द्वे भवतोऽसमासवच्च बहुलं यदा नासमासवत् तदा पूर्व्वपदस्योत्तरपदस्य च प्रथमैकवचने स्त्रीनपुंसकयोराम भाव इति वक्तव्यं अन्योन्यस्य सम्बन्धिभिः शब्दैः उदन्वद्राक्षस्यो शब्दान् भीषणानात्मीयान् व्यतियुतः स्म मिश्रितवन्तौ युमिश्रणाद त्यस्मात् लट् स्म इति भूते लट् इतरेतरेत्यादिना कर्म्मव्यतीहार आत्मनेपदप्रतिषेधः तत्रोदन्वतः शब्दकरणाद्योभीषणशब्दमिश्रणावसरो भावी तत्र राक्षसी म्रियमाणा शब्दान् भीषणानुदन्वच्छब्दैर्युयाव राक्षस्याः शब्दकरणाद्योभीषणशब्दमिश्रणावसरो भावी तत्रोदन्वानिलोद्धूतः शब्दान् भीषणान् राक्षसीशब्दैर्युयाव॥ ६॥ ज०भ०

अन्योन्यमित्यादि। तदानीं हनूमद्वेगेनानिलोद्धूतउदन्वान् समुद्रः म्रियमाणा राक्षसी उभावेतौ शब्दैर्भीषणान् शब्दान् अन्योन्यं व्यतियुतः स्म संमिश्रितवन्तौ युमिश्रणे कौमुदीनातीतइति की अन्योन्यार्थे इत्युक्तौ व्यतीहारेऽपि मं अन्योन्यार्थ इति श्लोप भ०

कात् व्यतीहारेऽन्योन्यादयोमनीषादित्वान्निपातिताः उदकस्य वतौ लोकोपचारादुदनादेशः उदन्शब्दोऽप्यस्ति उक्तं हि पदः इयः पृथक्शब्दादित्येके इति ॥ ६ ॥

न्यविक्षत महाग्राहसङ्कुलं मकरालयं। सैका बह्वीनां कुर्व्वाणा नक्राणामाश्रितम्भवं ॥ ७ ॥

ज०म० न्यवीत्यादि। महद्भिर्ग्राहैः सङ्कुलं मकरालयं समुद्रं न्यविक्षत प्रविष्टवती नेर्व्विश इत्यात्मनेपदं शल इगुपधादनिटः क्सः बह्वीनां नक्राणामेकापि सती स्वाश्रितम्भवं सुष्ठु तृप्तिं कुर्व्वाणा आश्रितेभुव इति भावे खच् ॥ ७ ॥

भ० न्यवीत्यादि। राक्षसी एकापि सती बह्वीनां नक्राणां कुम्भीराणां आश्रितम्भवं सुष्ठु तृप्ततां महाशरीरत्वात् कुर्व्वाणा मकरालयं समुद्रं न्यविक्षत प्रविष्टवती विपराजीत्यादिना निपूर्व्वविशतेर्व्वं शषोऽनिमित्त इति क्सः कीदृशं महद्भिर्ग्राहैर्जलजन्तुभिः संकुलं व्याप्तं आङ्पूर्व्वोऽस्मातिस्तृप्त्यर्थः भावधेलाश्रितात्तुव इति खः ॥ ७ ॥

कृतेनोपकृतं वायोः परिक्रीणानमुत्थितं। पित्राः संरक्षितं शक्रात्समैनाकाद्रिमैक्षत ॥ ८ ॥

ज०म० कृतेत्यादि। हनूमान् समुद्रादुत्थितं मैनाकाद्रिमैक्षत वायोरुपकृतमुपकारकृतेन प्रत्युपकारेण परिक्रीणानं परिक्रयं विचि

न्तं परिवर्त्तयन्तं क्रियइत्यकर्त्रभिप्रायविषये आत्मनेपदं पित्रा वायुना रक्षितं शक्रात् तेन हि पक्षच्छेदकाले महता वेगेन समुद्रं नीत्वा रक्षितइति श्रूयते॥ ८॥

हतेरित्यादि। महनूमान् समुद्रादुत्थितं मैनाकनामानमद्रिं भ० ऐक्षत दृष्टवान् ईक्षद्दर्शने ङानुबन्धान्नं कीदृशं शक्रात् पक्षच्छेदात् पित्रा वायुना संरक्षितं अतएव वायोरुपकृतं उपकारं कृतेन प्रत्युपकारेण परिक्रीणानं परिवर्त्तयन्तं विपराजीति परि पूर्व्वक्रीञोमं शानः॥ ८॥

खं पराजयमानोऽसावुन्नत्या पवनात्मजं। जगा दाद्रिर्विजेषीष्ठामयि विश्रम्य वैरिणं॥९॥

खमित्यादि। असावद्रिः उन्नत्या उन्नततया खम्पराजय ज०म० मानोऽभिभवन् पवनात्मजं जगाद मयि विश्रम्य स्थित्वा वैरिणं शत्रुं विजेषीष्ठाः त्वमभिभूयाः आशिषि लिङ् उभयथापि विप राभ्यांजेरिति तङ्॥९॥

खमित्यादि। असौ अद्रिः पवनात्मजं जगाद कीदृशः सन् भ० उन्नत्या उच्चतया खमाकाशं पराजयमानः अभिभवन् विपरा जीति मं किं जगादेत्याह मयि विश्रम्य विश्रामं कृत्वा वैरिणं विजे षीष्ठाः अभिभूयाः आशिषि पूर्व्ववत्तं॥९॥

फलान्यादत्स्व चित्राणि परिक्रीडस्व सानुषु। साधु संक्रीडमानानि पश्य वृन्दानि पक्षिणां॥१०॥

अ०भ० फलानीत्यादि। चित्राणि नानाविधानि फलानि आदत्स्व गृहाण आङोदोनास्यविहरणइत्यात्मनेपदं सानुषु ममैकदेशेषु परिक्रीडस्व विहर पक्षिणाञ्च वृन्दानि साधु शोभनं अनुक्रीडमानानि विहरन्ति सन्ति पश्य उभयत्र क्रीडोऽनुसम्परिभ्यश्चेति तङ्॥१०॥

भ० फलेत्यादि। चित्राणि अद्भुतानि फलानि समाकल्प्य गृहाण आदाञोऽस्वप्रसारेइति सं आमन्त्रणे णी स्नाङ्गोरित्यालोपः मम सानुषु एकदेशेषु परिक्रीडस्व विहर पर्य्यन्तवाङः क्रीडइति सं पक्षिणां वृन्दानि पश्य कीदृशानि साधु शोभनं अनुक्रीडमानानि विहरन्ति पूर्ववत्सं॥१०॥

क्षणं भद्रावतिष्ठस्व ततः प्रस्थास्यसे पुनः। न तत्संस्थास्यते कार्य्यं दक्षेणोरीकृतं त्वया॥११॥

अ०भ० क्षणमित्यादि। हे भद्र कल्याण क्षणमवतिष्ठस्व ततः पश्चात्प्रस्थास्यसे यास्यसि यच्च कार्य्यं करणीयं दक्षेणानलसेन त्वया उरीकृतमङ्गीकृतं न च संस्थास्यते अपितु निष्पत्स्यतएवेत्यर्थः समवप्रविभ्यस्थः इति तङ्॥११॥

भ० क्षणमित्यादि। हे भद्र कल्याणयुक्त त्वं क्षणं अवतिष्ठस्व ततः पुनः प्रस्थास्यसे यास्यसि दक्षेण अनलसेन त्वया उरीकृतं अङ्गीकृतं कार्य्यं न च संस्थास्यते न नाशं गमिष्यति सम्पत्स्यतएवेति भावः प्रतिज्ञानिर्णयेत्यादिना अवसंप्रपूर्व्वतिष्ठतेर्सं॥११॥

त्वयि नस्तिष्ठते प्रीतिस्तुभ्यं तिष्ठामहे वयं। उत्तिष्ठ
मानं मित्रार्थे कस्त्वां न बह्व मन्यते॥१२॥

त्वयीत्यादि। त्वयि विषये अस्माकं प्रीतिरस्ति तेन संशये जं॰मं॰
अस्माभिरन्योनिर्णेता नान्वेषणीयः किन्तु नोऽस्माकं प्रीतिरेव
निर्णयं पश्यन्ती त्वयि तिष्ठते प्रकाशनस्थेयाख्ययोश्चेत्यात्मनेपदं
विवादपदनिर्णेता स्थेयउच्यते तुभ्यन्तिष्ठामहे वयमिति त्वयि
विषये अस्माकं चेतोवर्त्ततइति स्वाभिप्रायं तुभ्यं तिष्ठामहे स्वाभि
प्रायं निवेदयामइत्यर्थः अत्र प्रकाशनस्य स्वाभिप्रायकथनं श्ला
घह्नुङ्स्थाशपांज्ञीप्स्यमानइति सम्प्रदानसंज्ञायां चतुर्थी कस्मा
देवं मां श्लाघसइति चेदाह उत्तिष्ठमानं यतमानं उदोऽनूर्द्ध
कर्म्मणीत्यात्मनेपदं कस्त्वां न बहुमन्यते न श्लाघते॥१२॥

त्वयीत्यादि। त्वयि नोऽस्माकं प्रीतिस्तिष्ठते निश्चयेनास्ति तद्वि भ॰
षयेऽस्माकं प्रीतिरस्ति न वेति सन्देहे अस्माभिरन्योनिर्णेता नान्वे
षणीयः किन्त्वस्माकं प्रीतिरेव त्वां निर्णेतारं करोतीति निर्णया
र्थोऽत्र स्थाधातुः त्वमस्मदाश्रितं वेत्यत्र त्वद्विषये प्रीतिर्निर्णयं करो
तीत्यन्ये वयं तुभ्यं तिष्ठामहे स्थित्वा स्वाभिप्रायं प्रकाशयामः प्रका
शार्थोऽत्र स्थाधातुः यस्मैदित्सेत्यादिना संप्रदानत्वं प्रतिज्ञानिर्णये
त्यादिना मं अत्र प्रकाशः स्वाभिप्रायकथनं कथं मत्वां श्लाघसे
इत्याह मित्रार्थे रामार्थे उत्तिष्ठमानं यतमानं त्वां कोन बहु
मन्यते न श्लाघते अपि तु सर्व्वएव उदोऽनूर्द्ध्वेहेइति मं॥१२॥

ये सूर्य्यमुपतिष्ठन्ते मन्त्रैः सन्ध्यात्रयं द्विजाः। रक्षो
भस्थापितास्तेऽपि सिद्धिं ध्यायन्ति तेऽधुना॥१३॥

ज॰म॰ यइत्यादि। ये द्विजामन्त्रैः करणभूतैः सूर्य्यमुपतिष्ठन्ते प्रत्युपासते उपान्मन्त्रकरणइत्यात्मनेपदं सन्ध्यात्रयं त्रिसन्ध्यं अत्यन्तसंयोगे द्वितीया तेऽपि रक्षोभिस्तापिताः उपद्रुताः अधुना ते सिद्धिं ध्यायन्ति किंपुनरहं यस्ते पितुः सुहृत् तदेव दर्शयन्नाह ॥ १३ ॥

भ॰ यइत्यादि। ये द्विजाब्राह्मणामन्त्रैः करणभूतैः सन्ध्यात्रयं व्याप्य सूर्य्यमुपतिष्ठन्ते उपासते मन्त्रेणोपादिति सं तेऽपि द्विजार क्षोभिस्तापिताउपद्रुताः सन्तः अधुना इदानीं तव सिद्धिं ध्यायन्ति चिन्तयन्ति अहन्तु तव पितुः सुहृत् सुतरां तथेति भावः यद्वा द्विजानुकूलत्वादपि त्वं स्तुत्यइति भावः सन्ध्यात्रयमिति सदा ध्यादीति द्वितीया ॥ १३ ॥

अव्यग्रमुपतिष्ठस्व वीर वायोरहं सुहृत्। रविर्वितपतेऽत्यर्थमाश्वस्य मयि गम्यतां ॥ १४ ॥

ज॰म॰ अव्येत्यादि। हे वीर अव्यग्रमनाकुलं मय्युपतिष्ठस्व सन्निहितोभव अकर्मकाच्चेत्यात्मनेपदं यतोवायोस्तव पितुरहं सुहृत् रविरत्यर्थं वितपतै दीप्यते उद्विभ्यामित्यात्मनेपदं तत्राकर्मकादिति वर्त्तते तस्मादाश्वस्य विश्रम्य गम्यतां ॥ १४ ॥

भ॰ अव्येत्यादि। हे वीर अव्यग्रमनाकुलं यथा स्यात्तथा त्वमुपतिष्ठस्व सन्निहितोभव अढादिति सं यतोऽहं वायोस्तव पितुः सुहृन्मित्रं विश्रामौचित्यं दर्शयति रविरत्यर्थं वितपते दीप्यते व्युत्परइति सं अढत्वात् अतएव मयि आश्वस्य प्राणनिर्वृतिं प्राप्य त्वया गम्यतां ॥ १४ ॥

तीव्रमुत्तपमानोऽयमशक्यः सोढुमातपः। आघ्नान इव सन्दीप्तैरलातैः सर्व्वतोमुहुः॥ १५॥

तीव्रेत्यादि। तीव्रं सुष्ठु उत्तपमानो दीप्यमान आतपः सोढुमशक्यः पूर्व्ववदात्मनेपदं अलातैः उल्मुकैः सन्दीप्तैः सर्व्वत आघ्नान इव ताडयन्निव आङो यमहन इत्यविवक्षितकर्म्मकत्वादात्मनेपदं गमहनेत्युपधालोपः होहन्तेरिति कुत्वं॥ १५॥ जं०

तीव्रेत्यादि। पुनर्व्विश्रामौचित्यमाह तीव्रमुत्तपमानो दीप्यमानोऽयमातपः सोढुं न शक्यः पूर्व्ववत् सन्दीप्तैरलातैरङ्गारैर्मुहुर्व्वारं वारं सर्व्वत आघ्नान इव ताडयन्निव आत्माङ्गादङ्गाद्याहनयमइति सं अविवक्षितकर्म्मत्वात् अङ्गारोऽलातमुल्मुकमित्यमरः आलातैरिति पाठे स्वार्थे ष्णः विद्यादलातमालातमिति द्विरूपकोषः॥ १५॥ भ०

संशृणुष्व कपे मत्कैः सङ्गच्छस्व वनैः शुभैः। समारन्त ममाभीष्टाः सङ्कल्पास्त्वय्युपागते॥ १६॥

संशृण्वित्यादि। हे कपे संशृणुष्व आकर्णय समो गम्यृच्छीत्यादि विवक्षितकर्म्मकत्वादात्मनेपदं शुभैः शोभमानैः इगुपधलक्षणः कः वनैर्मत्कैः मत्स्वामिकैः अहं स्वामी येषामिति स एषां ग्रामणीरिति कः प्रत्ययोत्तरपदयोश्चेति मदादेशः सङ्गच्छस्व सङ्गतो भव पूर्व्ववदात्मनेपदं समारन्त ममाभीष्टा इति ममाभिप्रेताये जं०

सङ्कल्पा अभिप्रायाः कदा नु मे सुहृत्तया वा कश्चिद्देष्यति यस्मा ह्मुपयोगी स्वामिति ते समारम्भा आगताः त्वय्युपागते सति ऋच्छे र्लुङि पूर्व्ववदात्मनेपदं सर्त्तिशास्त्यर्त्तिभ्यश्चेत्यङि ऋदृशोऽङि गुणः आङ्ङादीनाम् भाषाविषयस्य प्रयोगः ॥ १६ ॥

भ० समित्यादि। हे कपे संश्रृणुष्व आकर्णय मत्कैर्मत्स्वामिकैः शुभैः शोभमानैर्निर्भयत्वेन कल्याणयुक्तैर्व्वावकैः सह सङ्कल्पस्य सम्पु तोभव अहं स्वामी येषामिति विकारसंघेत्यादिना कः समे मार्गी त्यर्थे वा त्वयि उपागते सति ममाभीष्टावाञ्छिताः सङ्कल्पा अभि प्रायाः सुहृद्दर्शनादिरूपाः समारन्त सङ्गतवन्तः ऋगतौ सर्व्वेष समोगम्यृच्छेत्यादिना सं ओः अर्त्तेरिति अः जिस्य वत्सस्येत्यादिना अर्त्तेर्ङः ऋदृशोऽङि गुणः ॥ १६ ॥

के न संविद्रते वायोर्मैनाकाद्रिर्यथा सखा। यत्ना दुपाह्वये प्रीतः संह्वयस्व विवक्षितं ॥ १७ ॥

अ०भ० ननैवमिथ्या वायुर्मे सुहृदित्याह केनेत्यादि। वायोर्मैनाकाद्रिर्य था सखेति के न संविद्रते न जानन्ति वेत्तेः पूर्व्ववदात्मनेपदं वेत्तेर्वि भाषेति रुट् तस्मात्प्रीतः सन् अहं यत्नादुपाह्वये भवन्तमाह्वयामि ततः संह्वयस्व कथय विवक्षितमभिप्रेतं निसमुपविभ्यो ह्वइत्यकर्त्त भिप्राये लट्लोटोरात्मनेपदं ततोऽकर्म्मकादिति निवृत्तं सामा न्येन विधानं ॥ १७ ॥

भ० केनेत्यादि। मत्पितुः सखा त्वमसीति किं प्रमाणमित्याशङ्क्याह मैनाकाद्रिर्व्वायोर्यथा सखा तथा के अनाम संविद्रते न जानन्ति

अपि तु सर्व्वएव समीगम्यच्छेति मं अविवक्षितकर्मत्वात् मान्तो रमिति रम् अतएवाहं प्रीतः सन् यत्नादुपाङ्क्ष्ये लामाङ्क्ष्यामि त्वमपि विवक्षितं वक्तुमिष्टं संकथ संकथय इति जमादाद्रिरिति सम्बन्धः निसंव्युपक्रइति मं ॥ १७ ॥

स्वामिवाङ्क्षयमानन्तमवोचद्भूधरं कपिः। उपकुर्व्व न्तमत्यर्थं प्रकुर्व्वाणोऽनुजीविवत् ॥ १८ ॥

स्वामित्यादि। स्वामिवाकाग्रमिवाङ्क्षयमानं महत्तया स्पर्द्धं जं०म० मानं स्पर्द्धायामाङ इत्यात्मनेपदं अत्यर्थमुपकुर्व्वन्तं आतिथ्येन तमीदृशं भूधरमवोचत् कपिः प्रकुर्व्वाणः सेवमानोऽनुजीविवत् भृत्यवत् गन्धनेत्यादिना सेवने तङ् ॥ १८ ॥

स्वामित्यादि। कपिर्हनूमान् तं भूधरं मैनाकं पर्व्वतं अवोचत् उक्तवान् कीदृशं स्वामाकाशमाङ्क्षयमानमिव महत्त्वेन स्पर्द्धमा नमिव स्पर्द्धायामाङ इति मं अत्यर्थमुपकुर्व्वाणमुपकारीयन्तं कीदृशः कपिः अनुजीविवत् भृत्यवत् प्रकुर्व्वाणः सेवमानः सूच नावक्षेपणेत्यादिना सेवायां मं ॥ १८ ॥

कुलभार्य्यां प्रकुर्व्वाणमहं द्रष्टुं दशाननं। यामि त्वरावान् शैलेन्द्र मा कस्यचिदुपस्कृथाः ॥ १९ ॥

कुलेत्यादि। अहं दशाननं द्रष्टुं यामि कुलभार्य्यां प्रकुर्व्वाणं जं०म० कुलनारीमभिगच्छन्तं तस्यां सहसा प्रवर्त्तमानमित्यर्थः साह

ङ् त्वरावान् त्वरायुक्तः अतः शैलेन्द्र मा कस्यचिद् अन्नपानादिकस्य उपस्कृथाः अतिशयवत्नमाकार्षीरित्यर्थः माङ्लुङ् प्रतियत्ने तङ् तनादिभ्यस्तथासोरिति सिचोलुक् उपात्प्रतियत्न इति सुट् कस्यचिदिति कृञः प्रतियत्नइति कर्म्मणि षष्ठी ॥ १८ ॥

भ० कुलेत्यादि। किमवोचदित्याह हे शैलेन्द्र अहं त्वरायुक्तः सन् दशाननं द्रष्टुं यामि कीदृशं कुलभार्य्यां कुलपालिकां प्रकुर्व्वाणं साहसेनाभिगच्छन्तं तस्यां साहसात्प्रवर्त्तमानमित्यर्थः सूचनावक्षेपणेत्यादिना साहसे मं कुलस्त्री कुलपालिकेत्यमरः अतएव कस्यचित् मा उपस्कृथाः कस्यापि द्रव्यस्य भोज्यस्य पेयस्य वा मदर्थे प्रतियत्नं न कुरु पूर्व्वेण प्रतियत्ने मं सतोगुणान्तराधानं प्रतियत्नः उत्कर्षसमीहा प्रतियत्नमिति केचित् सम्परेः सुमुपादिति सुम् असस्वाञ्जसीति सलोपः कस्यचिदिति समार्थेनेत्यादिना कर्म्मणि षष्ठी एधोदकस्योपस्कुरुतइत्युदाहरता प्रतियत्ने कृञः कर्म्मणि न द्वितीया इति सूचितं गुणोत्कर्षे कृञः कर्म्मणि षष्ठीति परः ॥ १८ ॥

योऽपचक्रे वनात्सीतामधिचक्रे न यं हरिः। विकुर्व्वाणः स्वरानद्य बलं तस्य निहन्म्यहं ॥ २० ॥

१०म० योऽपेत्यादि। यः सीतामपचक्रे अभिबभूव अवक्षेपणे तङ् वनादिति वनमुपगम्य ल्यब्लोपे कर्म्मणि पञ्चमी यं हरिरिन्द्रोनाधिचक्रेन प्रसेहे अधेःप्रसहनइति तङ् तस्य बलं दशाननस्य सामर्थ्यं

कीदृशं स्वरान् विकुर्व्वाणं विविधान् स्वरान् कुर्व्वाणं वेःशब्दकर्म्म इति तङ् तस्य दशाननस्य बलं निहन्मि ॥ २० ॥

यइत्यादि। योवनात् सीतामपचक्रे प्रतिभूतवान् सूचना भ० वचेपणेत्यादिना अवचेपणे मं सूचनेममिति केचित् तदापकारं प्रयुज्य हिंसां सूचयतीत्यर्थः वनादिति हेतौ पञ्चमी वनं प्राप्येति यवर्थे वा हरिरिन्द्रोयं नाधिचक्रे नाभिभूतवान् अधेः शक्ताविति मं शक्तिरभिभवः तस्य दशाननस्य बलं शक्तिमहमद्य निहन्मि कीदृशः स्वरान् विविधान् कुर्व्वाणः द्वितीयान्तपाठे यमित्यस्य विशेषणं शब्दढाढादेरिति मं ॥ २० ॥

विकुर्व्वे नगरे तस्य पापस्याद्य रघुद्विषः। विनेष्ये वा प्रियान् प्राणानुदानेष्येऽथवा यशः ॥ २१ ॥

विकुर्व्वइत्यादि। तस्य रघुद्विषोरामशत्रोः पापस्य नगरे ज० पुर्य्यां अहमद्य विकुर्व्वे विविधं चेष्टे अकर्म्मकाच्चेति तङ् तत्र विकुर्व्वाणोयदि वा प्रियानपि प्राणान् स्वाम्यर्थे विनेष्ये अपनेष्यामि संमाननेत्यादिना व्यये तङ् यतोधर्म्मादिषु विनियोगोव्ययः यशो वा उदानेष्ये ऊर्द्धं नेष्यामि तस्यापकारकरणात् अन्नोत्सञ्जने तङ् उत्सञ्जनमुत्चेपणं ॥ २१ ॥

विकुर्व्वइत्यादि। तस्य पापाचारस्य रघूणां रामादीनां भ० द्विषोरावणस्य नगरे लङ्कायां अहमद्य विकुर्व्वे विविधं चेष्टे शब्दढाढादेरिति अकर्म्मकत्वाच्च तत्र च विकुर्व्वाणोऽहं प्रिया

नपि प्राणान् वा विनेष्ये खामर्थे त्यच्यामि प्राणार्थोत्क्षेपदृत्या दिना व्ययार्थे मं व्ययो धर्मादिषु विनियोगः अथवा यम उदानेष्ये जर्द्धं नेष्यामि पूर्व्वेण क्षेपणे मं ॥ २१ ॥

विनेष्ये क्रोधमथवा क्रममाणोऽरिसंसदि। इत्यु
क्त्वा खे पराक्रंस्त तूर्णं हनुर्नभस्वतः ॥ २२ ॥

ज०म० विनइत्यादि। यदि वा क्रोधमात्मनोविनेष्ये अपनेष्यामि कर्त्तृ स्थेचेति तङ् कर्त्तृस्थस्य क्रोधकर्म्मणोऽशरीरत्वात् अन्न व्ययोन सम्भवतीति अरिसंसदि शत्रुसभायां क्रममाणः अप्रतिबन्धेन प्रवर्त्तमानः वृत्तिसर्गेत्यादिना वृत्तौ तङ् वृत्तिरप्रतिबन्धः इत्येव मुक्त्वा हनुर्नभस्वतः वायोस्तनयः खे तूर्णं पराक्रंस्त शीघ्रमुत्सेहे उपपराभ्यामित्यनेन सर्गे तङ् सर्ग उत्साहः ॥ २२ ॥

भ० विनेष्यइत्यादि। अथवा क्रोधं विनेष्ये अपनेष्यामि शत्रुहननात् घस्मामूर्त्तत्वादिति मं अमूर्त्तमशरीरं कर्त्तृस्थाद्युक्तकर्म्मकादिपूर्व्वनीञश्चात्मनेपदमिति विद्यासागरः स्वमतेऽपि शब्दडाढा देरित्यतोमण्डूकप्लुत्या वेरित्यनुवर्त्तते इति वाच्यं क्रोधं विनयतइत्युदाहरणदर्शनात् अन्ये तु विपूर्व्वत्वं न वदन्ति तन्न साधु विगणय्य नयन्ति पौरुषं विजितक्रोधजयाजिगीषवइत्यादिदर्शनात् किं कुर्व्वन् अरिसंसदि शत्रुसभायां क्रममाणः अप्रतिबन्धेन चेष्टमानः वृत्युत्साहेत्यादिना मं वृत्तिरप्रतिबन्धः इत्येवमुक्त्वा नभस्वतोवायोः सनुः पुत्रो हनूमान् खे आकाशे तूर्णं शीघ्रं परा

क्रांस उत्साहं चकार पूर्व्ववोत्साहे मं आक्काणगरूपोऽचोत्साह:
स्तुक्रमोऽमे इति मेम् ॥ २२ ॥

परीक्षितुमुपाक्रंस्त राक्षसी तस्य विक्रमं। दिवमा
क्रममाणेव केतुताराभयप्रदा ॥ २३ ॥

परीत्यादि। तस्य हनूमतोविक्रमं शौर्य्यं परीक्षितुं राक्षसी उपाक्रंस्त उत्सेहे पूर्व्ववत्तङ् दिवमाक्रममाणेव यथा केतुः स्वर्भानुः तारा नभसुद्गच्छति भयङ्करा आङुद्गमनइति तङ् तत्र हि ज्योतिरुद्गमनइत्युक्तं केतुतारायाश्च ज्योतिःस्वभावत्वात् ॥ २३ ॥ ज०म०

परीत्यादि। तस्य हनूमतोविक्रमं शौर्य्यं परीक्षितुं राक्षसी उपाक्रंस्त उत्सहते स्म पूर्व्ववत्तं दिवमाकाशमाक्रममाणा उद्गम पूर्व्वकं प्राप्नुवती केतुस्वभावा तारेव भयप्रदा भयं प्रददातीति हनजनादिति डः आङोभोद्गमइति मं आक्रामति धूमः खमि त्यत्र उद्गमोन विवक्ष्यते किन्तु व्याप्तिमात्रं ॥ २३ ॥ भ०

अस्ते विक्रममाणायाहनूमान् शतयोजनं। आस्यं
प्रविश्य निरगादणूभूयाप्रचेतितः ॥ २४ ॥

अस्तइत्यादि। विक्रममाणायाः पद्भ्यां विचरन्त्याः वेःपादवि हरणइति तङ् असत्पदणात् गतिविशेषन्दर्शयति आस्यं शतयोज नं शतं योजनानि यस्य प्रमाणतः तदणूभूय सूक्ष्मीभूय प्रविश्य ज०म०

निरगात् निर्गत उदरं विदार्य्येत्यर्थात् अप्रचेतितः अविज्ञातः ॥ २४ ॥

भ० जलइत्यादि। जले विक्रममाणायाः पद्भ्यां विहरन्त्याराच स्याः शतयोजनमास्यं प्रविश्य हनूमान् अणूभूय सूक्ष्मीभूय अप्रचेतितस्तया अपरिज्ञातः सन् निरगात् निर्गतः कर्णपथेनेत्यर्थात् उदरं भित्त्वेत्यन्ये तत्तु रामायणविरुद्धं शतं योजनानि प्रमाणतोयस्येति विग्रहः वेःपद्भिरिति मं पद्भिरिति वक्तलनिर्देशेन पादमात्रस्य करणत्वे वेःक्रमोममिति बोध्यं न तु साधु विक्रमते वाजीत्युदाहरणदर्शनात् वक्तपादकरणत्वं वाच्यं वेःपद्भ्यामिति कातन्त्रसूत्रे दित्वमुपलक्षणंतेन तन्मते साधु विक्रमते वाजीत्यादिसिद्धं ॥ २४ ॥

द्रष्टुं प्रक्रममाणोऽसौ सीतामम्भोनिधेस्तटं। उपाक्रंस्ताकुलं घोरैः क्रममाणैर्निशाचरैः ॥ २५ ॥

ज०म० द्रष्टुमित्यादि। असौ हनूमान् सीतां द्रष्टुं प्रक्रममाणः आरभमाणः आदिकर्म्म यथा भोक्तुं प्रक्रमतेइति उदधेस्तटमुपाक्रंस्त गन्तुं प्रारब्धवानित्यर्थः ततश्च प्रोपयोरादिकर्म्मणि समानार्थत्वात् प्रोपाभ्यांसमार्थाभ्यामिति तङ् घोरैः रौद्रैः निशाचरैराकुलं व्याप्तं तटं क्रममाणैः इतस्ततोगच्छद्भिः अनुपसर्गाद्वेति तङ् ॥ २५॥

भ० द्रष्टुमित्यादि। असौ हनूमान् निर्गतः सन् सीतां द्रष्टुं प्रक्रममाणआरभमाणउदधेस्तटमुपाक्रंस्त गन्तुमारभते स्म यद्यपि

भोक्तुमुपक्रमते इत्यादावारम्भमात्रमुपक्रमेरर्थस्तथापीह गमना रम्भोवाच्यः स्याचणिकत्वात् द्रष्टुमित्यस्यानुषङ्गेन अम्भोनिधेस्त टमुपाक्रंस्तेति वा प्रोपादारम्भेइति मं घोरैर्भयानकैर्निशाचरै राकुलं व्याप्तं क्रममाणैरितस्ततोगच्छद्भिः वागैरिति मं॥ २५॥

आत्मानमपजानानः शशमात्रोऽनयद्दिनं। शा ये रात्राविति प्राशः प्रत्यशास्त क्रियापटुः॥ २६॥

आत्मेत्यादि। मा कश्चिद्द्राक्षीदिति तथाविधमात्मानं शरी रमवजानानः अपह्नुवानः अपह्नवेज्ञइति तङ् योहि शशमात्रो भूत्वा स्थितः तेन कथमात्मा लोके नापलपितः स्यात् अनयद्दि नं अगमयद्दिवसं शास्ये रात्राविति प्रत्यशास्त प्रतिज्ञातवानि त्यर्थः सम्प्रतिभ्यामनाध्यानइत्यात्मनेपदं लुङोभवति आत्मान ञ्चोत्कण्ठनं शास्येइत्यकर्मकाचेत्यकर्मकक्रियावचनत्वादात्मने पदं प्राचः क्रियापटुरिति बुद्धिकौशलं कर्मकौशलञ्च दर्शयति॥ २६॥ जं॰म

आत्मानमित्यादि। असौ शशमात्रः शशपरिमाणोभूत्वा दिनमनयत् गमयामास दघ्नमात्रइयषट्मात्रेइति मात्रट् कथं तथाविधस्याल्पकायत्वमित्याह आत्मानमपजानानः अपह्नुवानः निह्नवेज्ञइति मं रात्रावहं शास्येइति प्रत्यशास्त प्रतिज्ञातवान् संप्रतेरस्मृताविति मं शास्येइति अङादिति मं अविवक्षितकर्म त्वात् ञिक्न्यन्तेत्यादिना वा प्राशः क्रियापटुरिति पदद्वयेन बुद्धिकौशलं क्रियाकौशलञ्च दर्शितं॥ २६॥ भ॰

संजानानान् परिहरन् रावणानुचरान् बहून्।
लङ्कां समाविशद्रात्रौ वदमानोऽरिदुर्गमां॥ २७॥

ज०म० सञ्जेत्यादि। रावणस्यार्थेषु कार्य्येषु ये चरन्तीति चरेष्टः तान् बहून् सञ्जानानान् चेतयतः परिहरन् अनाध्याने तङ् रात्रौ लङ्कां समाविशत् प्रविष्टवान् अरिदुर्गमां राघवदुर्गमां वदमा नोभासमानः भासनोपसम्भाषेत्यादिना आत्मनेपदं॥ २७॥

भ० समित्यादि। असौ हनूमान् रात्रौ लङ्कायां समाविशत् प्रविष्टवान् कीदृशः वदमानः शोभमानोवदन् शोभोपलचितं शोभाहेतुकं वा यथा स्यात्तथा कथयन् वा ज्ञानयत्नप्रलोभेवद इति सं ज्ञानपदेन ज्ञानपूर्व्वकत्वात् शोभाप्युच्यतइति कान त टीकायां व्याख्यातत्वात् प्रकाशनादौ वद इति क्रमदीश्वरस्तु च दर्शनाच्च शोभा च वदत्यर्थस्य लक्षणभावेन हेतुभावेन वा विशे षणं न तु तन्मात्रं वाच्यमिति न्यासः बहून् रावणस्यानुचरान् सेवकान् परिहरन् कीदृशान् संजानानान् चेतयमानान् संप्रतेर स्मृताविति सं कीदृशीं लङ्कां अरिदुर्गमां शत्रुभिर्दुष्प्रापां॥ २७॥

कश्चिन्नोपावदिष्टासौ केनचिद्व्यवदिष्ट न। शृण्वन् संप्रवदमानाद्रावणस्य गुणान् जनात्॥ २८॥

ज०म० कश्चिदित्यादि। असौ प्रविष्टः सन् न कश्चिदुपावदिष्ट उपसा न्त्वितवान् उपसम्भाषायां तङ् केनचिद्व्यवदिष्ट न न भाषितवान् विमतौ तङ् विमतिर्नानामतिः संशृण्वन् आकर्णयन् जनात् प्रवद

मानात रावणस्य सम्बन्धिनोगुणान् सम्भूय भाषमाणान् व्यक्त वाचामित्यात्मनेपदं जनानां व्यक्तवाक्यं॥ २८॥

किञ्चिदित्यादि। असौ हनूमान् प्रविष्टः सन् न किञ्चिदुपा वदिष्ट न किञ्चित्प्रलोभनवाक्यं भाषते स्म आगच्छेत्यादिना प्रलोभे मं केनचित सह न व्यवदिष्ट नानामतिपूर्व्वकं विचित्रं न भाषते स्म विमतिपूर्व्वकं विचित्रकथनमत्र वदत्यर्थः विमतिव्यक्त सहोक्तोरिति विमतौ मं संप्रवदमानात् सम्भूय व्यक्तं भाषमाणात् जनात् रावणस्य गुणान् शृण्वन् पूर्व्वेण व्यक्तसहोक्तौ मं॥ २८॥ भ०

जल्पितोत्क्रुष्टसङ्गीतप्रनृत्तस्मितवल्गितैः। घोष स्यान्ववदिष्टेव लङ्का पूतक्रतोः पुरः॥ २९॥

जल्पीत्यादि। पूतक्रतोरिन्द्रस्य या पूः तस्याअमरावत्याः सम्बन्धिनोघोषस्यान्ववदिष्टेव लङ्का अनुशब्दः सादृश्ये सदृशं वादं कृतवती तैर्जल्पितादिभिः उभयत्रापि जल्पितादिघोषस्य तुल्यत्वात् लङ्केति तत्स्थोजनउच्यते तेन व्यक्तवाग्विषयत्वात् अनोरकर्म्मकादिति तङ् तत्र व्यक्तवाचामिति अनुवर्त्तते न समुच्चा रणइति॥ २९॥ ज०म

जल्पितइत्यादि। लङ्का जल्पितादिभिः पूतक्रतोरिन्द्रस्य पुरो ऽमरावत्याघोषस्य शब्दस्य अन्ववदिष्टेव सदृशभाषणं कृतवतीव उभयत्रापि जल्पितादिघोषणानां तुल्यत्वात् अनुशब्दः सदृशभा षणद्योतकः तत्रतजनानां भावयेन तद्भाषणमुत्प्रेक्ष्यते अनोरका दिति मं अनुपूर्व्वादकर्म्मकाद्वदेरुक्तौ व्यक्तवाचामात्मनेपदमिति भ०

केचित् तन्मते लङ्काशब्देन लक्षणया लङ्काखितजनउच्यते व्यक्त वाचामिति तु वेीपदेवेन नाङ्गीकृतं अनेीरकर्मकइति कातन्त्रस्य चेऽपि व्यक्तवाचामित्यस्य सम्बन्धोनाङ्गीकृतः जल्पितं व्यक्तभाषणं उत्क्रुष्टमाक्रानं सङ्गीतं सम्यक् गानं प्रनृत्तं नर्त्तनशब्दः स्मितं हा स्यशब्दः वल्गितं मन्दवचनं ॥ २८ ॥

ऐद्विप्रवदमानैस्तां संयुक्तां ब्रह्मराक्षसैः। तथाव गिरमाणैश्च पिशाचैर्मांसशोणितं ॥ ३० ॥

म०ज० ऐदित्यादि। तां ब्रह्मराक्षसैः संयुक्तां हनूमानैत् जगाम इणो लङि रूपं विप्रवदमानैः परस्परविरुद्धार्थाभिधायिभिः विप्र लापात्मके व्यक्तवाचां समुच्चारणे विभाषाविप्रलापइति तङ् तथा पिशाचैर्मांसशोणितमवगिरमाणैः भक्षयद्भिः संयुक्तां गिर तेरभ्यवहारार्थत्वादवाद्गृइति तङ् मांसशोणितमिति जातिर प्राणिनामित्येकवद्भावः ॥ ३० ॥

भ० ऐदित्यादि। हनूमान् तां लङ्कां ऐत् गतवान् इणोथ्यां रूपं कीदृशीं ब्रह्मस्वरूपैस्तत्सम्बन्धिभिर्व्वा राक्षसैः संयुक्तां कीदृशैः विप्रवदमानैः सम्भूय विरुद्धप्रलापिभिः एकोयादृक् वदति अप रस्तादृक् न वदति वितण्डां कुर्व्वद्भिरित्यर्थः तद्योगेवेति मं तद्यो गइति तयोः पूर्व्वोक्तयोः विमतिव्यक्तसहोच्चारयोर्योगे युगपत्प्रवृत्तौ विमतिरिह विरुद्धप्रलापमात्रं तथा पिशाचैः संयुक्तां कीदृशैर्मां सशोणितञ्चावगिरमाणैर्भक्षयद्भिः अश्नद्भिरतैरिति मं मांस

शोणितमिति समाहारद्वन्द्वः पिशितमश्नातीति पिशाचोमणीषा दित्वात्साधुः॥३०॥

यथास्वं सञ्जिरन्ते स्म गोष्ठीषु स्वामिनोगुणान्। पानशौण्डाः पथः क्षीवावृन्दैरुदचरन्त च॥३१॥

यथेत्यादि। ब्रह्मराक्षसाः पिशाचाश्च यथास्वमात्मीयस्य स्वामिनोगुणान् गोष्ठीषु गोष्ठीमध्ये सञ्जिरन्ते स्म अभ्युपगतवन्तः समः प्रतिज्ञानइति तङ् पानशौण्डाः पानासक्ताः क्षीवामत्ताः सन्तः पथोमार्गानुदचरन्त उत्क्रम्य गच्छन्ति स्म उदश्चरःसकर्मका दिति तङ् वृन्दैरिति सम्भूयेत्यर्थः॥३१॥ ज॰म॰

यथेत्यादि। ब्रह्मराक्षसाः पिशाचाश्च यथास्वं स्वीयस्य स्वामिनोगुणान् गोष्ठीषु गोष्ठीमध्ये सञ्जिरन्ते स्म अभ्युपगतवन्तः समः प्रतिज्ञायामिति मं पाने शौण्डाआशक्ताः अतएव क्षीवाः मत्ताः सन्तः वृन्दैः सम्भूय पथोमार्गान् उदचरन्त उत्क्रम्य जग्मुः उच्चरःसकर्मकादिति मं॥३१॥ भ॰

यानैः समचरन्तान्ये कुञ्जराश्वरथादिभिः। संप्रायच्छन्त वन्दीभिरन्ये पुष्पफलं शुभं॥३२॥

यानैरित्यादि॥ अन्ये यानैः कुञ्जरादिभिः समचरन्त सञ्चरन्ते स्म समस्तृतीयायुक्तादिति तङ् अन्ये वन्दीभिरानीताभिः सम्प्रदाने तृतीया अशिष्टव्यवहारतृतीयाचतुर्थ्यर्थे भवतीति वच ज॰म॰

मादन्धीश्वरत्यर्थः पुष्पफलं शोभनं समायच्छन्त ददति स्म दान
स्वमाचेयतुर्थर्थदति तङ् पुष्पफलमिति जातेरेकवद्भावः॥ ३२ ॥

भ॰ यानैरित्यादि। अन्ये कुञ्जरादिभिर्यानैः समचरन्त सञ्चर
न्ते स्म समस्थेति सं अन्ये शुभं शोभनं पुष्पं फलञ्च वन्दीभिः हठ
हृतस्त्रीभिः संप्रायच्छन्त संप्रददुः सन्दानोभेऽधर्मेनित्यमिति संप्र
दाने तृतीया वन्दीभिः सह विहरणेच्छया ताभ्योददुरित्यधर्मः
दानःसाचेच्चर्थे इति सं सेत्यनेन समस्थेत्यस्मात् षी आत्मन्यते
॥ ३२ ॥

कोपात्काश्चित्प्रियैः प्रत्तमुपायंसत नासवं। प्रेम
जिज्ञासमानाभ्यस्ताभ्योऽशप्यन्त कामिनः॥ ३३ ॥

ज॰म॰ कोपादित्यादि। काश्चित् स्त्रियः कोपात् अन्यस्त्रीगमनजनि
तात् आसवं मद्यविशेषं नोपायंसत न स्वीकृतवत्यः विभाषोपयम
इत्यकित्त्वपचे रूपं उपायमः स्वीकरणइति तङ् पाणिग्रहणपूर्व्व
स्य स्वीकरणस्य तत्र स्थितत्वादौपचारिकमत्र स्वीकरणं द्रष्टव्यं
समुदाङ्भ्योयमोग्रन्थइति वा तङ् उदाङ्पूर्व्वस्य यमग्रादाना
र्थत्वात् अवसरप्राप्तन्तु सूत्रद्वयमुदाहृतं स्यात् प्रियैः प्रत्तन्दत्तं
अचउपसर्गात्तः प्रेम जिज्ञासमानाभ्यः किमस्मासु प्रेमास्ति वा न
वेति कृतकोपप्रकाशेन ज्ञातुमिच्छन्तीभ्यः ज्ञाश्रुस्मृदृशांसनइति
तङ् ताभ्योयोषिद्भ्यः कामिनः अशप्यन्त न मे त्वदन्या प्रियास्तीति
तदीयशरीरस्पर्शनेन शपथञ्चक्रुः शपाउपलम्भने इत्यात्मने

पदं वाचा उपलक्षनं शरीरस्पर्शनं श्लाघह्नुङित्यादिना सम्प्रदान संज्ञायां चतुर्थी तासां ज्ञापयितुमिष्यमाणत्वात् ॥ २२ ॥

कोपादित्यादि। काश्चित् स्त्रियः कोपात् सपत्नीसङ्गजनितात् प्रियैः प्रत्तं प्रदत्तमासवं मद्यविशेषं नोपायंसत न स्वीकृतवत्यः उपयमोविवाहइति सं विवाहः स्वीकारः उपायमः स्वीकरणे इति क्रमदीश्वरसूत्रदर्शनात् यमःसूचनेवाद्भुद्वाहइति सेः कित्त्वा भावपचे सलोपाभावः अत्राप्युदाहः स्वीकारः स्वीकरणेचेति परसूत्रदर्शनात् उपयमोविवाहइत्यत्र विवाहः पाणिग्रहणमेवेति चेत् ञिन्त्र्यन्तपिवेत्यादौ अग्रन्थोत्समायमइति फलवत्कर्त्तरि उपाङ्पूर्व्वान्मं प्रत्तमिति ग्यचस्त्वेति दात्रः क्ते तादेशः अन्यासु प्रियस्य स्नेहोऽस्ति न वेति सन्दिह्य कृतकोपेन प्रेम ज्ञातुमिच्छन्तीभ्यस्ताभ्यः स्त्रीभ्यः कामिनोऽशपन्त न मेऽन्या प्रियास्तीति ज्ञापनार्थं शपथं चक्रुः शपथाशीर्गत्यनुकारेशपेति सं मिथ्यानिरासार्थं ज्ञापनमिह शपथः वाचा शरीरस्पर्शनमिति पाणिनीयाः यस्मैदित्सेत्यादिना संप्रदानत्वं सूद्दशननुशंति शोभं ॥ २३ ॥

## प्रादिद्दचत नोनृत्यं नाशुश्रूषत गायनान्। रामं सुस्मूर्षमाणोऽसौ कपिर्व्विरहदुःखितं ॥ २४ ॥

प्रादीत्यादि। असौ कपिर्लङ्कायां नोनृत्यं प्रादिद्दक्षत गायनान् गायकान् गस्यकन् युच नाशुश्रूषत न श्रोतुमिष्टवान् किमिति रामं विरहदुःखितं सुस्मूर्षमाणः स्मर्तुमिच्छन् सनन्तेभ्यः पूर्व्ववदात्मनेपदं अज्झनगमांसनीति दीर्घत्वं उदोष्ठ्यपूर्व्वस्येत्युत्वं ॥ २४ ॥

भ० प्रादीत्यादि। असौ कपिर्लङ्कायां नृत्यं नटनं न प्रादिदृक्षत न द्रष्टुमिच्छति स्म गायनान् नाशुश्रूषत न श्रोतुमिच्छति स्म तद्दर्शनश्रवणेन गायनश्रवणमुपचर्य्यते यतोऽसौ विरहेण दुःखितं रामं सुस्मूर्षमाणः स्मर्त्तुमिच्छन् सर्व्वत्र सृदृशनमनुज्ञेत्यादिना सनि मं पूर्णानिमीत्यगुणत्वं दृशः श्रुज्ञाजिति षङ् षढोःकःसे श्रुसृधात्वोर्धोऽज्झनिङ्गमामिति दीर्घः स्मरतेर्च्चंदिरणावुरित्युर् गायतेर्गोणनट्थकाविति णनट्॥ ३४॥

अनुजिज्ञासते वाथ लङ्कादर्शनमिन्दुना। तमोपद्वविमुक्तांशुपूर्व्वस्यां दिश्युदैयत॥ ३५॥

ज०म० अन्वित्यादि। अथैतस्मिन्प्रस्तावे इन्दुना चन्द्रेण उदैयत उदितं इणोभावे लङि रूपं पूर्व्वस्यां दिशि पूर्णेनेति दर्शयति दृश्यते यत् दर्शनं रूपं लङ्कायारूपमनुजिज्ञासतेव पूर्व्वेण प्राप्तस्यात्मनेपदस्य नानोर्ज्ञ इति प्रतिषेधः तमोपद्वास्तमोविध्वंसमानाः विमुक्ताः प्रेरिता अंशवो यस्मिन् उदय इति॥ ३५॥

भ० अन्वित्यादि। अथानन्तरमिन्दुना पूर्व्वस्यां दिशि उदैयत उदितं इणोभावे घी पूर्व्वस्यां दिशीत्युपादानेन इन्दोः पूर्णत्वं सूचितं कृष्णपक्षः सूचितोवा किङ्कुर्व्वता लङ्कायायद्दर्शनं हनूमतेत्यर्थात् तदनुज्ञातुमनुमन्तुमिच्छतेव चन्द्रोदये सत्येव हनूमता लङ्का द्रष्टव्येति तत्र तदनुमतिरुत्प्रेक्ष्यते अन्ये तु दृश्यत इति दर्शनं रूपं लङ्कायारूपं ज्ञातुमिच्छतेवेत्याहु सृदृशनमनुज्ञेत्यत्र

अनुवर्ज्जनान्न मं तमोपहा अन्धकारविध्वंसका विमुक्ताः प्रेरिता अंशवो यश्चेत्युदयक्रियाविशेषणं यद्यपि परमते क्तान्तस्य पूर्व्वनिपातो दृश्यते तथापि विमुक्तशब्दस्यात्र न पूर्व्वनिपातो गमकत्वात् अत एव दैक्यं सोऽन्वयेशतीत्युक्तं केचित्तु हन्तेर्भावेक्विप् तमोपहनमाय विमुक्ता अंशवो यश्चेत्याहुः ॥ ३५ ॥

आशुश्रूषन् समैथिल्यावार्त्तां हर्म्म्येषु रक्षसां। शीयमानान्धकारेषु समचारीदशङ्कितः ॥ ३६ ॥

आश्वित्यादि। सकपिर्मैथिल्याः सीताया वार्त्तामाशुश्रूषन् श्रोतुमिच्छन् प्रत्याङ्भ्यां श्रुव इत्यात्मनेपदप्रतिषेधः रक्षसां हर्म्म्येषु गृहेषु समचारीत् सञ्चान्तवान् अतो लान्तस्येति वृद्धिः शीयमानान्धकारेषु अपगच्छत्तमस्सु शद्लृशातने शदेःशित इति तङ् पाघ्रेति शीयादेशः अशङ्कितः शङ्कारहितः ॥ ३६ ॥　जं०म०

आश्वित्यादि। हनूमान् मैथिल्यावार्त्तामाश्रोतुमिच्छन् रक्षसां हर्म्म्येषु सौधगृहेषु समचारीत् संचरति स्म हतीयायोगाभावात् सभस्येति न मं अजवदेति त्रिः स्मृदृशनुत्रेत्यादावाङ्वर्ज्जनात्म मं कीदृशेषु शीयमाना अपगच्छन्तोऽन्धकारा येभ्यः शदेोऽपि समिति मं अशङ्कितः निर्भयः कर्त्तरि क्तः अकर्म्मकत्वात् भावे क्तो वा शङ्का जाताऽस्येति इतोऽस्य जात इति इतो वा ॥ ३६ ॥　भ०

शतसाहस्रमारक्षं मध्यगं रक्षसां कपिः। ददर्श यं कृतान्तोऽपि म्रियेतासाद्य भीषणं ॥ ३७ ॥

ज०म० शतेत्यादि। मध्यमं मध्यप्रकोष्ठगतं आरक्षं गोपकं शतसाह स्त्रं रक्षसां लक्षमात्रं ददर्श विलोकितवान् शतसहस्रं परिमाण मस्येति शाश्वतेः संख्यापूर्व्वपदानां तदन्तग्रहणमलुकीति वचनात् शतमानविंशतिकेत्यादिना अणि संख्यायाः संवत्सरेत्युत्तरपदवृद्धिः भीषणं भयानकं आसाद्य प्राप्य कृतान्तोऽपि यमोऽपि स्रियेत प्राणान् सन्त्यजेत् स्रियतेर्लुङ्लिङोश्चेति तङ् तत्र हि शितइत्य नुवर्त्तते ॥ ३७ ॥

भ० शतेत्यादि। कपिर्म्मध्यगं मध्यकोष्ठगतं रक्षसामारक्षं ददर्श शत साहस्रं शतसहस्रं परिमाणमस्येति विकारसंघेत्यादिना तदस्य परिमाणमित्यर्थे ष्णः सुपञ्चालादित्वादुत्तरपदे वृद्धिः यं भीषणं भयङ्करं आसाद्य प्राप्य कृतान्तोऽपि स्रियेत प्राणान् त्यजति किमु तान्यः विधिनिमन्त्रणेत्यादिना सम्भावनायां लो म्रकुष्टीच्छेममिति मं ॥ ३८ ॥

अध्यासिसिषमाणेऽथ वियन्मध्यं निशाकरे। कासा ञ्चक्रे पुरी सौधैरतीवोद्भासिभिः सितैः ॥ ३८।

ज०म० अध्येत्यादि। अथ निशाकरे चन्द्रमसि वियन्मध्ये अध्यासितुमा रोढुमिच्छति सति पूर्व्ववत्सनइत्यात्मनेपदं आस्तेरनुदात्तेत्त्वमा त्मनेपदनिमित्तं तेनैव सनन्तादपि भवति अत्र सनि इटि कृते अजादेर्द्वितीयस्येति द्विर्व्वचनं पुरी लङ्का कासाञ्चक्रे शोभते स्म सौधैः सौधानां ज्योत्स्नयाचोद्भासमानत्वात् आम्प्रत्ययवदिति तङ्॥ ३८ ॥

अथेत्यादि। अथानन्तरं निशाकरे चन्द्रे आकाशस्य मध्य भ०
मध्यासितुमारोढुमिच्छति सति पुरी लङ्का सौधैर्गृहविशेषैः
काशाञ्चक्रे शुशुभे काशृङ्कृशब्दइत्यस्यानेकार्थत्वात् दीप्त्यर्थता
काशृङ्दीप्तौ इत्यान्तोऽस्तीति विद्यासागरः केचित्तु काशाञ्च
क्रइति तालव्यशकारवान् पाठः काशृङ्द्युताविस्य रूपं वदन्ति
॥ ३८॥

इन्दुञ्चषकसंक्रान्तमुपायुङ्क्त यथामृतं। प्रयु
ञ्जानः प्रियावाचः समाजानुरतोजनः॥ ३९॥

इन्दुमित्यादि। एवं शोभितायां लङ्कायां समाजानुरतः ज०म०
पानगोष्ठीरतोजनः चषकसंक्रान्तं मद्यभाजने प्रतिविम्बेन संक्रा
न्तमिन्दुमुपायुङ्क्त उपभुक्तवान् प्रतिविम्बावच्छिन्नस्य मद्यस्योप
लक्ष्यमाणत्वादेवमुक्तं यथाऽमृतं अमृतमिव प्रियाअनुकूला
वाचः प्रयुञ्जानः अभिदधानः प्रोपाभ्यामिति तङ्॥ ३९॥

इन्दुमित्यादि। एवं शोभितायां लङ्कायां समाजानुरतः भ०
पानगोष्ठीरतोजनश्चषकसंक्रान्तं मद्यपात्रे प्रतिविम्बेन सङ्गतं
चन्द्रमुपायुङ्क्त दर्शनादिक्रियाव्याप्यं चकार चन्द्रस्योपयोगोद
र्शनादिरूपएव जयमङ्गलायान्तु चन्द्रमुपायुङ्क्त वुभुजे चन्द्र
शब्देन तत्प्रतिविम्बावच्छिन्नमद्यभागस्य लचितत्वात् यथामृतमि
वेत्युक्तं किं कुर्व्वन् यथामृतं तद्वत् प्रियावाचः प्रयुञ्जानः पीयता
मित्याद्यनुकूलवाचोऽभिदधानः युजिरउद्मचइति सं महाका
व्योचितं मधुपानवर्णनमिदं॥ ३९॥

संदष्णुवानइवोत्कण्ठामुपाभुङ्क्त सुरामलं। ज्योत्स्नायां विगलन्मानस्तरुणोरक्षसां गणः॥ ४०॥

ज॰म॰ संदष्णुवानइत्यादि। रक्षसां तरुणोगणः उत्कण्ठां प्रियासु संस्मरणं संदष्णुवानइव समुत्तेजयन्निव समःस्नुवइति तङ् ज्योत्स्नायां सुरां अलम्पर्य्याप्तमुपाभुङ्क्त अभ्यवहृतवान् भुजोनवनइति तङ् विगलन्मानः॥ ४०॥

भ॰ संदष्णुवानइत्यादि। तरुणोयुवा रक्षसां गणउत्कण्ठां प्रियाभिलाषं संदष्णुवानइव समुत्तेजयन्निव ज्योत्स्नायां सुरां मदिरां अलमत्यर्थं उपाभुङ्क्त भक्षितवान् सुरापानादेव विगलन्मानः अपगतमानः संदष्णोः सुजोऽग्नेइति सं उत्कण्ठोत्काऽनवाप्तौ योऽभिलाषस्तद्वान्नयेइति॥ ४०॥

मध्वपाययत स्वच्छं सोत्पलं दयितान्तिके। आत्मानं सुरताभोगविश्रम्भोत्पादनं मुहुः॥ ४१॥

ज॰म॰ मध्वेत्यादि। कीदृशं मधु स्वच्छत्वात् सोत्पलतया सुरभित्वात् शोभनं जातं यतः स्वयमात्मानं मुहुरपाययत पायितवत् प्रेरणाविति तङ् दयितान्तिके दयितस्य समीपे सुरताभोगः सुरतविमर्दः तत्र विश्रम्भः तस्योत्पादनं जनकं उत्पादयतीति कृत्यल्युटो बहुलमिति कर्त्तरि ल्युट्॥ ४१॥

भ॰ मध्वित्यादि। रक्षसां गणोदयितान्तिके रमणीसमीपे आत्मानं मधु मुहुर्व्वारं वारं अपाययत अभ्यवपिवेति सं यदा

मध्वेव कर्तृभूतमात्मानं अपाययत् निस्पृहमपि रक्षोगणं सुरा पानमकारयत् मधुगुणादेव पानात् ञेर्ङौऽणौ येदूति मं अणौ म धुनः कर्मत्वात् मधु कीदृशं स्वच्छं निर्म्मलं सोत्पलं प्रियाकर्णोत्पल प्रतिविम्बात् सौरभाय प्रक्षिप्तोत्पलं वा सुरताभोगे सुरतविमर्द्दे विश्रम्भस्य विश्वासस्य उत्पादनं जनकं कभावेऽसोति कर्त्तरि अनट् भावेऽनटि रूपकालङ्कारोवा नन्द्यादित्वाद्वाऽनः उत्पादनक्षम मिति पाठस्तु सुगमएव ॥ ४१ ॥

अभीषयन्त ये शक्रं राक्षसारणपण्डिताः। अवि स्मापयमानस्तान् कपिराटीद्गृहाद्गृहं ॥ ४२ ॥

अभीत्यादि। एवं रक्षस्सु यथायथं चेष्टमानेषु ये राक्षसा रणपण्डिताः संग्रामविज्ञाः शक्रमभीषयन्त भीषितवन्तः भीस्म्यो र्हेतुभयद्गति तङ् भियोहेतुभये षुक् भयग्रहणमुपलक्षणं तेन स्मयतेरपि भवति तानसौ कपिरविस्मापयमानः विस्मयमकार यन् [..]त्वं स्मयतेरित्यात्वं गृहाद्गृहमाटीत् गतवान् लुङि रूपं ॥ ४२ ॥ जo मo

अभीषयन्तेत्यादि। रणे पण्डिताः कुशलाये राक्षसाः श क्रून् अभीषयन्त त्रासितवन्तः तान् अविस्मापयमानः विस्मिता न्नकारयन् मधुपानाद्यासक्ततया तैरविज्ञातद्गति भावः असौ कपिर्गृहात् एकस्मात् गृहमपरमाटीत् जगाम भीर्भीष्वेति ञौ मं भीषादेशस्य अच घाञ्चर्यद्गत्यनुवर्त्तते भय अर्थोभयं भo

नन्तु राक्षसकर्तृतएव सिद्ध: सिभ्योर्याङ्गर्थेमप्रेति श्री इकार स्यालं मय अटेर्थ्यां मि: ॥४२॥

सीतां दिदृक्षुः प्रच्छन्नः सोऽगर्द्धयत राक्षसान्। अवञ्चयत मायाश्च स्वमायाभिर्नरद्विषां ॥४३॥

।म० सीतामित्यादि। सकपिः सीतां दिदृक्षुः सीतान्द्रष्टुमिच्छुः प्रच्छन्नः राक्षसानगर्द्धयत व्यामोहयत् स्वमायाभिश्च नरद्विषां मायाश्च अवञ्चयत अतिसंहृतवान् गृधिवञ्च्योः प्रलम्भनइति तङ् ॥ ४३ ॥

भ० सीतामित्यादि। सीतां दिदृक्षुर्द्रष्टुमिच्छुः प्रच्छन्नो गुप्तः सकपिः राक्षसान् अगर्द्धयत व्यामोहयत् स्वमायाभिर्नरद्विषां राक्षसानां मायाश्च अवञ्चयत वृथा चकार प्रतारे वञ्चिगर्द्धेरिति मं प्रतारो विसम्वादनं मिथ्याख्यानमिति केचित् ॥४३॥

अपलापयमानस्य शत्रूंस्तस्याभवन्मतिः। मिथ्या कारयते चारैर्घोषणां राक्षसाधिपः ॥४४॥

त०म० अपेत्यादि। तस्य कपेः शत्रून् राक्षसान् अपलापयमानस्य न्यक्कुर्व्वतः विभाषालीयतेरित्यात्वे लियःसंमानेत्यादिना शालिनी करणेन्यग्भावने आत्मनेपदं मतिरभवत् कीदृशीत्याह मिथ्या कारयतइति अयं राक्षसाधिपतिश्चारैर्दण्डवाहकैः यां घोषणां पुनः पुनः कारयति जागृत जागृतेति तां मिथ्या कारयते येना

हमविज्ञातएव प्रविष्टः मित्योपपदात्कृञोऽभ्यासइति तङ् अ
भ्यासस्य पुनःपुनःकरणं ॥ ४४ ॥

अपेत्यादि। शत्रून् राक्षसान् अपलापयमानस्य वञ्चयमानस्य भ॰
तस्य कपेरित्थं मतिरभवत् मिथ्येरिति लियोक्ता पूजाभिभवे च
लापेरिति चकारात् प्रतारे मं कीदृशी मतिरित्याह राक्षसाधि
पो रावणश्चारैर्घोषणां मिथ्या कारयते जागृत जागृतेत्युच्चैर्घुष्टं
मिथ्यैव चारैः कारयति तां कर्त्तुं चरान् पुनःपुनः प्रयुङ्क्ते निष्फल
मेव येनाहमविज्ञातएव भ्रमामि मिथ्याकारेरभ्यासइति मं
अभ्यासः पौनःपुन्यं चरएव चारः स्वार्थे ष्णः ॥ ४४ ॥

गूहमानः स्वमाहात्म्यमटित्वा मन्त्रिसंसदः। नृभ्यो
ऽपवादमानस्य रावणस्य गृहं ययौ ॥ ४५ ॥

गूहेत्यादि। स्वमाहात्म्यं स्वपराक्रमं गूहमानः आच्छन् ज॰म॰
जदुपधायागोहइत्यूत्वं स्वरितजितइति तङ् अटित्वा मन्त्रि
संसद शुकसारणादिगृहाणि गत्वा रावणस्य गृहं ययौ कीदृ
शस्य नृभ्योऽपवदमानस्य कुप्यतः असूयतोवा अपाद्दइति तङ्
नृभ्यइति क्रुधद्रुहेति सम्प्रदानसंज्ञायां चतुर्थी ॥ ४५ ॥

गूहेत्यादि। असौ स्वमाहात्म्यं स्वपराक्रमं गूहमानः संवृ भ॰
ण्वन् मन्त्रिणां संसदो गृहाणि अटित्वा गत्वा रावणस्य गृहं ययौ
कीदृशस्य नृभ्योऽपवादमानस्य असूयतः ज्ञिन्न्यन्तपिवेत्यादिना
अपवादेर्मे यस्मैदित्सेत्यादिना असूयार्थेन संप्रदानत्वं गुह्रम

संवृतौ उभयपदी णुर्धूञ्इति गुणः गुहोणोरूरित्योकारस्य ऊत्वं ॥ ४५ ॥

दिशो द्योतयमानाभिर्दिव्यनारीभिराकुलं। श्रिय मायच्छमानाभिरुत्तमाभिरनुत्तमां ॥ ४६ ॥

ज॰म॰ कीदृशं गृहमित्याह। दिश इत्यादि द्योतयमानाभिः भासयमानाभिः णिचश्चेति तङ् दिव्यनारीभिः उत्तमाभिः प्रधाननायिकाभिराकुलं व्याप्तं श्रियमनुत्तमामतिशयवतीं आयच्छमानाभिः स्वीकुर्व्वाणाभिः समुदाङ्भ्य इति तङ् ॥ ४६ ॥

भ॰ दिश इत्यादि। कीदृशं गृहं यथा दिव्यनारीभिर्दिवि भवाभिः स्त्रीभिराकुलं व्याप्तं कीदृशीभिः दिशो द्योतयमानाभिः भासयमानाभिः ण्यन्तत्वादुभयपदं उत्तमाभिः श्रेष्ठाभिः अनुत्तमां अत्युत्कृष्टां श्रियं आयच्छमानाभिः स्वीकुर्व्वाणाभि र्निन्यन्तीत्यादिना आङ्पूर्व्वयमेर्मं न विद्यते उत्तमं यस्मादिति विग्रहः उत्तमेऽनुत्तमं विद्यादिति द्विरूपकोषः ॥ ४६ ॥

नित्यमुद्यच्छमानाभिः स्मरसम्भोगकर्म्मसु। जानानाभिरलं लीलाकिलकिञ्चितविभ्रमान् ॥ ४७ ॥

ज॰म॰ नित्येत्यादि। स्मरसम्भोगकर्म्मसु कामोपभोगक्रियासु नित्यमुद्यच्छमानाभिः पूर्व्ववत्तङ् लीलाः स्त्रीणां शृङ्गारचेष्टाविशेषाः

तथाचोक्तं लीला: सलीला: किलकिञ्चितानि बिब्बोकमाप्यायित विभ्रमाणि। विच्छित्तमाकुट्टमितेच्छितानि योज्यानि तज्ज्ञै:सुकुमार नृत्यइति लक्षणञ्चैषां नृत्यशास्त्रे॥ ४७॥

नित्यमित्यादि। कीदृशीभि: सुरतसम्भोगकर्म्मसु कामोप भो-भोगक्रियासु नित्यमुद्यच्छमानाभि: उद्यमं कुर्व्वतीभि: भिन्त्यन्ते त्यादिना उत्पूर्व्वयमेरात्मं लीलाकिलकिञ्चितविभ्रमान् शृङ्गार चेष्टाविशेषान् अलमत्यर्थं जानानाभि: पूर्व्ववत् अगिशत्मं प्रिया नुकरणे लीलावेशभाषाविचेष्टितै: क्रोधाश्रुहर्षभीत्यादे: सङ्कर: किलकिञ्चितं विभ्रमस्त्वरया काले भूषास्थानविपर्य्यय: ईदृशी भिर्दिव्यनारीभिराकुलं गृहं ययाविति सम्बन्ध:॥ ४७॥

स्वं कर्म्म कारयन्नास्ते निश्चिन्तोयासु झषध्वज:। स्वार्थं कारयमाणाभिर्यूनोमदविमोहितान्॥ ४८॥

स्वञ्चेत्यादि। स्वमात्मीयं मोहनादिकर्म्म दिव्यनारी: कार ज०म० यन् अनुष्ठापयन् एषझषध्वज: कामदेव: निश्चिन्तआस्ते ताभिरा कुलमिति योज्यं हृक्रोरन्यतरस्यामिति द्विकर्म्मकता यून: स्वार्थं स्वप्रयोजनं मैथुनाख्यङ्कारयमाणाभि: आकुलं तान् हनूमानिति वक्ष्यमाणेन सम्बन्ध: कीदृशान् मदविमोहितान् मधुपानमद परवशान् ताभि:॥ ४८॥

स्वमित्यादि। या दिव्यनारी: स्वं कर्म्म मोहनादि कारयन् भ० झषध्वज: कामोनिश्चिन्तोनिराकुल: सन्नास्ते यासां कामएवास्ति

न चिन्ता तद्विरोधिनी ताभिराकुलं गृहं ययौ घोऽन्नौर्गेरित्यादिना प्रयोज्यस्य कर्मत्वं मदेन विमोहितान् यूनस्तरुणान् स्वार्थं स्वप्रयोजनं कारयमाणाभिः ण्यन्तस्योभयपदित्वात् ग्रहणानौ दर्शितौ ॥ ४८ ॥

कान्तिं स्वां वहमानाभिर्यजन्तीभिः स्वविग्रहान्।
नेत्रैरिव पिवन्तीभिः पश्यतां चित्तसंहतीः ॥ ४९ ॥

ज०म० कीदृशाभिरित्याह कान्तिमित्यादि। स्वाङ्कान्तिं शोभां वहमानाभिः यजन्तीभिः स्वविग्रहान् ददतीभिः कामिभ्यः तत्र स्वङ्कर्मेति णिचश्चेत्यस्य विषयः कान्तिं स्वां स्वविग्रहानिति स्वरितेतइत्यस्य विषयः विभाषोपपदेनप्रतीयमानइति विभाषाआत्मनेपदं इत्यात्मनेपदाधिकारः शेषभूतत्वात्परस्मैपदविधानमाह नेत्रैरिति पश्यतां चित्तसंहतीः चित्तसन्दोहान् पिवन्तीभिरिव गृह्णन्तीभिरिव शेषात्कर्त्तरि परस्मैपदं ॥ ४९ ॥

भ० कान्तिमित्यादि। स्वां कान्तिं वहमानाभिः धारयन्तीभिः वहोऽनुपापरो ञिनन्त्यन्तपिवेति फलवत्कर्त्तरि मं मन्मथेनार्पिता छाया सैवकान्तिरिति स्मृता। स्वविग्रहान् स्वदेहान् यजन्तीभिः कामिभ्योऽददतीभिः यजैञोदेवार्चादानसङ्गतिकृतौ ञिनन्त्यन्तेत्यादौ ञिद्धातोः फलवत्कर्त्त्र्यात्मनेपदस्यानित्यत्वं नित्यत्वे हि नवशःपमेइत्यनेन ञिद्धातोरुभयपदकथनमनर्थकं स्यात् फलवत्कर्त्तृनियमितात्मनेपदादन्यत्र परस्मैपदस्य गम्यमानत्वात्

टीढ्वमिति नियमादन्यत्र किं परस्मैपदं नगम्यते तेनात्र यजे:
फलवत्कर्त्तर्य्यपि परस्मैपदं फलवत्कर्त्तरि आत्मनेपदमेव अन्य
त्रोभयपदमिति नवश:पमेञ्जितइत्यस्य साफल्यमिति चेत् क्वचिद
पवादविषयेऽप्युत्सर्गोऽभिनिविशतइति न्यायात् नवश:पमेञ्जितइ
त्यनेनोभयपदित्वं विद्यासागरस्तु फलवत्त्वाविवक्षायां पदं मंस्कृ
त्य पश्चात् स्वशब्दादिसम्बन्धात् वाक्ये क्रियाफलस्य कर्त्तृयोगम्य
तइत्याह अपरे तु कर्त्तृभिप्रायेऽपि क्रियाफले विभाषोपपदं न
प्रतीयमानइति छत्रेण पक्षे आत्मनेपदाभावमाहु:। इत्यात्मने
पदाधिकार: अथ परस्मैपदमुच्यते। पश्यतां जनानां चित्तं चू
षान् नेत्रैरिव पिबन्तीभि: स्त्रीभिराकुलं गृहं ययावित्यन्वय:
पापाने नवश:पमे इति पं श्लः॥ ४९॥

ताद्दनूमान् पराकुर्व्वन्नगमत् पुष्पकं प्रति। विमानं
मन्दरस्याद्रेरनुकुर्व्वद्दिवश्रियं॥ ५०॥

तादित्यादि। तादिव्यनारी: पराकुर्व्वन्नपक्षिपन् अगमत्पु जं०म०
ष्पकमपि पुष्पकविमानं प्रति येन पुष्पकविमानेन जगाम कीदृ
शं मन्दरस्याद्रे: श्रियमनुकुर्व्वदिव अनुपराभ्यांकृञ: कर्त्तृभिप्राये
चात्मनेपदस्य प्राप्तत्वात्॥ ५०॥

तादित्यादि। हनूमान् तादिव्यनारी: पराकुर्व्वन् विक्षिपन् पु म०
ष्पकनामानं विमानं प्रति लक्षीकृत्य अगमत् कीदृशं मन्दरना
म्नोऽद्रे: श्रियमनुकुर्व्वदिव स्वश्रिया सदृशीकुर्व्वदिव कृञोञित्त्वादु
भयपदप्राप्ते चेपंपरेति पं तादृत्यत्र तान् इति पठित्वा यान् यून:

स्वार्थं कारयमाणाभिराकुलं गृहं ययौ तान् पराकुर्व्वन्निति तृतीयश्लोकेनान्वयोजयमङ्गलायामुक्तः व्योमयानं विमानोऽस्त्री त्यमरः॥ ५० ॥

तस्मिन् कैलाससङ्काशं शिरःशृङ्गं भुजद्रुमं। अभिक्षिपन्तमैक्षिष्ट रावणं पर्व्वतश्रियं॥ ५१ ॥

ज॰म॰ तस्मिन्नित्यादि। तस्मिन् विमाने रावणमैक्षिष्ट कैलाससङ्काशं कैलासतुल्यं शिरःशृङ्गं शिरांसि शृङ्गाणीव यस्य भुजद्रुमं भुजा द्रुमाइव यस्य तं पर्व्वतस्य श्रियोऽभिक्षिपन्तं अभिभवन्तं अभिप्रत्यतिभ्यःक्षिपइति परस्मैपदं तस्य स्वरितेत्वात् कर्त्रभिप्रायआत्मनेपदं प्राप्तं॥ ५१ ॥

भ॰ तस्मिन्नित्यादि। हनूमान् तस्मिन् विमाने रावणमैक्षिष्ट दृष्टवान् कीदृशं कैलाससङ्काशं कैलासतुल्यं तुल्यतां दर्शयति शिरांसि शृङ्गाणीव यस्य भुजास्तु द्रुमाइव यस्य तादृशं अन्येषां पर्व्वतानां श्रियं अभिक्षिपन्तं अभिभवन्तं क्षेपमित्यादौ प्रत्यभ्यतिक्षिपेति सं कैलासेति केलिःप्रयोजनमस्येति विकारसंघेत्यादिना ष्णे कैलः आसतेऽस्मिन्नित्यासः पश्चात् कर्म्मधारयः कैलानां समूहः कैलं पूर्व्ववत्ष्णः तस्यासइति वा॥ ५१ ॥

प्रवहन्तं सदामोदं सुप्तं परिजनान्वितं। मघोने परिह्नुय्यन्तमारमन्तं परंस्मरे॥ ५२ ॥

प्रवत्यादि। सदामोदं कस्तूरिकादिपरिमलम्प्रवहन्तं प्राद् ज०म०
वहतीति परस्मैपदं स्वरितेत्त्वात् सुप्तं शयने संविष्टं परिजनान्वितं
पारिपार्श्विकाधिष्ठितं मघोने इन्द्राय परिमृष्यन्तं असूयन्तं
परेर्मृषश्चेति परस्मैपदं मृषेः स्वरितेत्त्वात् क्रुधद्रुहेति सम्प्रदान
संज्ञायां चतुर्थी स्मरे कामे परमत्यर्थं आरमन्तं रतिं कुर्व्वाणं
व्याङ्परिभ्योरमइति परस्मैपदं रमेरनुदात्तेत्त्वात्॥ ५२॥

प्रवहन्तमित्यादि। कीदृशं रावणं सन्तमुत्कृष्टं आमोदं कस्तू भ०
रिकादिपरिमलं सदा सर्व्वदा वा आमोदं प्रवहन्तं घेपमित्यादौ
प्रवहेति पं सुप्तं शयानं परिजनैः पारिपार्श्विकैरन्वितं मघोने
इन्द्राय परिमृष्यन्तं असूयन्तं घेपमित्यादौ परिमृषेति पं यस्मै
दित्सेत्यादिना संप्रदानत्वं स्मरे कामे परमत्यर्थं आरमन्तं क्रीड
न्तं घेपमित्यादौ व्यापरिरमइति पं॥ ५२॥

व्यरमत् प्रधनात्तस्मात्परित्रस्तः सहस्रदृक्। क्षणं
पर्य्यरमत्तस्य दर्शनात्पवनात्मजः॥ ५३॥

व्यरेत्यादि। यस्माद्रावणात्सहस्रदृगिन्द्रः परित्रस्तः भीत्रा ज०म०
र्थानामित्यपादाने पञ्चमी प्रधनात् युद्धात् व्यरमत् उपरतव्या
पारोऽभूत् व्याङ्परिभ्योरमइति परस्मैपदं जुगुप्साविरामप्रमा
दार्थानामपादाने पञ्चमी तस्य दर्शनात्मारुतात्मजः हनूमान्
क्षणं पर्य्यरमत् तुष्टिमानभवदित्यर्थः साधु रावणेति पूर्व्ववत्त्वतः
परस्मैपदं॥ ५३॥

भ० व्यरमदित्यादि। यस्मस्दृगिन्द्रायस्मात् रावणात् परित्र स्तोभीतः सन् प्रधनात् युद्धात् व्यरमत् उपरतोऽभूत् यतोऽपा येत्यादिना भीविरामयोरपादानं पूर्व्ववत्यं यस्मस्दृगिति पदोप न्यासेयुक्तः परित्रस्तस्य सर्व्वत्र प्रेरितनेत्रत्वात् तस्य दर्शनात् मा रुतात्मजोहनूमान् चणं पर्य्यरमत् तुष्टोऽभवत् पूर्व्ववत्॥ ५३॥

उपारंसीच्च संपश्यन् वानरस्तं चिकीर्षितात्। रम्यं मेरुमिवाधूतकाननं श्वसनोर्म्मिभिः॥ ५४॥

ज०म० उपेत्यादि। तं रावणं पश्यन् वानरः चिकीर्षितात्कर्तुमि ष्टात् सीतान्वेषणादुपारंसीत् निवृत्तः उपाच्चेत्यधिकृत्य विभाषा कर्म्मकादिति लुङः परस्मैपदं तस्य मेरोरिव रम्यत्वात् यदाह मे रुमिव श्वसनोर्म्मिभिः वातसमूहैः आधूतकाननं प्रचलितवनं मेरुं तथा श्वसितकल्लोलैः आधूतानि शिरांस्याननानि च यस्येति॥५४॥

भ० उपेत्यादि। वानरस्तं रावणं संपश्यन् चिकीर्षितात कर्त्तुमि ष्टात् सीतान्वेषणादपि उपारंसीत् निवृत्तः घपमित्यादौ वाद्रुप रमइति पत्ते पं यमरमेति द्रम्सनौ मेरुवत् रम्यं श्वसनोर्म्मिभि र्निश्वासवेगैराधूतानि ईषत्कम्पितानि काननानि मुखानि येन कानि शिरांसि आननानि च यस्येति वा मेरुपचे श्वसनोर्म्मिभि र्व्वायुवेगैराधूतानि काननानि वनानि यत्र उर्म्मिस्तरङ्गे पीडायां वेगे सङ्गप्रकाशयोः। काननं विपिने गेहे परमेष्ठिमुखेऽपिचेति विश्वः कं शिरोऽम्बुनोरित्यमरः॥ ५४॥

दृष्ट्वा दयितया साकं रहीभूतं दशाननं। नात्र सीतेत्युपारंस्त दुर्म्मनावायुसम्भवः॥ ५५॥

दृष्ट्वेत्यादि। रहीभूतम्विजनस्थं दशाननं अरुर्मनश्चचुरित्यादिना च्वौ सलोपः दयितया साकं दृष्ट्वा नात्र सीतेति ज्ञात्वा उपारंस्त विमना निवर्त्तते स्म विभाषाकर्म्मकादिति तङ् वायुसम्भवो हनूमान्॥ ५५॥ ज०म०

दृष्ट्वेत्यादि। दयितया साकं सह रहीभूतं विजनदेशस्थं दशाननं दृष्ट्वा अत्र सीता नास्तीति ज्ञात्वा दुर्म्मना दुःखितचित्तो वायुसम्भवो हनूमान् उपारंस्त निवर्त्तते स्म तस्माद्देशादित्यर्थात् पूर्व्ववत् पचे सं अरहसि रहसि भवन्तमिति मनश्चचुरित्यादिना सलोपः॥ ५५॥ भ०

ततः प्राकारमारोहत् चपाटानविबोधयन्। नायोधयत्समर्थोऽपि सीतादर्शनलालसः॥ ५६॥

ततइत्यादि। ततउत्तरकालं प्राकारमारोहत् आरूढवान् चपाटान् राचसान् अविबोधयन् अचेतयन् णिचश्चेत्यात्मनेपदे प्राप्ते बुधयुधेत्यादिना वा लटः परस्मैपदं बुधेरणौ सकर्म्मकस्य चित्तवत्कर्तृकत्वात् हनूमतश्चित्तवत्त्वात् तत्र ह्यकर्म्मकाये तेषामन्वितत्वकर्तृत्वार्थमुपादानमित्युक्तं तावायोधयत् समर्थोऽपि न संग्रामितवान् यतः सीतादर्शनलम्पटः अत्रावकर्म्म ज०म०

कादित्यनेन उभयत्रापि लङः परस्मैपदं युधेरेकस्याचित्तव त्कर्मकत्वात्॥ ५६॥

भ० ततइत्यादि। ततोऽनन्तरं हनूमान् प्राकारमारोहत् आरूढ वान् किंकुर्व्वन् चपाटान् राक्षसान् अविबोधयन् अचेतयन् सम र्थोऽप्यसौ तान् नाबोधयत् यतः सीतायादर्शने लालसोमहाभिला षोऽस्य ण्यन्तादुभयपदे प्राप्ते कर्म्मानार्थेक्विरित्यादिना पं॥ ५६॥

अध्यासीद्राघवस्याहं नामयेयं कथं शुचः। वैदेह्या जनयेयं वा कथमानन्दमुत्तमं॥ ५७॥

ज०म० अध्येत्यादि। राघवस्याहं कथं केन प्रकारेण शुचं शोकं नाम येयं कथं वा वैदेह्याः सीतायाआनन्दं जनयेयमिति हनूमान ध्यासीत् चिन्तितवान् ध्यैचिन्तायामित्यस्य लुङि रूपं नमिजन्यो रकर्म्मकत्वात्, अणावित्यनेन लिङः परस्मैपदं नबुधेत्यादिना जनिजृषित्यादिना जनेर्मित्संज्ञायां ह्रस्वत्वं॥ ५७॥

भ० अध्येत्यादि। अहं राघवस्य शुचः शोकान् केन प्रकारेण नाशयेयं कथं वा वैदेह्याः सीतायाउत्तममानन्दं जनयेयं इति हनूमान् अध्यासीत् चिन्तितवान् ध्यैचिन्तायां एचोऽयित्या यम रमेति इमसनौ ण्यन्तनशजनाभ्यां कर्म्मानार्थइत्यादिना पं जने र्घटादिजनीति ह्रस्वः॥ ५७॥

दृष्ट्वा राघवकान्तान्तां द्रावयिष्यामि राक्षसान्। तस्याहि दर्शनात्पूर्व्वं विक्रमः कार्य्यनाशकृत्॥ ५८॥

विप्रेत्यादि। यदि त्वं रामकिङ्करस्तदा कोवाविल्लम्बदद्म
ध्यति तव प्रियैः माल्यवति पर्व्वते वर्त्तते महेन्द्रस्य पर्व्वतविशेष
स्य न विप्रकृष्टं न दूरं विन्ध्यनाम्नः पर्व्वतात् न दूरं समुद्रस्य ना
नभ्यासे न दूरे वारादर्थैरिति विन्ध्यपर्व्वतशब्दात् पक्षे पञ्चमी
तदप्रवृत्तिपक्षे सम्बन्धे षष्ठ्येव आरादर्थैरिति दूरान्तिकार्थैः
दूरान्तिकार्थादसत्त्वेऽमृटाङसिङिसेति परः स्वमते विप्रकृष्टा
दयोदेशार्थत्वे विवक्षिताः स्थितिक्रियात्वर्थालभ्यतएव तेनास्ती
त्यध्याहारात् देशाध्वकालभावंवाढेरिति पाचिककर्म्मत्वं कर्म्म
त्वाभावपक्षे सप्तमी ॥ १११ ॥

असंप्राप्ते दशग्रीवे प्रविष्टोऽहमिदं वनं। तस्मिन्
प्रतिगते द्रष्टुं त्वामुपाक्रंस्यचेतितः ॥ ११२ ॥

अ॰म॰ असमित्यादि। दशवदने असंप्राप्ते अप्रविष्टे अहमचेतितः
सन् इदं वनमशोकवनिकाख्यं प्रविष्टइति तस्मिन्प्रतिगते त्वां द्रष्ट
मुपाक्रंसि समुत्सहे स्म यस्यचभावेनेति सप्तमी कपेः प्रवेशोपक्र
मयोः रावणसंप्राप्तिप्रतिगमनक्रियाभ्यां लक्ष्यमाणत्वात् उपाक्रं
सीति उपपराभ्यामित्यनेन वृत्त्यादिषुसर्गेतत्साहे क्रमैस्तङ् उत्त
मपुरुषैकवचनं इट् स्नोक्रमोरनात्मनेपदनिमित्तइति षिच् इट्
नभवति ॥ ११२ ॥

भ॰ असमित्यादि। रावणे असंप्राप्ते अनायाते सति अहमचेतितो
ऽज्ञातः सन्निदं वनं प्रविष्टः प्रवेशस्य गतिविशेषत्वात् गत्यर्थोकेति
कर्त्तरि क्तः तस्मिन् प्रतिगते सति त्वां द्रष्टुं साक्षात्कर्त्तुं अहं

उपाक्रंसि उपगतोऽस्मि ग्रैपादादरेत्यादि इति संज्ञासि: उपाक्रंसि उपगतो ऽहं कृतवानस्मीति वार्थः इङ्शुक्लादितावनदृति सं कालभावाधा रमिति उभयच भावे सप्तमी ॥ ११२ ॥

तस्मिन् वदति रुष्टोऽपि नाकार्षं देवि विक्रमं। अ विनाशाय कार्य्यस्य विचिन्वानः परापरं ॥ ११३ ॥

यद्यादावेव प्रविष्टोऽसि तर्हि किमिति स्वकर्म्म न दर्शितवानसी ज॰म॰ त्याह। तस्मिन्नित्यादि हे देवि तस्मिन्वदति रुष्टोऽपि विक्रमं नाका र्षं तं तथा वदन्तमनादृत्य विक्रमं नाकार्षमित्यर्थः षष्ठीचानादर इति चकारात्सप्तमी किमर्थं कार्य्यस्य सन्देशकथनादेरविना शाय विचिन्वानः परापरं पौर्व्वापर्य्यं निरूपयन् कर्म्मभिप्रायेतङ् ॥ ११२ ॥

तस्मिन्नित्यादि। हे देवि तस्मिन् रावणे वदति वदन्तं तं भ॰ अनादृत्य रुष्टोऽप्यहं विक्रमं नाकार्षं न कृतवान् स्वामीश्वराधि पती त्यादिना अनादरे सप्तमी तस्मिन् वदति सतीति भावे सप्तमीति विद्यासागरः कुतइत्याह यतोऽहं कार्य्यस्य सन्देशकथ नस्य अविनाशाय अविघाताय परापरं विचिन्वानः परं यद्भवि ष्यति विरोधादि अपरञ्च यद्भूतं सन्देशकथनार्थमागमनादि तत्सर्व्वं विचारयन् उत्तरे सति कथं न पूर्व्वस्य बाधइति चिन्त यन् ॥ ११२ ॥

वानरेषु कपिः स्वामी नरेष्वधिपतेः सखा। जातो रा
मस्य सुग्रीवस्ततो दूतोऽहमागतः॥ ११४॥

ज॰म॰ कथं वानरस्त्वं तस्य किंकरइत्याह। वानरेत्यादि वानरेषु स्वामी यः कपिः सुग्रीवः स नरेष्वधिपतेरामस्य सखा जातः स्वामी श्वरेत्यादिना षष्ठीसप्तम्योर्विधानात् सप्तम्युदाहृता ततोऽहं दूत आगतः॥ ११४॥

भ॰ वानरेष्वित्यादि। रामस्यानुचरोवानरः कथमित्याह वानराणां कपिः सुग्रीवो नराणामधिपतेरामस्य सखा जातः ततोऽहं दूत आगतः स्वामीश्वराधिपतीति सप्तमी॥ ११४॥

ईश्वरस्य निशाटानां विलोक्य निखिलां पुरीं। कुश
लोऽन्वेषणस्याहमायुक्तोदूतकर्म्मणि॥ ११५॥

ज॰म॰ आगत्य च लङ्कां प्रविश्य दृष्टायातइत्याह। ईश्वेत्यादि निशाटानां राक्षसानामीश्वरस्य दशाननस्य अत्र षष्ठ्युदाहृता पुरीं निखिलां निःशेषां विलोक्य किं तत्र वर्त्ततइति प्राप्तइति वक्ष्यमाणेन सम्बन्धः कुशलोऽन्वेषणस्याहं सीतायाअन्वेषणस्य निपुणः आयुक्तोदूतकर्म्मणि दूतकर्म्मणि दूतक्रियायां व्यापृतः आयुक्तकुशलाभ्यामिति षष्ठीसप्तम्यौ॥ ११५॥

भ॰ ईश्वरस्येत्यादि। निशाटानां राक्षसानां ईश्वरस्य रावणस्य निखिलां समस्तां पुरीं विलोक्य अहं प्राप्तइत्यग्रिमश्लोकेनान्वयः

कीदृशः अन्वेषणस्य कुशलः सीतान्वेषणनिपुणः दूतकर्मणि आयु
क्तः तत्परः स्वामीश्वराधिपतीत्यादिना षष्ठीसप्तम्यौ ॥ ११५॥

दर्शनीयतमाः पश्यन् स्त्रीषु दिव्यास्वपि स्त्रियः। प्राप्तो
व्यालतमान् व्यस्यन् भुजङ्गेभ्योऽपि राक्षसान्॥ ११६ ॥

दर्शेत्यादि । तत्र दिव्यास्वपि स्त्रीषु मध्ये दर्शनीयतमाः स्त्रियः जं॰म॰
पश्यन् यतश्च निर्द्धारणमिति सप्तमी दर्शनीयतमत्वेन गुणेन पृथ
क्करणात् भुजङ्गेभ्योऽपि व्यालतमान् हिंस्रान् राक्षसान् व्यस्यन्
अपक्षिपन् पञ्चमीविभक्तइति पञ्चमी भुजङ्गेभ्यो राक्षसानां विभा
गात् प्राप्तो देव्याः पादमूलमित्यर्थात् ॥११६ ॥

दर्शेत्यादि। दिव्यास्वपि स्त्रीषु मध्ये दर्शनीयतमाः स्त्रियः पश्यन् भ॰
भुजङ्गेभ्योऽपि व्यालतमान् अतिहिंस्रान् राक्षसान् व्यस्यन् अव
क्षिपन् अहं प्राप्तो देव्याः स्थानमित्यर्थात् गम्यते स्त्रीष्वित्यत्र दर्श
नीयतमत्वेन गुणेव समुदायादेकदेशस्य निर्द्धारणात् स्वामीश्व
राधिपतीत्यादिना निर्द्धारे सप्तमी भुजङ्गेभ्यइत्यत्र पञ्चमीव्यति
रेके इति सूत्रेण पञ्चमीमाह परः व्यतिरेको हीनाधिकभावइति
परः स्वमते निर्द्धारेऽधिकेनेत्यादिना निर्द्धारेपञ्चमी केनचिद्गु
णेन समानधर्मिभ्यः यत्पृथक्करणं सनिर्द्धारः भुजङ्गराक्षसयोस्तु
सधर्मित्वं व्यालत्वेन वासवता अपि क्वचित् पञ्चमीत्यनेन निर्द्धा
रे पञ्चमीमाह ॥ ११६ ॥

भवत्यामुत्सुको रामः प्रसितः सङ्गमेन ते । मघासु कृतनिर्व्वापः पितृभ्यो मां व्यसर्ज्जयत् ॥ ११७ ॥

ज०म० किमवस्थो राम इत्याह भवेत्यादि । भवत्यां त्वयि उत्सुकः उन्मनाः रामः तव सङ्गमेन प्रसितः प्रसक्तः प्रसितोत्सुकाभ्यां तृतीया चेति चकारात्सप्तमी मघाभियुक्तः कालः तत्समीपे चन्द्रमसो वर्त्तमानत्वात् मघानक्षत्रेण युक्तः काल इत्यण् तस्य लुबविशेष इति लुप् तस्मिन्काले पितृभ्यः कृतनिर्व्वापः दत्तदानः मां व्यसर्ज्जयत् नक्षत्रे च लुपीति सप्तमी तत्रापि लुपि युक्तवद्व्यक्तिवचन इति स्त्रीलिङ्ग बहुवचने भवतः व्यसर्ज्जयदिति विग्रहस्तु प्रातिपदिकेत्यादिना प्रातिपदिकमात्रे प्रथमा ॥ ११७ ॥

भ० भवत्यामित्यादि । रामो मां व्यसर्ज्जयत् प्रास्थापयत् कीदृशः सन् भवत्यां त्वयि उत्सुकः उन्मनाः तव सङ्गमेन प्रसितः प्रसक्तः प्रसितोत्सुकाभ्यां तृतीयासप्तम्याविति परः समस्ते विषयविवक्षया सप्तमी करणत्वविवक्षया तृतीया मघासु मघानक्षत्रयुक्तकाले पितृभ्यः कृतनिर्व्वापः कृतदानः काले सप्तमी मघाशब्दस्य तद्युक्तकालवाचित्वं कालवाचिनो मघादित्युक्तेरेव गम्यते लोकोपचारात् कालेऽपि स्त्रीलिङ्गत्वं बहुवचनान्तत्वञ्च परे तु मघानक्षत्रेणेन्दुयुक्तेन युक्तः काल इत्यर्थे टण् तस्य लुप् युक्तवद्व्यक्तिवचने इति स्त्रीत्वं बहुवचनत्वञ्चाहुः ॥ ११७ ॥

अयं मैथिल्यभिज्ञानं काकुत्स्थस्याङ्गुरीयकः । भवत्याः स्मरतात्यर्थमर्पितः सादरं मम ॥ ११८ ॥

सन्देहनिरासार्थं चाभिज्ञानं दर्शयन्नाह अयमित्यादि। काकु जं०म०
त्स्थस्यायमङ्गुलीयकोऽभिज्ञानं चिह्नमयमभिज्ञानमिति लिङ्गा
धिके प्रातिपदिकमात्रे प्रथमा मैथिलीति सम्बोधनाधिके सम्बोध
ने चेति चामन्त्रितं सम्बुद्धिस्थानैव द्रष्टव्यं काकुत्स्थस्येति षष्ठीशेष
इति षष्ठी भवत्याश्वस्त्यर्थं स्मरता मम सादरमर्पितं अधीगर्थेत्या
दिना स्मरणार्थे कर्म्मणः शेषविवक्षायां षष्ठी ॥ ११८ ॥

अयमित्यादि। सन्देहनिरासार्थमाह हे मैथिलि अयं काकु भ०
त्स्थस्य रामस्य अङ्गुलीयकमाभरणविशेषोऽभिज्ञानं चिह्नं स
र्थसम्प्रत्ययार्थमिति लिङ्गार्थे सम्बोधने च प्रथमा काकुत्स्थस्येति
सम्बन्धे षष्ठी अस्त्यर्थं भवतीं स्मरता रामेण सादरं यथा स्यात्त
था मम समर्पितः भवत्या इति समार्थैर्नेत्यादिकर्म्मणि षष्ठी अन्ये
तु कर्म्मणो वा इत्याहुः सूत्वर्थस्त्रेषेत्यादिविशेषवचनैः कर्म्मणि षष्ठी
मुक्ता कर्म्मादिविषयेऽप्यविवक्षिते कर्म्मादौ सम्बन्धविवक्षायां षष्ठी
वेत्यनेनान्यत्रापि षष्ठीं कुर्व्वन्ति विशेषसूत्रविषयादन्यत्रापि
दृष्टत्वात् सत्याधारे सम्बन्धविवक्षा अङ्गुलौ भवति तिष्ठतीति
ठक्षेकादिति ईयः तरन्तस्य साध्यलिङ्गत्वात् अलङ्कारस्वरूपस्य
गम्यमानत्वात् पुंस्त्वमुदाहृतं अङ्गुलीयकमूर्म्मिकेत्यमरेण सामा
न्यत्वात्क्लीबं प्रयुक्तं ॥ ११८ ॥

रामस्य दयमानोऽसावध्येति तव लक्ष्मणः। उपा
स्कृषातां राजेन्द्रागमस्त्वेह मा नशीः ॥ ११९ ॥

ज०म० रामेत्यादि। अथवा लक्ष्मणोरामस्य दयमानोरामं रचन् मुद्धं मा कार्षीरिति दयतेः कर्मणि षष्ठी तवाध्येति त्वां स्मरति अधीगर्थे षष्ठी आश्वासनार्थमाह मा चसीः उद्वेगं मा कार्षीः चसेरीदित्वान्निष्ठायामिट्प्रतिषेधात् श्विचहट् भवति यतोरा जेन्द्रौ रामलक्ष्मणौ इहागमस्यागमनस्य भावे अप् उपाक्षषातां प्रतियत्नं कृतवन्तौ आगमनस्य निश्चितत्वात् तस्यैव सुग्रीवसख्ये न गुणाधानात् तेन कृतः प्रतियत्न इति कर्मणि षष्ठी प्रतियत्ने लुङ् तङ् सुट्॥११८॥

भ० रामेत्यादि। असौ लक्ष्मणोरामस्य दयमानः शोकापनोद नेन रामं प्रतिपालयन् तव अध्येति त्वां स्मरति पूर्ववत्कर्मणि षष्ठी आश्वासार्थमाह राजेन्द्रौ क्षत्रियश्रेष्ठौ तौ इहागमस्य उपा स्क्षाषातां आगमनमुपस्कृतवन्तौ अतोमा चसीः भयं न कुरु स्वप नावच्चेपणेत्यादिना प्रतियत्ने मं सम्परेःसुमुपादित्यादिना सुम् सतोगुणान्तराधानं प्रतियत्नः निश्चितत्वात् सतएव गमनस्य सुग्रीवसख्येन गुणान्तरस्योत्कर्षस्याधानात् पूर्ववत्कर्मणि षष्ठी कृञः प्रतियत्ने कर्मणि षष्ठीति परः चसीउद्वेगे टौ॥११८॥

रावणस्येह रोक्ष्यन्ति कपयोभीमविक्रमाः। धृत्या नाथस्य वैदेहि मन्योरुच्चासयात्मनः॥१२०॥

ज०म० रावेत्यादि। इह लङ्कायां कपयोभीमविक्रमाः अवज्ञापरा क्रमाः रावणस्य रोक्ष्यन्ति मरोगं रावणं करिष्यन्ति भीमविक्रमा

इति गुणप्रधानोनिर्देशः ततश्च विक्रमेरुजः भावकर्तृकत्वात् रुजा र्थानां भाववचनानामज्वरइति षष्ठी अतोवैदेहि धृत्या नाथस्व आशंसस्व धृतिं लभस्वेत्यर्थः आशिषिनाथइति कर्मणि षष्ठी आशि षिनाथइत्युपसंख्यानात्तङ् मन्योरुज्जासयात्मनः मन्युं नाशय जसुहिंसायां ताडने च चौरादिकस्य हिंसार्थत्वात्तेन जासिनि प्रहणेति कर्मणि षष्ठी॥ १२०॥

रावणस्येत्यादि। इह लङ्कायां कपयोभीमपराक्रमाः सन्तोरा वणस्य रोक्ष्यन्ति रावणं पीडयिष्यन्ति रुजोभङ्गे तो कर्मणि षष्ठी अन्ये तु रुजार्थस्य भावकर्तृके इति सूत्रेण कर्मणि षष्ठ्याउदाह रणार्थं कपयस्तत्सम्बन्धिनोभीमाविक्रमास्त इह रावणस्य रोक्ष्य न्तीत्यन्वयं कुर्व्वन्ति हे वैदेहि धृत्या नाथस्व धृतिर्भूयादित्यात्म न्याशिषं कुरु धृतिं लभस्वेति भावः कर्मणि षष्ठी आशिषिनाथइति षष्ठ्यर्थं परसूत्रं प्रपथाशीरित्यादिना मं आत्मनोमन्योरुज्जा सय आत्मनः शोकं नाशय जसकवधे कर्मणि षष्ठी जासिनिप्र हणनाटिक्राथिपिषांहिंसायामिति षष्ठ्यर्थं परसूत्रं॥॥ १२०॥

राक्षसानां मयि गते रामः प्रणिहनिष्यति। प्राणा नामपणिष्टासौ रावणस्त्वामिहानयन्॥ १२१॥

राक्षेत्यादि। मयि गते रामोराक्षसानां प्रणिहनिष्यति राक्ष सान् मारयिष्यति पूर्व्ववत्कर्मणि षष्ठी निप्रहणइति सङ्घातविगृ हीतविपर्य्यस्तग्रहणमित्युक्तं नेर्गदेत्यादिना णत्वं किञ्च प्राणाना

मपणिष्टाथमिति अथं रावणस्तामिहानयन् प्राणानपणिष्ट विक्री तवान् व्यवहृपणोःसमर्थयोरिति षष्ठी प्राणानामपणायिष्टेति पाठान्तरं तद्युक्तं स्तुत्यर्थस्य पणेस्तत्र ग्रहणात् गुपूधूपेत्यादिना आयप्रत्ययीन भवति ॥ १२१ ॥

भ० राक्षसानामित्यादि। मयि गते सति रामो राक्षसानां प्रणि हनिष्यति राक्षसान् मारयिष्यति प्रामजोपदति शेषत्वं कर्मणि षष्ठी असौ रावणस्तामिह लङ्कायामानयन् प्राणानामपणिष्ट प्राणान् विक्रीतवान् व्यवहृपणोर्व्यवहारे इति षष्ठ्यर्थं परस्मै तत्र व्यवहारेइति क्रयविक्रयलक्षणे द्यूतक्रियायाञ्चेति व्याख्यातं पणङ्व्यवहृतौस्तुतौ वारेइत्यनेन कमचतइत्यादिसूत्रविहिता आर्द्धधातुकायाविभाषिताः तेन पक्षे नायप्रत्ययः अपणिष्टेति चिन्त्यमिति विद्याविनोदस्य प्रलपितं व्यवस्थितवाधिकाराद्दाया दयोऽसार्व्वधातुके वा भवन्तीति पक्षे नायप्रत्ययइति विद्यासाग रेणोक्तत्वात् स्वमतं युक्तमेव ॥ १२१ ॥

अदेवीद्बन्धुभोगानां प्रादेवीदात्मसम्पदं। अतप्त त्वस्त्वैकस्याः स्मरत्यक्तोरघूत्तमः ॥ १२२ ॥

ज०म० अदेवीदित्यादि। न केवलं प्राणानपणिष्ट बन्धुभोगानामदेवीत् बन्धुभोगान्विक्रीतवान् दिवस्तदर्थस्येति षष्ठी दिवोव्यवहारार्थ त्वात् प्रादेवीदात्मसम्पदं विक्रीतवान् विभाषोपसर्गेइति पक्षे द्वि तीया प्रशब्देन युक्तत्वात् रामानुरागं पुनर्द्दर्शयन्नाह रघूत्तम

स्मरति मधीगर्थेति षष्ठी अक्षः इति एकस्मिन्नप्यक्षि कालोऽर्थप्रयोगकालेऽधिकरणइति षष्ठी ॥ १२२ ॥

अदेवीदित्यादि। न केवलं प्राणानामपणिष्ठासौ रावणो भ० बन्धून् भोगांश्च अदेवीत् क्रीतवान् त्यक्तवानिति यावत् कर्म्मणि षष्ठी आत्मसम्पदमपि प्राद्देवीत् विक्रीतवान् कर्म्मणि द्वितीया परे तु व्यवहारे सोपसर्गस्य दिवः कर्म्मणि वा षष्ठी नित्यन्त्वनुपसर्गस्येत्याङ्कः अथ संचिय्य पुनरपि रामानुरागं दर्शयति अक्षः शतकृत्वो दिवसे शतं वारान् राम एकस्यास्तव एकां त्वां स्मरति चकृत्वस् वारेइति शतशब्दात् चकृत्वस् तद्योगे स्वामीश्वराधिपतीत्यादौ सुजर्थैरिति अहन्शब्दात्षष्ठी तवेति कर्म्मणि षष्ठी ॥ १२२ ॥

तवोपशायिका यावद्राक्षस्यश्चेतयन्ति न। प्रतिसंदिश्यतां तावद्भर्त्तुः शार्ङ्गस्य मैथिलि ॥ १२३ ॥

एवं तामाश्वास्य सन्देशन्दापयितुमाह तवेत्यादि। हे मैथिलि ज०म० तवोपशायिका परिपाट्या शयनं याभीराक्षसीभिः सहेत्यर्थात् पर्य्यायार्हणोत्पत्तिषु ण्वुच यावन्न चेतयन्ति न प्रतिबुध्यन्ते तावत्प्रतिसन्दिश्यतां प्रतिसन्देशोदीयतां शार्ङ्गस्य भर्त्तुः शार्ङ्गं धनुर्धारयतो रामस्य तव शार्ङ्गस्येति यथाक्रमं कर्तृकर्म्मणोः कृतीति षष्ठी ॥ १२३ ॥

तवेत्यादि। हे मैथिलि तवोपशायिका पर्य्यायशयनं याभीराक्षसीभिः सहेत्यर्थात् पर्य्यायप्राप्ता ताश्च राक्षस्योयावन्न चेत भ०

यन्ति न प्रतिबुध्यन्ते तावत् शार्ङ्गस्य भर्त्तुर्धनुर्धारयतोरामस्य कृत प्रतिसन्दिध्यतां प्रतिसन्देशोदीयतां इत्येवं हनूमान् शेषे इति पूर्व्वेण सम्बन्धः उपपूर्व्वशीङ् पर्य्यायशयनवाचकः अस्यूणकेति ज्ञापकात् भावे यकः स्त्रीलस्य ढघेक्रतीत्यादिना तवेत्यत्र कर्त्तरि षष्ठी शार्ङ्गस्येत्यत्र कर्म्मणि तव उप समीपे शायिकाः शयाना: राक्षसः कर्त्तरि णकइति केचित् चित्कर्यंज्ञाने चुर्भ्योञ्जिः ॥१२३॥

पुरः प्रवेशमाश्चर्यं बुद्धा शाखामृगेण सा। चूडाम णिमभिज्ञानं ददौ रामस्य सम्मतं॥१२४।

 पुरइत्यादि। शाखामृगेण मर्कटेन पुरोलङ्कायाः दुःप्रवेशायाः प्रवेशः तमाश्चर्य्यमद्भुतं बुद्धा सा सीता चूडामणिमभिज्ञानं ददौ सर्व्वमुक्तमस्य सम्भाव्यतइति उभयप्राप्तौ कर्म्मणीति षष्ठी प्रवेशइत्युभयप्राप्तौ कृति लङ्काहनूमतोः कर्म्मकर्तृत्वात् रामस्य संमतं प्रियं मतिबुद्धीत्यादिना वर्त्तमाने निष्ठा नलोकेति षष्ठी प्रतिषेधे प्राप्ते क्तस्य च वर्त्तमानइति षष्ठी॥१२४॥

भ० पुरइत्यादि। शाखामृगेण वानरेण पुरोलङ्कायाः प्रवेशमाश्चर्य्यं बुद्धा मत्वा सा सीता चूडामणिमभिज्ञानं शिरोरत्नं स्वकीयचिह्नं ददौ रामस्य सम्मतं रामेण मन्यमानं ज्ञायमानं सदा स्मरणात् शार्षेकार्येति वर्त्तमाने क्तः तद्योगे कामुकस्यार्थं क्तइति कर्त्तरि षष्ठी अपूर्व्वविशेषं तद्योगे ढघेक्रतीति पुरइत्य

च कर्मणि षष्ठी कश्चिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति न्या यात् शाखास्वगेणेत्यत्र डुघेक्लतीत्यनेन षष्ठीविषयेऽपि साधनहे त्वित्यादिना कर्त्तरि तृतीया इति केचित् वस्तुतस्तु यत्रैककृद्योगे कर्त्तरि कर्मणि च षष्ठ्याविषयः स्यात् तत्र डुघेक्लतीत्यादिना कर्म णि नित्यं षष्ठी स्वभावक्तेत्यादौ सठ इत्यनेन तु कर्त्तरि विभाषया षष्ठी षट्षष्ठी योग्यकर्मवत् कृतिप्रयुज्यमाने इत्यर्थः यत्तु कर्त्तृ कर्मप्राप्तौ कर्मण एवैककृतीति षष्ठ्यर्थं क्रमदीश्वरस्य सूत्रं तत्तु प्रायिकं अनात् शङ्किनेत्यपरे इति तेनैव पश्चादुक्तं शब्दानामनुशा सनमाचार्य्येणाचार्य्यस्येत्याद्युदाहरन्ति प्राञ्चः॥ १२४॥

रामस्य शयितं भुक्तं जल्पितं हसितं स्थितं। प्रक्रान्त
ञ्च मुहुः पृष्ट्वा हनूमन्तं व्यसर्ज्जयत्॥ १२५॥

रामेत्यादि। रामस्य अभिज्ञानं दत्त्वा शयितादिकं मुहुः ज॰म॰ पृष्ट्वा हनूमन्तं व्यसर्जयत् प्रेषितवती तस्य शयितं शयनस्थानं किं भू मौ शेते अन्यत्रेति वा भुक्तं भोजनस्थानं किं गृहे भुङ्क्ते मुनिजनगृहे वेति जल्पितं मन्त्रस्थानं किं रहसि मन्त्रयते प्रकाशे वेति हसितं हसनस्थानं किं शृंगारवस्तुनि हसति वीरवस्तुनि वेति स्थितं निवासस्थानं किं गुहायां तिष्ठत्युत तरुतले वेति प्रक्रान्तं प्रचंक्रम णस्थानं अनुनासिकेत्यादिना दीर्घः किं भवने क्रम्यते अन्यत्र वेति एषां शीव्ययमतिप्रत्ययवचनार्थत्वात् क्तोऽधिकरणेवेति क्तः तस्य प्रयोगे अधिकरणवाचिनश्चेति षष्ठी॥ १२५॥

भ० रामस्येत्यादि। अभिज्ञानं दत्त्वा रामस्य शयितादि मुहुर्म्मुहुर्वारं वारं पृष्टा सीता हनूमन्तं व्यवर्णयत् प्रेषितवती शयितं शय नस्थानं भूमिः शय्या वेति भुक्तं भोजनस्थानं स्वगृहं मुनिगृहं वेति जल्पितं मन्त्रणास्थानं रहः प्रकाशितं वा हसितं हास्यस्थानं भृत्या रवस्तु वीरवस्तु वा स्थितं वासस्थानं तरुतलं गुहादिकं वा प्रका न्तं चंक्रमणस्थानं अरण्यं वनं वा सर्व्वत्र क्रौव्यगत्यर्थनार्थादिति आधारे क्तः तद्योगे कामुकयज्ञार्थक्तेदति कर्त्तरि षष्ठी यदि भा वे क्तः तदा स्वभावक्तेति षष्ठी सम्बन्धविवक्षया वा ॥ १२५ ॥

असौ दधदभिज्ञानं चिकीर्षुः कर्म्म दारुणं। गामु कोऽप्यन्तिकं भर्त्तुर्म्मनसाचिन्तयत्क्षणं ॥ १२६ ॥

ज०म० असावित्यादि। असौ हनूमान् दधत् धारयन्नभिज्ञानं चिह्नं कर्त्तृकर्म्मणोः कृतीति षष्ठ्यां प्राप्तायां नलोकेति शत्प्रयोगे प्रतिषेधः लइति शानन्नाद्योस्त्रोताः दारुणमशोकवनिका भङ्गादिकं कर्म्म चिकीर्षुः कर्त्तुमिच्छुः उकारप्रक्षेपात् षष्ठ्याः प्रति षेधः भर्त्तुः स्वामिनः अन्तिकं समीपं गामुकोऽपि गमनशीलोऽपि उकप्रयोगे प्रतिषेधः मनसा क्षणं चिन्तितवान् वक्ष्यमाणं कर्म्म ॥ १२६ ॥

भ० असावित्यादि। असौ हनूमान् अभिज्ञानं चिह्नं दधत् धार यन् दारुणं कर्म्म चिकीर्षुः कर्त्तुमिच्छुः भर्त्तू रामस्य अन्तिकं समीपं गामुकोगमनशीलोऽपि क्षणं मनसाचिन्तयत् वक्ष्यमाणमिति शाज्यं ढषेकृतीति सूत्रे व्यादिवर्जनात् न कर्म्मणि षष्ठी ॥ १२६ ॥

कृत्वा कर्म्म यथादिष्टं पूर्व्वकार्य्याविरोधि यः। करोत्यभ्यधिकं कृत्यं तमाहुर्दूतमुत्तमं॥ १२७॥

कृत्वेत्यादि। यो दूतो यथोद्दिष्टं कर्म्म कार्य्यं कृत्वा अत्र कृत्वेत्यव्ययप्रयोगे प्रतिषेधः ततस्तत्तरकालं पूर्व्वकर्म्माविरोधि पूर्व्वकृतस्य कार्य्यस्य यदविरोधि तदधिकं करोति तमुत्तमं दूतमाहुर्विदु र्नीतिविद इति शेषः मया च यथोद्दिष्टं सीतान्वेषणं कृतमिति भावः॥ १२७॥ जं०म

कृत्वेत्यादि। यो दूतो यथादिष्टमाज्ञानतिक्रमेण कार्य्यं कृत्वा पूर्व्वकार्य्याविरोधि अधिकं कार्य्यान्तरं करोति तमुत्तमं दूतमाहुर्नीतिविद इति शेषः तस्मात् सीतान्वेषणमादिष्टं कर्म्म कृत्वा अधिकमपि करिष्यामीत्यग्रिमश्लोके वक्ष्यति कृत्वेति व्यवर्ज्जनात् न तद्योगे षष्ठी॥ १२७॥ भ०

वैदेहीं दृष्टवान् कर्म्म कृत्वान्यैरपि दुष्करं। यशो यास्याम्युपादाता वार्त्तामाख्यायकः प्रभोः॥ १२८॥

तदेव च दर्शयन्नाह वैदेहीत्यादि। अहमद्य तावद्वैदेहीं दृष्टवान् निष्ठाप्रयोगे प्रतिषेधः अन्यदपि कार्य्यमतिदुष्करं कृत्वा ल्यप्रयोगे प्रतिषेधः ततो यश उपादाता आत्मसात्कर्त्ता इदमतिदुष्करं तेन कृतमिति तृचकस्य प्रयोगे प्रतिषेधः वार्त्तामाख्याय जं०म०

कः प्रभोर्वार्त्तामाख्याता स्यातिभविष्यदधिकारात्तुमण्वुलौक्रिया यामिति ण्वुल् अकेनोर्भविष्यदाधमर्ण्यतयोरिति प्रतिषेधः॥१२८॥

भ॰ वैदेहीमित्यादि। वैदेहीं दृष्टवानहं अन्यैरतिदुष्करं कर्म वक्ष्यमाणं वनभङ्गादि कृत्वा यत्रउपादाता उपादानशीलः सन् प्रभोः समीपे वार्त्तामाख्यायकः आख्यातुं यास्यामि क्तवतुखल र्थशीलार्थतृणां योगे षष्ठीनिषेधोदर्शितः आख्यायकइति अत्र ण्वकेत्युक्तेस्तृन्ण्वकौ घेदृति विधानादन्यत्रापि ण्वकोभवतीति ज्ञापि तं तेनात्र तुमर्थे ण्वकोबोध्यः किम्बा तृन्ण्वकौ घेदृत्यनेनैव ण्वकः तत्र कालस्याविशेषात् सर्व्वस्मिन् काले तौ भवतदृति प्राप्तं अत्र तु भविष्यत्कालोविवक्षितः आख्यायकः आख्यास्यन्नित्यर्थः क्वचि दपवादविषयेऽप्युत्सर्गोऽपि प्रवर्त्ततइति न्यायात् षष्ठीविषयेऽपि द्वितीया परे तु क्रियार्थार्थाद्भविष्यतीति सूत्रेण ण्वकं ण्वकस्तुम र्थेप्रायइति सूत्रेण षष्ठीनिषेधस्याङ्गः प्रायोग्रहणात् क्वचित् षष्ठी मपि॥१२८॥

राक्षसेन्द्रस्य संरक्ष्यं मया लव्यमिदं वनं। इति सं चिन्त्य सदृशं नन्दनस्याभनक् कपिः॥१२९॥

१०भ॰ राक्षेत्यादि। इदं वनमशोकवनिकाख्यं राक्षसेन्द्रस्य सं रक्ष्यं रक्षाई अर्हेकृत्यः स्वृचलोश्चेत् तन्मया लव्यं लवनीयं कृत्या नां कर्त्तरिवेति षष्ठी तृतीये कर्त्तरि भवतः इत्येवं सञ्चिन्त्य कपि र्नन्दनस्य वनस्य सदृशं तुल्यं तुल्यार्थैरिति पक्षे षष्ठी अभनक्

भग्नवान् भञ्जेर्लङि श्नमल्लोपइति नलोपे हल्ङ्यादिलोपे अस्रे चर्त्वे च रूपं ॥ १२८ ॥

राचेत्यादि। इदं वनं राक्षसेन्द्रस्य संरक्ष्यं सम्यक्रक्षार्हं भ॰ मया सर्वं छेदनीयं इति सञ्चिन्त्य नन्दनस्य इन्द्रवनस्य सदृशं तद्वनं कपिर्हनूमान् अभनक् भग्नवान् भञ्जेर्ण्यां रुधादित्वात् श्नम् स्वभावक्तेति कृत्ययोगे कर्त्तरि विभाषया षष्ठी समार्थेनेति समार्थेन षष्ठी ॥ १२८ ॥

राघवाभ्यां शिवं दूतस्तयोरहमिति ब्रुवन्। हितो भनज्मि रामस्य कः किं ब्रूतेऽत्र राक्षसः ॥ १३० ॥

राघेत्यादि। राघवाभ्यां रामलक्ष्मणाभ्यां शिवं भद्रमस्तु तयो ज॰म॰ र्हनूमान् दूतोहितोरामस्य भनज्मीदं वनं एवञ्च क्रियमाणे कोभ वतां मध्ये राक्षसः किं ब्रूते इत्येवं ब्रुवन् वभञ्ज पवनात्मजो रिपुवनमि॰ वक्ष्यमाणेन सम्बन्धः राघवाभ्यां शिवं हितोराम स्येति चतुर्थी चाशिष्येत्यादिना षष्ठीचतुर्थ्यौ। इति विभक्त्यधि कारः ॥ १३० ॥

राघवाभ्यामित्यादि। हे राक्षसा राघवाभ्यां रामलक्ष्मणाभ्यां भ॰ शिवं भूयादिति शेषः शक्तार्थवषडित्यादिना हितार्थत्वात् शिव शब्दयोगे चतुर्थी तत्र हि शक्तइत्यनेन शक्तार्थानां अलंप्रभु शक्तपर्य्याप्तसमर्थादीनां ग्रहणं अर्थशब्दः प्रयोजनवाची तेषा प्र योजनार्थानां ग्रहणं हितमित्यनेन हितार्थानां भद्रशोभनशिवा

दीनां कुशलपर्य्यायपठितानां अन्येषाञ्च साध्वादीनां ग्रहणं हितार्थत्वेन स्वस्तिशब्दे गृहीतेऽपि स्वस्तिशब्दग्रहणं समार्थैर्न्वादिना हितार्थत्वेन प्राप्तषष्ठ्या अभावत्वार्थं अतएव स्वस्तिवर्ज्जं कुशलार्थैरिति विभाषया चतुर्थ्यर्थं परसूत्रं एवं सुखार्थानां सुखी त्यादीनां ग्रहणं अतएव वचाय साधुः वचिय इत्युदाहृतं रामस्य हितःसन् इदं वनं भनज्मि समार्थैनेति सम्बन्धे हितयोगे च षष्ठी एवं क्रियमाणे अत्र कर्मणि कोराचसः किं ब्रूते इति ब्रुवन् पवनात्मजो रिपुवनं बभञ्जेत्यग्रिमश्लोकेनान्वयः॥ १३०॥

विलुलितपुष्परेणुकपिशं प्रशान्तकलिकापलाशकुसुमं कुसुमनिपातविचित्रवसुधं सशब्दनिपतद्द्रुमोत्कशकुनं। शकुननिनादनादितककुब्विलोलविपलायमानहरिणं हरिणविलोचनाधिवसतिं बभञ्ज पवनात्मजोरिपुवनं॥१३१॥

॥ इति भट्टिकाव्येऽष्टमः सर्गः॥ ८॥

ज०म० विलित्यादि। कीदृशं बभञ्ज विलुलितानां पुष्पाणां रेणुभिः कपिशं पिङ्गं प्रशान्ताश्ववसन्ना: कलिकाः पलाशानि पत्राणि कुसुमानि च यत्र कुसुमानां निपातेन विचित्रा वसुधा यत्र सशब्दैर्निपतद्भिर्द्रुमैरुत्काउन्मनसः शकुनायत्र शकुनानां पलाय मानानां निनादेन नादिताः सञ्जातनादाः ककुभोदिशो यत्र विलोलाव्याकुलाविपलायमानाहरिणायत्र हरिणस्येव लोचने

यस्याः सीतायाः तस्यास्यधिवसतिं निवासं । इत्यनभिहिता धिकारः॥ १३१॥

इति भट्टिकाव्यटीकायां जयमङ्गलायां अधिकारकाण्डे तृतीयः परिच्छेदः काव्यस्याशोकवनिकाभङ्गोनामाष्टमः सर्गः॥

विलुलितेत्यादि। पवनात्मजोरिपुवनं बभञ्ज कीदृशं विलु- भ॰ लितानां विघटितानां पुष्पाणां रेणुभिः कपिशं पिङ्गलं प्रशान्तानि अवसन्नानि कलिकाः पत्राणि पुष्पाणि च यत्र कुसुमानां निपा तेन विचित्रा वसुधा यत्र सशब्दैः सशब्दं वा निपतद्भिर्द्रुमैरुत्काः स्थानान्तरं गन्तुमुन्मनसः शकुनाः पक्षिणोयत्र शकुनानां पला यमानानां निनादेन नादिताः संजातनादाः शब्दायमानीकृतावा ककुभोदिशोयत्र विलोलाव्याकुलाः सन्तोविपलायमानाहरि णायत्र हरिणस्येव विलोचने यस्याः सीतायास्तद्धिवसतिं तन्नि वासस्थानं॥ १३१॥

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभ रतसेनकृतायां मुग्धबोधिन्यां भट्टिटीकायामधिकारकाण्डेऽष्ट मः सर्गः॥

अथ प्रकीर्णकाः।

द्रुमभङ्गध्वनिसंविग्नाः कुर्वत्यक्षिकुलाकुलाः। अका र्षुः क्षणदाचर्य्योरावणस्य निवेदनं॥१॥

अथान्तरे प्रकीर्णकश्लोकानाह द्रुमभङ्गेत्यादि। क्षणदाचर्य्यो ज॰म॰ निशाचर्य्यः चरेट्ः रावणस्य निवेदनमकार्षुः ज्ञातवत्यः वक्ष्यमा

थप्रकारेण द्रुभङ्गध्वनिसम्मिश्राः शाखाभङ्गशब्देन सन्त्रस्ताः ओ विजीभयचलनयोः ओदितश्चेति निष्ठानत्वं नुवत्पक्षिकुलाः कूज द्भिः पक्षिकुलैः व्यस्तमानसाः गुशब्दे तौदादिकस्यस्य उवङादेशः ॥१॥

भ॰ द्रुभङ्गेत्यादि। सीतासन्निधिस्थाः चपदाचर्य्योराक्षसोरावणस्य निवेदनं वक्ष्यमाणं अकार्षुः कृतवत्यः कृत्स्नष्टौ अनुस्मिदेरित्युस् कीदृश्यः द्रूणां वृक्षाणां भङ्गशब्दैः संत्रस्ताः त्रिजकीत्रोभीकम्पे ओ दित्वात् नास्य नः कुवद्भिः शब्दायमानैः पक्षिणां कुलैः समूहैरा कुलाव्यस्तचित्ताः कुङशब्देकुलचेत्यादादिकात् शतृः कुशब्दे भौवादिकइति जयमङ्गलायां प्रमादस्तस्यात्मनेपदित्वात् शपो गुणित्वाच्च कूजत्पक्षिकुलाकुलाइति क्वचित् पाठः ॥१॥

यदताप्सीच्छनैर्भानुर्यत्रावासीन्मितं मरुत्।
यदाप्यानं हिमोस्रेण भनक्त्युपवनं कपिः॥२॥

ज॰म॰ यदित्यादि। यद्वनं भानुः शनैर्मन्दमताप्सीत्तपति स्म दृक्तम लक्षणा वृद्धिः मरुत् मितं स्तोकमवासीत् वाति स्म हिमोस्रेण शिशिररश्मिना आप्यानं वृद्धिं नीतं प्यायतेर्लोपोव्योर्वलीति यलोपः ओदित्वान्नत्वं तदुपवनं कपिर्भिनक्ति चूर्णयतीति निवेद नमकार्षुः॥२॥

भ॰ यदित्यादि। निवेदनमाह यदुपवनं भानुः शनैर्मन्दं अता प्सीत् तपति स्म अजवदेति सिः अनिमन्तात् यत्रोपवने वायुर्मित

मध्यं अवासीत् वाति स्म यमरमेति इन्दुमती चन्दुपवनं हिमांशेण चन्द्रेण आप्यानं वृद्धं ओप्यायोऽस्वृद्धौ कर्त्तरि क्तः च्वोर्लोपइति यलोपः किरणोस्नमयूखांशुगभस्तिघृणिघृष्णयइत्यमरः तदुप वनं कपिर्भनक्ति इति निवेदनमकार्षुरिति पूर्व्वेण सम्बन्धः ॥ २ ॥

ततोऽशीतिसहस्राणि किङ्कराणां समादिशत्।
इन्द्रजित्सूर्विनाशाय मारुतेः क्रोधमूर्च्छितः ॥ ३ ॥

ततइत्यादि। निवेदनानन्तरमिन्द्रजित्सूः रावणः इन्द्रजितं सूतइति सत्सुद्विषेत्यादिनानुपसर्गे क्विप् मारुतेर्हनूमतोविनाशाय अशीतिसहस्राणि समादिशत् समादिष्टवान् किंकराणां किं कुर्व्वन्ति दिवाविभेत्यादिना टप् क्रोधमूर्छितः क्रोधोद्धतः मूर्छः समुच्छ्राये वर्त्तमानत्वात् ॥ ३ ॥ जं०म०

ततइत्यादि। ततोऽनन्तरमिन्द्रजित्सूरावणः क्रोधेन मूर्छितः संजातमूर्छः सन् मारुतेर्हनूमतोविनाशाय किङ्कराणां अशीति सहस्राणि समादिशत् आज्ञापयत् इन्द्रजितं सूते इति क्विप् ॥ ३ ॥ भ०

शक्त्यृष्टिपरिघप्रासगदामुद्गरपाणयः। व्यश्नुवाना दिशः प्रापुर्वनं दृष्टिविषोपमाः ॥ ४ ॥

शक्तीत्यादि। ते किङ्करावनं प्रापुः प्राप्तवन्तः शक्त्यादयः प्रहरणविशेषाः पाणौ येषामिति प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ जं०म०

भवतः व्यसुनामाः द्विषोव्याप्नुवन्तः अप्नूव्याप्तौ सौवादिकः दृष्टि विषोपमाः भुजङ्गवत् दृष्ट्यैव विनाशयन्त इत्यर्थः ॥ ४ ॥

म० अस्त्रीत्यादि। अस्त्रादयः पाणौ येषां ते किङ्करा वशं प्रापुः द्विषो व्यसुवानाव्याप्नुवन्तः अप्नूङ्व्याप्तिसंहत्योः दृष्टिविषैः सर्प विशेषैरुपमायेषां दृष्टिर्दर्शनं विषोपमा विषमिव येषामिति वा ॥ ४ ॥

दध्वान मेघवद्भीममादाय परिघं कपिः। नेदुर्दीप्ता युधास्तेऽपि तडित्वन्त इवाम्बुदाः ॥ ५ ॥

ज०म० दध्वेत्यादि। कपिर्भीमं परिघं भयानकमर्गलमादाय मेघ वद्दध्वान ध्वनति स्म तेऽपि किङ्कराः तडित्वन्त इवाम्बुदाः नेदुः नदन्ति स्म किङ्कराणां दृश्यत्वात् मेघैः सादृश्यं आयुधानाञ्च तडितेति ॥ ५ ॥

भ० दध्वानेत्यादि। कपिर्हनूमान् भीमं भयानकं परिघं लौह वन्मुद्गरमादाय गृहीत्वा मेघइव दध्वान ध्वनशब्दे तेऽपि दीप्त प्रहरणाराक्षसास्तडिद्युक्तामेघाइव नेदुः शब्दितवन्तः ॥ ५ ॥

कपिनाम्भोधिधीरेण समगंसत राक्षसाः। वर्षा स्वद्भुततोयौघाः समुद्रेणेव सिन्धवः ॥ ६ ॥

ज०म० कपीत्यादि। कपिना अम्भोधिधीरेण क्षोभ्यत्वात् राक्षसाः समगंसत सङ्गताः समोगमीत्यादिना तङ् लुङ् यथा सिन्धवो नद्यः उद्भूततोयौघाः उद्भिन्नजलपूराः समुद्रेण सङ्गच्छन्ते ॥ ६ ॥

कपिनेत्यादि। ते राघवाः समुद्रवद्धीरेण कपिना समगं भ० सत मिलिताबभूवुः समीगम्दृच्छेति सं मान्तोऽद्गतदृत्यतादेशः यथा वर्षास्वद्भुतजलपूराः सिन्धवोनद्यः समुद्रेण सङ्गताभवन्ति ॥ ६ ॥

लाङ्गूलमुद्धतं धुन्वन्नुद्वहन् परिघं गुरुं। तस्थौ तोर णमारुह्य पूर्व्वं न प्रजहार सः ॥ ७ ॥

॥ एते प्रकीर्णकाः ॥

लाङ्गूलेत्यादि। सहनूमान् लाङ्गूलं पुच्छमुद्धतं उत्क्षिप्तं ज०म० धून्वन् धूञ्कम्पनदृति स्वादौ पठितः परिघं गुरुं उद्वहन् तोर णमारुह्य तस्थौ न तु पूर्व्वं प्रजहार प्रहृतवान् शूराणां पश्चात् प्रहारित्वात् ॥ ७ ॥

एते प्रकीर्णकाः।

लाङ्गूलेत्यादि। सहनूमान् तोरणं बहिर्द्वारमारुह्य उद्धत भ० मुत्क्षिप्तं लाङ्गूलं धुन्वन् कम्पयन् गुरुं परिघं उद्वहन् धारयन् तस्थौ पूर्व्वं न प्रजहार शूराणां पश्चात्प्रहारित्वात् ॥ ७ ॥

एतेप्रकीर्णकाः।

॥ सिचि वृद्ध्यधिकारमाह ॥

अघानिषुः शराम्भांसि तस्मिन्सद्यःपयोधराः। न ह्वालीन्न चाग्राजीत्त्रासं कपिमहीधरः ॥ ८ ॥

ज०म० इतःपरं सिचि वृद्धिमधिकृत्याह अचेत्यादि। तस्मिन्वने रक्षः पयोधराः रक्षांसि पयोधराइव शरानाम्भांसि शरान् अम्भांसी व अचारिषुः चरितवन्तः चरतिरकर्म्मकः चरेत् चुतअवृत्तिरित्यादिप्रयोगेषु दृश्यते इह तु सकर्म्मकोविवक्षितः कपिर्महीधर इव न चाक्षालीत् न चलितवान् इयोरन्यतोहलादेर्लघोरिति विकल्पे प्राप्ते अतोलान्तस्येति सिचि वृद्धिः नाग्राजीत् त्रासं भयस्य न जगाम महीधरतुल्यत्वात् नेटीति प्रतिषेधस्यातोहलादेर्लघोरिति विकल्पिते वदव्रजेत्यादिना वृद्धिः॥ ८॥

भ० अथ सिचि वृद्ध्यधिकारः स्पमते सिच् सिः। अचेत्यादि। तस्मिन् कपौ रक्षांसि पयोधराइव शरानम्भांसीव अचारिषुः क्षिप्तवन्तः किन्तु कपिर्महीधरइव न च, अक्षालीत् नैव चलितवान् न च त्रासमग्राजीत् प्राप्तवान् चर्ज्जसञ्चलने क्षलञ्चलचाले व्रजगतौ सर्व्वत्र व्यांसिः व्रजवदेति व्रिः॥ ८॥

अवादीत्तिष्ठतेत्युच्चैः प्रादेवीत्परिघं कपिः। तथा यथा रणे प्राणान् बहूनामग्रहीद्द्विषां॥ ९॥

ज०म० अवेत्यादि। ततउत्तरकालं कपिस्तिष्ठत मा पलायध्वमिति उच्चैस्तानवादीत् पूर्व्ववद्वृद्धिः तथा तेन प्रकारेण परिघं परिघेण प्रादेवीत् विजिगीषते स्म दिवःकर्म्मचेति परिघस्य कर्म्मसंज्ञा दिवेर्नेटीति वृद्धिप्रतिषेधः यथा बहूनां द्विषां शत्रूणां प्राणानग्रहीत् निगृहीतवान् अतोहलादेरिति विकल्पे प्राप्ते ह्यन्तक्षणश्वसइति प्रतिषेधः॥ ९॥

अवादीदित्यादि। अतः परं यूयं तिष्ठत मा पलायध्वमि भ०
त्युच्चैर्महता ध्वनिना कपिरवादीत् उक्तवान् पूर्व्ववद्वृद्धिः परिघेण
तथा तेन प्रकारेण प्रादेवीत् क्रीडति स्म जेतुमैच्छद्वा दिव्युजिगी
षेच्छापणिद्युतौ क्रीडागत्योः टी पुर्घूर्डुदति षुः दिवोधेवेति करणे
द्वितीया यथा रणे बहूनां शत्रूणां प्राणान् अग्रहीत् अपहृतवान्
ह्मयादेःसेमद्रति ह्मान्तवर्ज्जनात्त त्रिः ॥९॥

अर्णोरवमिषूरक्तं देहैः प्रौर्णविषुर्भुवं। दिशः प्रौर्ण
विषुश्चान्ये यातुधानाभवद्भियः॥१०॥

अर्णैरित्यादि। यातुधानाराक्षसाअर्णैः प्रहारमार्गैः रक्तं शो ज०म०
णितमवमिषुः वमन्ति स्म ह्यन्तेति वृद्धिप्रतिषेधः देहैर्भुवं प्रौर्णा
विषुः छादितवन्तः अन्ये यातुधानाःभवद्भियःभवन्तीभीर्येषामिति
भयात्पलायमानाः दिशः प्रौर्णविषुः छादितवन्तः ऊर्णोतेर्विभा
षेति विकल्पः ऊर्णोर्विभाषोर्णौरित्यङित्त्वपक्षे द्रष्टव्यः ङित्त्वे गुण
वृद्धिप्रतिषेधात्॥१०॥

अर्णैरित्यादि। यातुधानाअर्णैः प्रहारमार्गैरक्तं अवमिषुः भ०
वमन्ति स्म पूर्व्ववम्मान्तवर्ज्जनात्त त्रिः देहैर्भुवं प्रौर्णाविषुः आच्छा
दितवन्तः भवन्ती विद्यमाना भीर्भयं येषां तेऽन्ये यातुधानादिशः
प्रौर्णविषुः पलायन्ते स्मेत्यर्थः ऊर्णुञआच्छादने पूर्वत्रिर्व्याग्मिति
वृद्धिरावादेशश्च॥१०॥

अक्राथिषुश्च्युतोत्साहाभिन्नदेहाः प्रियासवः। कपे रत्रासिषुर्नादान्मृगाः सिंहध्वनेरिव॥११॥

॥इति सिचि वृद्ध्यधिकारः॥

ज०म० अरेत्यादि। च्युतोत्साहाः निरुत्साहाः अरारिषुः स्मृताः स्म इति अव्हितवन्तः यतः प्रियासवः प्रियप्राणाः कपेः सम्बन्धिनो नादादत्रासिषुः त्रस्ताः उभयत्रापि नेटीति प्रतिषिद्धोऽतोहला देरिति विकल्पः। इति सिचि वृद्ध्यधिकारः॥११॥

भ० अक्रेत्यादि। प्रिया असवः प्राणा येषां ते यातुधाना भिन्नदेहा विदीर्णशरीराभूत्वा निरुत्साहानिस्पृहाः सन्तः अक्राथिषुः स्मृताः स्म इति अव्हितवन्तः क्रथशब्दे ह्रयादेःसेमइति पक्षे ञिः कपे र्नादात् अत्रासिषुः त्रस्ताः पूर्ववत्पक्षे ञिः यथा सिंहस्य ध्वनेर्मृगा स्त्रसन्ति। इति सिचि वृद्ध्यधिकारः॥११॥

मायानामीश्वरास्तेऽपि शस्त्रहस्तारथैः कपिं। प्रत्या ववृतिरे हन्तुं हन्तव्यामारुतेः पुनः॥१२॥

ज०म० इतइट्प्रतिषेधमधिकृत्याह मायेत्यादि। अथानन्तर राक्षसाये दिशोगताः ते कपिं हन्तुं पुनः प्रत्यावर्तन्तिरे प्रति निवृत्ताः मायानामीश्वराः प्रभवः सेनेति वरच् नेड्वशिकृतीति नेट् आर्द्धधातुकेत्यादिना प्राप्तत्वात् रथैश्च गताः सन्तः शस्त्र हस्ताः शस्त्राणि हस्तेषु येषामिति हनिकुषीत्यादिना रमेरौणा

द्रिकः क्यप् रथाः अमिचमीत्यादिना अधेरौणादिकन् हविष्ट
स्वध्वेत्यादिना हवेस्तन् तयोस्तिस्तुचेत्यादिना इट्प्रतिषेधः हन्त
व्या मारुते रिति हनूमतोवधार्हः कृत्यानां कर्त्तरिवेति षष्ठी एका
च इत्यादिना इट्प्रतिषेधः हन्तेर्नमान्तेष्वनिट्त्वात् ॥ १२ ॥

इतइट्प्रतिषेधाधिकारः मायानामित्यादि। अथानन्तरं भ॰
ये द्विषः प्रोर्णविषुः ते कपिं हन्तुं रथैः पुनः प्रत्यावृत्तिरे प्रत्या
गताः प्रतिनिवृत्ता हनशौ गतौ वधे वसौरस्तेमनौदितइति औदि
द्वर्जमादनिम् कीदृशास्ते मायानामीश्वराः प्रभवः यावायभाम
कषइति वरः हवन्नतेरिति मेम् प्रस्तं हस्ते येषां ते तथा प्रस्तते
हन्यतेऽनेनेति प्रस्तं प्रसवधे चासुविति चः पूर्ववस्मेम् मारुतेर्हनू
मतोहन्तव्याः हन्तुं प्रक्याः स्वभावेति पचे कर्त्तरि षष्ठी ॥ १२ ॥

तांश्चेतव्यान् चितौ श्रित्वा वानरस्तोरणं युतान्।
जघानाधूय परिघं विजिघृचून् समागतान् ॥ १३ ॥

तांश्चेत्यादि। समुदिताएकस्यामेव वेलायां मया हन्तव्या ज॰म॰
इति वानरस्तोरणमाश्रितवान् सतोरणं श्रित्वा तान् राचसान्
विजिघृचून् विगृहीतुमिच्छून् युतान् समुदितान् समागतान् ढौकि
तान् चितौ पृथिव्यां चेतव्यान् पुञ्जीकर्त्तव्यान् जघान हतवान् परि
घमाधूय परिभ्राम्य तच चेतव्यानिति एकाचइतीट्प्रतिषेधः
चिताविति क्षिप्कौ चर्वञ्चायामिति क्षिप् तितुचेत्यादिना इट्
प्रतिषेधः श्रित्वा युतानिति श्रुकः कितीट्प्रतिषेधः विजिघृचूनिति

सनियहगुहोरुवेति तत्र रुदविदेति सनः किवं यहिज्येति संप्रसा रणं ठलकमषत्वानि ॥ १३ ॥ •

भ० तामित्यादि। तोरणं श्रित्वा परिघमवधूय परिभ्राम्य वानर स्तान् राघवान् जघान कीदृशान् चितौ चेतव्यान् पुञ्जीकर्त्त व्यान् युतान् एकीभूतान् विजिघृचून् वियहं कर्त्तुमिच्छून् समाग तान् मिलितान् चिञ्प्रत्ययः नेमेकाजादित्यादिना इमनिषेधः छ दुश्रिञ्रूर्णोरिति श्रियुभ्यां नेम् नेमुगुहयहदति यहेः सनि नेम् गमेरोदित्वान्नेम् ॥ १३ ॥

संजुघुचवश्चायूंषि ततः प्रतिरुरूषवः। रावणा न्तिकमाजग्मुर्हतशेषा निशाचराः ॥ १४ ॥

ज०म० संञ्जित्यादि। ततउत्तरकालं ये हतशेषानिशाचराः ते संजु घुचवश्चायूंषि जीवितानि गोहितुमिच्छवः गुहेः पूर्ववत्प्रतिषेधः रावणान्तिकमाजग्मुः आगताः प्रतिरुरूषवः वच्यमाणमर्थं कथ यितुमिच्छवः अत्रापि पूर्व्ववत्प्रतिषेधः तत्र चकारेणोगन्तानां सनि समुचितत्वात् ॥ १४ ॥

भ० समित्यादि। ततोऽनन्तरं हतशेषानिशाचरारावणस्य समीपमासेदुः समाजग्मुः कीदृशाः आयूंषि जीवितानि गोपायि तुमिच्छवः गुहश्रसंवृतौ सन् नेमुगुहयहदति नेम् प्रतिरुरूषवः वच्यमाणं कथयितुमिच्छवः रुशब्दे पूर्व्ववन्नेम् ॥ १४ ॥

एकेनं वहवः शूराः साविष्काराः प्रमत्तवत्। वैमु ख्यञ्चक्रमेत्युञ्चैरूचुर्दशमुखान्तिके ॥ १५ ॥

एकेनेत्यादि। वयं बहवः शूराः साविष्काराः साहंकाराश्चपि सन्तः एकेनापि कपिना हेतुभूतेन वैमुख्यं चक्रम पराङ्मुखत्वम नुष्ठितवन्तः प्रमत्तवत् मद्यपानमत्ता इव एवञ्च चित्तव्याक्षेपा दुत्तमपुरुषे लिटि क्रते क्रसृइत्यादिना इट्प्रतिषेधोऽनियमित इति एवं इन्द्रमुखाक्रिके ऊचेऽब्रुवुः॥ १५॥ अ०म०

एकेनेत्यादि। एकेन कपिना हेतुना बहवोऽपि समर्थाश्चपि प्र मत्ता इव साहङ्काराश्चपि वैमुख्यं विमुखतां चक्रम विमुखाभवा मः स्वेत्यर्थात् इति ते हतशेषानिशाचरारावणस्य समीपे ऊचुः नेमसुमिति नेम् परमते अस्मदि वाच्ये चित्तविक्षेपार्थे टी तदर्थ सूचनाय प्रमत्तवदित्युक्तं मद्यपानां हि चित्तविक्षेपः सम्भवत्येव स्वमते सर्व्वत्र टी दुर्निवारा॥ १५॥ भ०

मांसोपभोगसंशूनानुद्विग्नांस्तानवेत्य सः। उद्वृत्त नयनोमित्रान्मन्त्रिणः स्वान् व्यसर्ज्जयत्॥ १६॥

मांसेत्यादि। सदशमुखस्तानुद्विग्नान् भीतानवेत्य ज्ञात्वा स्वा नात्मीयान् मन्त्रिणोऽव्यसर्जयत् प्राहिणोत् कीदृशांस्तान् मांसोप भोगसंशूनान् मांसोपभोगेन स्थूलवर्ष्मणः उभयथापि श्वीदितो निष्ठायामितीट्प्रतिषेधः तत्र श्वयतेर्यजादित्वात्संप्रसारणं हल इति संप्रसारणस्य दीर्घः इयोरदोदित्वान्निष्ठानत्वं उद्वृत्तनय नोरोषात् निष्क्रान्ततारकः यस्यविभाषेतीट्प्रतिषेधः वृत्ते इदित्वात् मिताम् स्निग्धाम् मन्त्रिणः आदितश्चेतीट्प्रतिषेधः रदाभ्यामिति निष्ठानत्वं॥ १६॥ ज०म०

भ० मांसेत्यादि। तान् राक्षसान् उद्विग्नान् त्रस्तान् अवेत्य ज्ञा त्वा सरावणोमन्त्रिणोव्यसर्ज्जयत् कीदृशान् मांसोपभोगेन संभू तान् स्थूलान् मित्तान् स्निग्धान् सकोप्टमः उद्वृत्तनयनः उद्घूर्णित नेत्रः क्रोधवशात् ग्लायोर्स्वीर्गतिश्छत्योः नेमडोर्स्वीदिति नेम् यत्रा दित्वात् यहस्तपायोरिति जिः जिघोंऽन्यःसृत्वायोदिति ओदि त्वात् क्तस्य नः विजङ्गोग्रोभीकम्पे ईदित्वात् पूर्व्ववन्नेम् वृतुवृ वर्त्तने पूङ्क्लिग्रुदितदृत्यनेन वेमत्वात् पूर्व्ववन्नेम् दृमिदासु मिदा ञिङ्चदृति चकारात् खेदने आदितदृति नेम्॥१६॥

प्रमेदिताः सपुत्रास्ते मुखान्तावाढविक्रमाः। अम्वि ष्टनादानिरगुः फाण्टचित्रास्त्रपाणयः॥१७॥

अ०भ० प्रमदृत्यादि। ते मन्त्रिणः सपुत्राः पुत्रैः सह निरगुः निर्गताः दृणोगालुङि प्रमेदिताः स्निग्धीभवितुमारब्धाः आदिकर्म्मणि निष्ठा ततोविभाषाभावादिकर्म्मणोरिति प्रतिषेधः दृट्पत्ते निष्ठा शीङ्त्यादिना कित्त्वप्रतिषेधात् गुणः मुखान्ताः स्वामिनि कष्टा यमनसः वाढविक्रमाः भृशपराक्रमाः अम्विष्टनादाः विष्यष्टवाचः मन्त्रिणां वाग्मित्वात् फाण्टचित्रास्त्रपाणयः यदश्टतपिष्टं कषायं उदकसम्पर्कमात्रादभिव्यक्तरसं ईषदुष्णं तदल्पप्रयाससाध्यत्वात् अनायाससाध्यं फाण्टमित्युच्यते तेन चित्राणि रञ्जितानि अस्त्रा णि पाणौ येषामिति स्नान्तादयः क्षुब्धेत्यादिना निपातिताः॥१७॥

भ० प्रमेदृत्यादि। ते मन्त्रिणः सपुत्राः पुत्रैः सह निरगुर्निर्गतव न्तः दृणञ्ञां रूपं कीदृशाः प्रमेदिताः वहिर्गमनसमये भार्य्यादीन्

प्रति स्नेहं कर्त्तुमारब्धवन्तः राजप्रसादात् स्निग्धाभवितुमारब्धा विविधोपभोगेन प्रीताभवितुमारब्धावा भावादिकेवेति पचे इम् सुखान्ताः शोभनमनसः वाढविक्रमाः भृशपराक्रमाः प्रविष्ट नादाः निरुष्टवाचः मन्त्रिणां वाग्मित्वात् फाण्टचित्रास्त्रपाणयः फाण्टेन कषायभेदेन चित्राणि अस्त्राणि पाणौ येषां ते तथा क्षुब्धवाढेत्यादिना स्वनवाङ्गस्नेच्छकिष्णां स्वान्तवाढविष्टफाण्टा निपातिताः पुनातीति पुत्रः ग्रादिःस्वइत्यस्य योगविभागेन ह्रस्वत्वान्न गुणः इखत्र्तेरिति नेम्॥१७॥

तान् दृष्ट्वातिदृढान्धृष्टान् प्राप्तान् परिवृढाश्रया।
कष्टं विनर्द्दतः क्रूरान् शस्त्रघुष्टकरान् कपिः॥१८॥

तानित्यादि। तान् दृष्ट्वा कपिः आर्हिदृदिति वक्ष्यमाणेन सम्बन्धः किंभूतान् धृष्टान् धृष्णोतीति धृष्टः धृषीशसीवैयात्य इतीट् प्रतिषेधः अतिदृढान् वलवतः दृढस्थूलवलयोरिति निपातनं परिवृढाश्रया परिवृढस्य प्रभोराश्रया प्राप्तान् प्रभौ परिवृढ इति निपातनं कष्टं विनर्द्दतः घोरं ध्वनतः गम्भीररवञ्च कछ्रगहनयोः कषइतीट्प्रतिषेधः क्रूरान् हिंस्रान् शस्त्रघुष्टकरान् घुषिरविशब्दन इतीट्प्रतिषेधः॥१८॥ 

तानित्यादि। कपिर्हनूमान् तान् राचसान् दृष्ट्वा द्रुतं आर्हिदृदित्यपिमश्लोकेनान्वयः कीदृशान् अतिदृढान् वलवत्तरान् धृष्टान् प्रगल्भान् परिवृढस्य प्रभोराश्रया प्राप्तान् कष्टं कठं शो 

नदुःखदं विनर्हतः शब्दायमानान् क्रूरान् हिंस्रान् शस्त्रैर्घुष्टोद्घोषणां प्राप्तः सततधारणाद्धृष्टोवा करोयेषां तान् पूर्ब्बवत् दृढ वृषदृहकषघुषांतो निपातः ॥ १८ ॥

अव्यर्णोगिरिकूटाभानभ्यर्णानार्हिदत् द्रुतं। वृत्तशस्त्रान्महारम्भानदान्तांस्त्रिदशैरपि ॥ १९ ॥ युग्मकं ॥

०म० अव्यदृत्यादि। अव्यर्णोऽपीडितः अर्द्देःसंनिविभ्यद्दतीट्प्रतिषेधः गिरिकूटाभान् महागिरिसदृशप्रमाणान् अभ्यर्णानविदूरान् अभेश्चाविदूर्यदतीट्प्रतिषेधः द्रुतमार्हिदत् हिंसितवान् अर्द्देः स्वार्थिकणन्तस्य लुङि रूपं वृतशस्त्रोऽधीतशस्त्रविद्यः णेरध्ययने वृत्तमिति इडभावोणिलुक निपात्यते महारम्भान् अनल्पव्यापारान् त्रिदशैरप्यदान्तान् अशमितान् वादान्तेत्यादिना इडभावोणिलुक निपात्यते ॥ १९ ॥

भ० अव्यर्णइत्यादि। गिरिकूटाभान् पर्व्वतशृङ्गसदृशान् अभ्यर्णान् समीपगतान् वृत्तशस्त्रान् अधीतशस्त्रविद्यान् महारम्भान् हतव्यूहलात् त्रिदशैर्देवैरपि अदान्तान् अदमितान् कपिः कीदृशः अव्यर्णः अपीडितः अर्द्देः क्ते नेमसन्निव्यर्द्देरिति नेम् क्षुब्धवाढेत्यादिना सामीप्ये अभिपूर्व्वादर्द्देर्ण्यन्तादतोरध्ययने च निपातितः ण्यन्तदमेर्दान्तशान्तेत्यादिना निपातः ॥ १९ ॥

दमितारिः प्रशान्तौजा नादापूरितदिङ्मुखः। जघान हृषितो हृष्टांस्त्वरितस्तूर्णमागतान्॥२०॥

दमीत्यादि। ये तु प्रशान्तौजसः शमितबलाः सन्तो हृष्टाः तूर्णमागताः तान् कपिर्जघान व्यापादितवान् प्रतापाद्दाम्यन्तोऽर्योदमितायेन दमितारिः प्रशान्तं शत्रूणामोजोयेन सप्रशान्तौजाः नादापूरितदिङ्मुखः तस्य दृष्टत्वात् हृषितः क्रुद्धः त्वरितः ससम्भ्रमः अत्र दमितप्रशमितपूरिताः वान्ताः वादान्तेत्यादिना विकल्पितेटः हृष्टहृषितत्वरिताः हृष्यमत्वरेत्यादिना॥२०॥ ज॰म॰

दमीत्यादि। कपिस्तूर्णं शीघ्रं आगतान् राक्षसान् त्वरितः सन् जघान कीदृशः दमिताउपशमिता अरयः शत्रवोयेन स तथा नादैरापूरितं दिङ्मुखं येन हृषितः क्रुद्धः कीदृशान् प्रशान्तौजसान् उपशमितबलान् हृष्टान् क्रुद्धान् ण्यन्तशमेः क्तदम् लोपोऽणेरिति णिलोपः ण्यन्तदमेर्दान्तशान्तेत्यादिना निपातः हृष त्वरिभ्यां क्तस्य वाहृषामित्यादिना विभाषितइम् त्वरेरनिम्पचे श्रिवावमवेत्यादिना जट्॥२०॥ भ॰

तेषां निहन्यमानानां संघुष्टैः कर्णभेदिभिः। अभूदभ्यमितत्रासमाक्रान्ताशेषदिग्जगत्॥२१॥

तेषामित्यादि। तेषां रक्षसां निहन्यमानानां सङ्घुष्टैः शब्दैः कर्णभेदिभिः वाधिर्य्यकरैः अभ्यमितत्रासं अभिगतत्रासं जगदभूत ज॰म॰

आस्वान्ताः अशेषादिश्चैवास्मिन् जगति सङ्घुष्टाभ्यमितास्वान्तास्
ह्वान्तमनस्तरेति विकल्पितेटः ॥ २१ ॥

भ० तेषामित्यादि। हनूमता निहन्यमानानां तेषां राक्षसानां संघुष्टैः शब्दैः जगत् भुवनं अभ्यमितवासं प्राप्तभयं अभूत् कीदृशैः कर्णभेदिभिः श्रोत्रविदारिभिः कीदृशं अस्वान्तमाशब्दिता अशेषादिशोयच तत्तथा संपूर्व्वघुषश्रम् आङ्पूर्व्वस्वनास्व वाद्दषामि त्यादिना कावलोर्वैमलं ॥ २१ ॥

भयसंहृष्टरोमाणस्ततस्तेऽपचितद्विषः। क्षणेन क्षीण
विक्रान्ताः कपिनानेषत क्षयं ॥ २२ ॥

इतीट्प्रतिषेधाधिकारः ॥

ज०म० भयमित्यादि। ततस्ते राक्षसाः कपिना क्षणेन क्षयं विनाशमनेषत नीताः कर्म्मणि लुङ् भयसंहृष्टरोमाणः भयोद्गतरोमाणः हृषेर्लोमस्विति विभाषितेट् अपचितद्विषः अपचितानां पूजितानां ऋषीणां शत्रवः अपचितस्तेति निपातः क्षीणविक्रान्ताः क्षीणं विक्रान्तं पराक्रमोयेषां क्षियोदीर्घादिति निष्ठातकारस्य नः ॥ २२ ॥

भ० भयेत्यादि। ततोऽनन्तरं कपिना ते राक्षसाः क्षणेन क्षयं अनेषत प्रापिताः कर्म्मणि टी घुर्घुकृइति णुः मान्तोऽहनत इत्यरादेशः न्यादिन्यन्ताउगत्यर्था इति मुख्यकर्म्मोक्तं कीदृशाः भयेन संहृष्टानि उद्गतानि रोमाणि येषां वाहृषामहृषेति वेम् अपचितानां पूजितानां मुन्यादीनां द्विषः शत्रवः नेनेकाजिति नेम् क्षीणं विक्रान्तं

पराक्रमोयेषां घे: पूर्ववत्तेन् चेचोढेरति दीर्घले स्वसाधोरित्यादि
ना क्रस्य नः क्रमुगताविव्यस्य पक्तिगुदितइत्यनेन वेम्लात् नेम्
डीश्चीदिति नेम् ज्ञमुङ्ग्रस्णाविति घः। इतीट्प्रतिषेधाधिकारः
॥ २२ ॥

हत्वा रचांसि लवितुमक्रमीन्मारुतिः पुनः। अशोक
वनिकामेव निगृहीतारिशासनः॥ २३ ॥

इतःप्रभृतीटमधिकृत्याह हत्वेत्यादि। रचांसि हत्वा मारु जं॰म॰
तिरशोकवनिकामेव पुनर्लवितुं छेत्तुं आर्द्धधातुकस्येट् अक्रमीत्
गतवान् स्नुक्रमोरनात्मनेपदनिमित्तइतीट् निगृहीतारिशासनः ध्व
स्तारिव्यवस्थः ग्रहोलिटि दीर्घइतीटोदीर्घत्वं॥ २३ ॥

अथेडधिकारः। हत्वेत्यादि। रचांसि हत्वा निगृहीतरावणा भं॰
ज्ञामारुतिर्हनूमान् पुनरप्यशोकवनिकामेव लवितुं छेत्तुं अक्र
मीत् जगाम लूञगिच्छिदि वधोरस्येतीम् क्रमेष्टी स्नुक्रमोऽमइति
इम् मात्मवर्ज्जनात् ह्ययादेःशेमइति न श्रिः ग्रहेरिमोर्घत्वं॥ २३॥

आवरीतुमिवाकाशं वरितुं वीनिवोत्थितं। वनं प्रभ
ञ्जनसुतोनादयिष्ट विनाशयन्॥ २४॥

आवेत्यादि। प्रभञ्जनसुतोहनूमान् वनमशोकवनिकाख्यं जं॰म॰
विनाशयन् नादयिष्टदयां न क्रतवान् लुङि रूपं आकाशमा
वरीतुमिव अवष्टब्धमिवोत्थितं वनं वीन् पक्षिणोवरितुं प्रार्थयितु

मिवोत्थितं आगच्छत नान्यच्च थात इत्थैव फलवृद्धिं प्रार्थयेति आवरीतुं वरितुमिति वृतोवेति विकल्पेनेटोदीर्घत्वं ॥ २४ ॥

भ० आवेत्यादि। प्रभञ्जनसुतोहनूमान् वनं विनाशयन् न अद यिष्ट दयां न कृतवान् कीदृशं आकाशं आवरीतुं आच्छादयितु मिव वीन् पक्षिणो वरितुं प्रार्थयितुमिव उत्थितं अत्युच्चलात् उच्चलोत्प्रेक्षा नेमेकाजित्यादौ इवर्ज्जनादिम् वृतोवेमोर्घइति वादीर्घः ॥ २४ ॥

वरिषीष्ट शिवं क्षिप्यन् मैथिल्याः कल्पशाखिनः।
प्रावारिषुरिव क्षौणीं क्षिप्तावृक्षाः समन्ततः ॥ २५ ॥

ज०म० वरीत्यादि। ये कल्पशाखिनः कल्पवृक्षाः स्वर्गादादायारो पितास्तानुन्मूल्य यथास्थानं क्षिप्यन् मैथिल्याः शिवं कल्याणं वरि षीष्ट प्रार्थितवान् मैथिल्याभद्रमस्त्वित्याशंसावचने लिङ् नलिङी ति दीर्घप्रतिषेधः अन्ये च वृक्षास्तेन समन्ततः क्षिप्ताः सन्तः क्षौणीं पृथ्वीं प्रावारिषुरिवाच्छादितवन्त इव तेषामनाच्छादितत्वादिवार्थः सिचि वृद्धिः परस्मैपदेष्विति वृद्धिः ॥ २५ ॥

भ० वरीत्यादि। हनूमान् मैथिल्याः शिवं मङ्गलं वरिषीष्ट प्रार्थि तवान् आशिषि टी स्यादृद्धुरितिति पक्षे इम् अठीडोपसेरिति ने मोदीर्घः किङ्कुर्व्वन् ये कल्पवृक्षाः स्वर्गादानीयाशोकवनिकायामा रोपितास्तानून्मूल्य यथास्थानं क्षिप्यन्ननुप्रेरयन् शिवशब्दस्य हितार्थत्वात् समार्थैनेत्यादिना मैथिल्याइत्यत्र षष्ठी अन्ये वृक्षाः

समन्ततस्तेन क्षिप्ताः क्षोणिं भूमिं प्रावारिषुरिव आच्छादितव न्तइव आत्मनि रूपं पूर्व्ववन्नेमोर्घः ॥ २५ ॥

संवुवूर्षुः स्वमाकूतमाशां विवरिषुं द्रुतं। अवरिष्टा क्षमक्षम्यं कपिं हन्तुं दशाननः ॥ २६ ॥

सम्वुइत्यादि। रामदूतेनं कपिना कर्म्मेदृशं कृतमिति स्वमा कूतमभिप्रायं सम्वुवूर्षुः सम्वरीतुमिच्छुः दशाननोऽङ्गुतमाशां विव रिषुः प्रकटितुमिच्छुः अचं स्वसुतमवरिष्ट प्रार्थितवान् कर्म्मभिप्रा ये तङ् किमर्थं कपिं हन्तुं हनिष्यामीति अक्षम्यं क्षन्तुमशक्यं पोर दुपधादिति यत् सम्वुवूर्षुः विवरिषुरिति उगन्तत्वात् सनि ग्रह गुहोश्चेति, चकारेणेट्प्रतिषेधे प्राप्ते इट् सनिवेति विभाषेट् तत्रानिट्पक्षे इकोझलीति कित्त्वे उदोष्ठ्यपूर्व्वस्येत्युत्वपक्षे गुण एव ॥ २६ ॥ ज०म०

समित्यादि। अथ दशाननोऽक्षतं कपिं हन्तुं अक्षनामानं कुमारं अवरिष्ट प्रार्थितवान् पक्षे इमोर्घाभावः कीदृशं अक्षम्यं न क्षमार्हं कीदृशः कपिमात्रेण रामदूतेनैवं कृतमिति स्वमाकूतं स्वकीयमा शयं संवुवूर्षुः संवरीतुमिच्छुः आशां विवरिषुः हे अक्षागच्छा गच्छ कपिर्हन्यतामित्याशां विवरीतुं प्रकटयितुमिच्छुः वायृदृ रिति इञः सनोवेम् अनिट्पक्षे वोऽज्झलिङ्गमामिति दीर्घत्वे पुर्मा निमिसमीत्युत्वात् क्षादिरणावित्युर् ॥ २६ ॥ भ०

अचे संवरिषीष्ठास्त्वं गच्छ शत्रोः पराक्रमं। ध्वषी
ष्ठायुधि मायाभिः त्वरिता शत्रुसंमुखं॥ २७॥

ज०म० अचेइत्यादि। किमित्याह त्वं गच्छ शत्रोः पराक्रमं सम्वरिषी
ष्ठाः संछादय आशिषि लिङ्सिचोरात्मनेपदेष्विति वृञोविभा
षेट् उश्चेतीट् पक्षे न कित्वं ध्वृषीष्ठाः युधि मायाभिः कर्ट
भूताभिः त्वं कुटिलीक्षषीष्ठाः ध्वृ हर्छने ऊर्णाकौटिल्ये तस्य चोदा
त्तलात् आशिषि कर्मणि लिङ् ऋतश्चसंयोगादेरिति विभाषेट्
अनिट्पक्षे उश्चेति कित्वं त्वरिता उपतापयिता शत्रुसंमुखं
शत्रोरग्रतः अतोऽद्रुतं त्वरिषीष्ठाइति वक्ष्यमाणेन योज्यं त्वृभ्रद्धो
पतापयोरित्यस्य त्वरति स्वतिसूयेत्यादिना विभाषेट् लिङ्सि
चोरिति नानुवर्त्तते॥ २७॥

भ० अचेइत्यादि। विवरणमाह इत्याननअचे किमित्याह हे अच
त्वं गच्छ गत्वा शत्रोः कपेः पराक्रमं संवरिषीष्ठाः आच्छादय
आशिषि टौ पूर्ववत् पक्षे इम् त्वं युधि संग्रामे मायाभिः कर्मभिः
ध्वृषीष्ठाः कुटिलीक्षषीष्ठाः ध्वृकौटिल्ये कर्मणि टौ स्वाद्यृद्धरिति
पक्षे इमोऽभावे इगुकुर्मेऋीत्वनिमइति कित्वाच गुणः त्वं कीदृशः
शत्रुसंमुखं यथा स्यात्तथा त्वरिता शत्रोरग्रतउपतापयितेत्यर्थः
किम्बा शत्रुसंमुखं शत्रूणां प्रधानं त्वरिता उपतापनशीलः मुख
माद्ये प्रधानेचेत्यमरः त्वृञभ्रद्धोपतापयोः वेमूदित्त्वरेति पक्षे
इम्॥ २७॥

द्रुतं संस्वरिषीष्ठास्त्वं निर्दयः प्रधनोत्तमे। समाया
नामगात् सोता कपेर्विधवितुं द्युतिं॥ २८॥

हुतमित्यादि। संखरिषीष्ठाः उपतापय निर्भयस्त्वम् आशिषि लिङ् समोगमृच्छीत्यात्मनेपदं अच स्वरत्येतीट् प्रधनोत्तमे संग्राम वरे एवमुक्तः सन् समायानां सीता जनकः कपेर्धृतिन्तेजोविधवितुमपनेतुमगात् गतः सीता धवितुमिति स्वरतीत्यादिसूत्रेण विभाषेट् ॥ २८ ॥ ज०म०

हुतमित्यादि। त्वं प्रधनोत्तमे महायुद्धे निर्भयः सन् हुतं संखरिषीष्ठाः उपतापय शत्रुमित्यर्थात् समोगमृच्छेति मं एवमुक्तः सोऽयः कपेर्धृतिं तेजोविधवितुं अपनेतुं अगात् गतः कीदृशः मायानां सीता जनकः सुधुञ्जां पूर्व्ववत् पचे इम् ॥ २८ ॥ भ०

विगाढारं वनस्यासौ शत्रूणां गाहिता कपिः। अर्द्धं रधितुमारेभे रद्धा लङ्कानिवासिनां ॥ २९ ॥

विगेत्यादि। असौ कपिः वनस्य विगाढा अवलोडयिता अरं शीघ्रं शत्रूणां गाहिता विनाशयिता कर्मणि षष्ठी ऊदित्वाद्विभाषेट् स्वरतीत्यादिना अर्द्धं रधितुं हिंसितुमारेभे प्रवृत्तः लङ्कानिवासिनां रक्षसां रद्धा हिंसिता रधादिभ्यश्चेति विभाषेट् ॥ २९ ॥ ज०म०

विगेत्यादि। असौ हनूमान् अर्द्धं रधितुं हिंसितुं आरेभे प्रवृत्तः कीदृशः अरं शीघ्रं वनस्य विगाढा विलोडयिता शत्रूणां गाहिता नाशयिता लङ्कानिवासिनां रद्धा हन्ता गाहू विलोडे इत्यस्य ऊदित्वात् रधहती इत्यस्य च रधादित्वात् पूर्व्ववद्विभाषया इम् ॥ २९ ॥ भ०

निष्कोषितव्यान्निष्कोष्टुं प्राणान् दशमुखात्मजात्।
आदाय परिघं तस्थौ वनान्निष्कुषितद्रुमः ॥ ३० ॥

ज॰म॰ निष्क इत्यादि। दशमुखात्मजादक्षात् प्राणान्निष्कोषितव्यान् अपनेतव्यान् अपनयार्हान् निष्कोष्टुं अपनेष्यामीति परिघमादायतस्थौ निरःकुषइति विभाषेट् निष्कुषितद्रुमः वनादपनीतवृक्षः इविष्ठायामितीट् ॥ ३० ॥

भ॰ निष्क इत्यादि। दशमुखात्मजात् अक्षात् निष्कोषितव्यान् आकर्षणयोग्यान् प्राणान् निष्कोष्टुं अपहर्त्तुं परिघं आदाय गृहीत्वा कपिः तस्थौ कीदृशः वनात् निष्कुषिता आकृष्टाद्रुमा वृक्षा येन पूर्व्ववत् निःपूर्व्वकुषोवेम् नेमृडीघोदिदेमृइति केनेम् निषेधस्तत्र निष्कुषवर्ज्जमात् ॥ ३० ॥

एष्टारमेषिता संख्ये सोढारं सहिता भृशं। रेष्टारं रेषितुं व्याख्यद्रोष्टात्तः शस्त्रसंहतीः ॥ ३१ ॥

ज॰म॰ एष्टेत्यादि। कपिं युद्धएष्टारं एषिता एषणशीलोऽक्षः ताच्छील्ये तृन् नलोकेति षष्ठीप्रतिषेधः सोढारं प्रहरणस्य सहितारं सहिता भृशं सहनशीलः रेष्टारं हिंसकं रेषितुं हिंसितुं रोष्टा रोषणशीलः शस्त्रसंहतीर्व्यास्यत् क्षिप्तवान् सकि रूपं सर्व्वत्रतीषसहेत्यादिना वेट् ॥ ३१ ॥

एष्टेत्यादि। अयः संख्ये युद्धे रेष्टारं हिंसकं हनूमन्तं रेषितुं हिंसितुं अस्त्रसमूहान् व्यास्यत् चिप्तवान् अक्षुदर्शये यो कीदृशं एष्टारं इच्छाशीलं युद्धस्येत्यर्थात् सोढारं सहनशीलं भृशमत्यर्थं सोऽपि एषिता एषणशीलः सहिता सहनशीलः रेष्टा रेषण शीलः इषुसह्वान्के सहअङ्गशक्तौ रिषवधे इषञ्जिष चकारात् वधे वेमसहेत्यादिना वेम्॥ २१॥ भ०

अस्त्रैर्दिदेविषुं संख्ये दुद्यूषुः परिघं कपिः। अर्द्दिधिषुर्यशःकीर्त्तिमीर्त्सुं वृक्षैरताडयत्॥ २२॥

अस्त्रैरित्यादि। कपिः अर्द्दिधिषुः यशोवर्द्धितुमिच्छुः परिघं दुद्यूषुः परिघेण क्रीडितुमिच्छुः अचं वृक्षैरताडयत् हतवान् कीदृशं अस्त्रैर्दिदेविषुं क्रीडितुमिच्छं कीर्त्तिमीर्त्सुं वर्द्धितुमिच्छुं दिवेरिवन्तस्य ऋधुवृद्धावित्यस्य च सनीवन्तर्द्धेत्यादिना विभाषितेट् तत्र दिवेरिडभावपक्षे क्रोःशूट् ऋधेराप्ज्ञप्धामीदितील्ं अभ्यासलोपश्च॥ २२॥ ज०म०

अस्त्रैरित्यादि। कपिः संख्ये युद्धे वृक्षैरचमताडयत् अचं कीदृशं अस्त्रैर्दिदेविषुं क्रीडितुमिच्छन्तं ईर्त्सुं वर्द्धयितुमिच्छुं कपिः कीदृशः परिघेण दुद्यूषुः क्रीडितुमिच्छुः दिवोधेवेति करणे दिती या यशोऽर्द्दिधिषुः वर्द्धयितुमिच्छुः दिवुक्रीडादौ भस्जश्रिस्वृयूर्णुभरेत्यादिना इवन्तलात् सनीवेम् इमोऽभावपक्षे क्रोःशूटा वित्यादिना जट् ऋधुवृद्धौ पूर्व्वेण सनीवेम् नाजन्तादेरादिर्द्दिः भ०

रित्यकारस्य स्यादीनवड्डोऽवेदति रेफस्य च न हितं अनिमृपवि अपर्धापामीर्य्यदति ईर खिलोपस्य अन्तर्भूतण्याचेऽच बोध्यः ॥ ३२ ॥

भूयस्तं धिप्सुमाहूय राजपुत्रं दिदम्भिषुः। अश्वस्ततः समूर्च्छावान् संशिश्रीषुरभूद्ध्वजं ॥ ३३ ॥

ज०म० भूयइत्यादि। तं राजपुत्रं अश्वं धिप्सुं दम्भितुं वञ्चयितुमिच्छुं भूयः पुनरपि दिदम्भिषुः वञ्चयितुमिच्छुः आहूयागच्छेत्यह्वन् हतवान् ततः सोऽश्वः मूर्च्छावान् मूर्च्छायुक्तः ध्वजमात्मीयं संशिश्रीषुः संश्रयितुमिच्छुः अभूत् भूतः अत्र दम्भेः श्रयतेश्च सनीवन्तर्द्धेतीट् अत्र श्रयतेरनिट्पक्षे अज्झनगमांसनीति दीर्घः द्वितीयस्य च दम्भइच अभ्यासलोपः दम्भेर्हल्ग्रहणस्य जातिपरत्वात्सिद्धमिति कित्त्वे अनुनासिकलोपः एकाचोवशइति भष् खरिचेति चर्त्वं ॥ ३३ ॥

भ० भूयइत्यादि। कपिसमक्षं आहूय आगच्छ युद्धे इत्युक्त्वा भूयः पुनरपि अहन् हन्तेर्घ्नी कीदृशं धीप्सुं दम्भं कर्त्तुमिच्छुं स्वच दिदम्भिषुः दम्भं कर्त्तुमिच्छुः ततः प्रहारानन्तर सोऽश्वोध्वजं संशिश्रीषुः आश्रयितुमिच्छुः सन् मूर्च्छावान् मूर्च्छितोऽभूत् अस्य श्रीत्यादिना दम्भेः श्रयतेश्च सनीवेम् दम्भेरनिम्पक्षे दम्भोवावि ति अपईत्वं खिलोपस्य अनकारनिर्देशात् नस्य लोपः झभाम्ताश्चेति दस्य धः श्रयतेर्घोऽज्झनिक्रमामिति दीर्घः ॥ ३३ ॥

आश्वस्याथः क्षणाल्लोकान् विभक्षुरिव तेजसा।
रुषा विभ्रज्जिषुप्रख्यं कपिं वाणैरवाकिरत्॥ ३४॥

आश्वेत्यादि। क्षणात् क्षणमात्रेणाश्वस्य संज्ञां लब्धा लोकान् जनान् तेजसा क्रोधात्वेन विभ्रक्षुरिव अथ सकपिं वाणैरवाकिरत् संछादितवान् कीदृशं विभ्रज्जिषुप्रख्यं अग्नितुल्यं विभ्रज्जिषुः विभ्रक्षुरिति सनीवन्तर्द्धेत्यादिना विभाषेट् तचानिट्पक्षे स्कोरिति सलोपः भ्रस्जेति षः इट्पक्षे सकारस्य जश्त्वं सुलभं॥ ३४॥ ज०म०

आश्वस्येत्यादि। ततोऽक्षः क्षणात् आश्वस्य चेतनां प्राप्य वाणैः कपिमवाकिरत् आछादितवान् कीदृशः तेजसा लोकान् विभ्रक्षुरिव क्रोधलक्षणमत्र तेजः रुषा क्रोधेन विभ्रज्जिषुप्रख्यं अग्नितुल्यं भ्रस्ज्पाकीति भ्रस्जेः सनि वेम्॥ ३४॥ भ०

संयुयूषुं दिशोवाणैरक्षं यियविषुर्द्रुमैः। कपिर्मायामिवाकार्षीद्दर्शयन् विक्रमं रणे॥ ३५॥

समित्यादि। वाणैर्दिशः संयुयूषुं मिश्रयितुमिच्छुं अक्षं कपिः द्रुमैर्यियविषुः योतुमिच्छुर्मायामिवेन्द्रजालमिवाकार्षीत् कृतवान् रणे विक्रमं दर्शयन् योतेः सन् सनीवन्तर्धेति विभाषेट् ओःपुयण्ज्यपरइतीत्वं अज्झनगमांसनीति दीर्घः॥ ३५॥ ज०म०

समित्यादि। कपीरणे विक्रमं दर्शयन् मायामिव अकार्षीत् इन्द्रजालमिव दर्शितवानित्यर्थः कीदृशः द्रुमैरक्षं यियविषुः मिश्र

यितुमिच्छुः अयं कीदृशं वायोर्दश दिशः संयुयूषुं मिश्रयितुमिच्छुं भ्रस्जश्रीति वेम् ॥ ३५ ॥

वानरं प्रोर्णुनविषुः शस्त्रैरक्षोविदिद्युते। तं प्रोर्णुनूषुरुपलैः सवृक्षैराबभौ कपिः ॥ ३६ ॥

ज॰म॰ वानेत्यादि। वानरं प्रोर्णनविषुः छादयितुमिच्छुरक्षः विदिद्युते विद्योतते स्म द्युतिस्वाप्योरिति संप्रसारणं कपिरपि तमक्षं उपलैर्वृक्षसहितैः प्रोर्णुनूषुः सम्वरीतुमिच्छुराबभौ भाति स्म ऊर्णोतेः पूर्व्ववद्विभाषेट् इट्पक्षे गुणः अन्यत्र अज्झनेति दीर्घः उभयत्र नन्द्राद्इति रेफेण द्विरुच्यते ॥ ३६ ॥

भ॰ वानरमित्यादि। अक्षः शस्त्रैर्वानरं प्रोर्णुनविषुः आच्छादयितुमिच्छुः सन् विदिद्युते दीप्तः द्युत्स्वाप्योःखेर्ज्जिः कपिरपि वृक्षसहितैरुपलैः पाषाणैस्तमक्षं प्रोर्णुनूषुः आछादयितुमिच्छुः सन् बभौ दीप्यते स्म ऊर्णुञ्आच्छादने भ्रस्जश्रीत्यादिना वेम् ॥ ३६ ॥

स्वां जिज्ञापयिषू शक्तिं बुभूर्षू नु जगन्ति किं। शस्त्रैरित्यक्षघातौ तौ पश्यतां बुद्धिमाहवे ॥ ३७ ॥

ज॰म॰ स्वाश्रीत्यादि। तौ कपिराक्षसौ किं स्वां शक्तिं जिज्ञापयिषू बोधयितुमिच्छू इव बुभूर्षू चिजगन्ति किं नु चैलोक्यं शस्त्रेण भर्त्तुं पूरयितुमिच्छू इत्येवं बद्धिमाहवे पश्यतां प्रेक्षकाणां अक्षघातौ कृतवन्तौ

जिज्ञापयिषू बुभूर्षू इति विभाषेट् तत्र भृञ्भरणइति भौवादिकस्य ग्रहणं सनीवन्तर्द्धेति सूत्रे भरेति शपा निर्देशात्॥ ३७॥

त्वामित्यादि। तौ कपिराक्षसौ पश्यतां जनानां आहवे युद्धे इति बुद्धिमकुर्वातां चक्रतुः कीदृशीं बुद्धिमित्याह किन्नु किमु एतौ स्वां शक्तिं ज्ञापयितुमिच्छू जगन्ति त्रिभुवनानि शस्त्रैर्बुभूर्षू पूरयितुमिच्छू ज्ञपिभृभ्यां भ्रस्जग्रीत्यादिना सनोवेम् भृभौवादिकः सूत्रे भरेति निर्देशात्॥ ३७॥

मायाभिः सुचिरं क्लिष्ट्वा राक्षसोऽक्लिशितक्रियं। सं प्राप्य वानरं भूमौ पपात परिघाहतः॥ ३८॥

मायेत्यादि। राक्षसोमायाभिः सुचिरं क्लिष्ट्वा क्लेशं कृत्वा वानरं अक्लिशितक्रियमनभिभूतव्यापारं सम्प्राप्य परिघाहतो भूमौ पपात क्लिशः क्त्वानिष्ठयोरिति विभाषेट्॥ ३८॥

मायाभिरित्यादि। राक्षसोऽसौमायाभिः सुचिरं क्लिष्ट्वा क्लेशं प्राप्य अक्लिशितक्रियं अनभिभूतव्यापारं वानरं सम्प्राप्य परिघेणाहतः सन् भूमौ पपात क्लिशः पूङ्क्लिशिभ्योदितइति क्त्वायेवेम् पूङ्क्लिशवमजपेति क्तक्तवलोर्वेम्॥ ३७॥

पवितोऽनुगुणैर्व्वातैः शीतैः पूत्वा पयोनिधौ। वभञ्जाध्युषितं भूयः क्षुधित्वा पत्रिभिर्व्वनं॥ ३९॥

पवीत्यादि। कपिरपि पयोनिधौ पूत्वा स्नात्वा अनुगुणैरनुकूलैः शीतैर्वातैः पवितः पवित्रीकृतः पूङ्क्लेति विभाषेट् भूयः

पुनर्वनं बभञ्ज कीदृशं पक्षिभिः पक्षिभिः क्षुधित्वा क्षुधितैर्भूत्वा अध्युषितं कृततिवासं वसतिक्षुधोरितीट्॥ ३९॥

भ० पवितइत्यादि। कपिः क्षुधित्वा क्षुधितोभूत्वा पयोनिधौ पूत्वा स्नात्वा फलादिकं भुक्त्वा चेत्यर्थात् शीतलैरनुगुणैर्व्वातैः पवितस्य कृश्रमः सन् भूयः पुनरपि तद्वनं बभञ्ज भग्नवान् कीदृशं पक्षिभिः पक्षिभिरध्युषितं अधिष्ठितं क्षणं भङ्गाभावात् पूङः पूञिश्चवमेतिक्त्वानिष्ठयोरिति पूङ्धृषेत्यादिना गुः पूङ्श्चेतिइति क्त्वाचेतेम् वसेः क्षुधेस्च क्षुधवसपूजार्थाश्च इतीम्॥ ३९॥

उच्चैरञ्चितलाङ्गूलः शिरोऽञ्चित्वेव संवहन्। दधद्विलुभितं वातैः केशरं वह्निपिङ्गलं॥ ४०॥

ज०म० उच्चैरित्यादि। उच्चैरूर्द्ध्वं अञ्चितं पूजितं लाङ्गूलं पुच्छं यस्य शोभनविन्यासेन स्थितत्वात् शिरोऽञ्चित्वेव सम्वहन् अनम्रत्वात् पूजयित्वेव शिरोविभ्राणः अञ्चेःपूजायामिति विभाषेट् वह्निपिङ्गलञ्च केशरं सटां दधत् बिभ्रत् वातैर्विलुभितं आकुलितं लुभोविमोहनइतीट् विमोहनमाकुलीकरणं॥ ४०॥

भ० उच्चैरित्यादि। कपिः कीदृशः उच्चैरञ्चितलाङ्गूलः ऊर्द्ध्वं अञ्चितं पूजितं लाङ्गूलं पुच्छं यस्य सतथा शिरोऽञ्चित्वेव अनम्रत्वात् पूजयित्वेव संवहन् बिभ्राणः वातैर्विलुभितं चञ्चलीकृतं वह्निवत्पिङ्गलं केशरं दधत् धारयन् ईदृशोवनं बभञ्जेति पूर्व्वेणान्वयः क्षुधवसपूजार्थास्त्वागार्थायंलुभइति इम् नेदितपूजार्थाञ्चेरिति नलोपाभावः॥ ४०॥

जरीव जवेनान्ये निपेतुस्तस्य शाखिनः। अस्विला विवशानन्यान् बलेनापातयत्तरून् ॥ ४१ ॥

जरीत्यादि। तस्य कपेर्जवेन वेगेन अन्ये शाखिनः जरीव जीर्णा इव भूत्वा निपेतुः अन्यांस्तरून् बलेन अस्विला छित्वा विवशान् स्वस्तपक्षवानपातयत् पातितवान् जृम्भ्नोःक्वीतीट् ॥ ४१ ॥ <sub>ज॰म॰</sub>

अरिलेत्यादि। अन्ये शाखिनः तस्य कपेर्जवेन वेगेन जरीव जीर्णा इव भूत्वा निपेतुः निपतितवन्तः अन्यान् विवशान् अनाय त्तान् तरून् बलेन अस्विला छित्वा कपिरपातयत् पातयामास. जृम्भ्नोनजिरिति इम् जिनिषेधश्च ॥ ४१ ॥ <sub>भ॰</sub>

इमित्वाप्यरिसंघातानश्रान्त्वा कपिकेशरी। वनं चचार कार्त्स्न्यमत्यर्थमिव निरङ्कुशः ॥ ४२ ॥

इमीत्यादि। कपिकेशरी हनूमान् अरिसङ्घातान् इमित्वा उपशमं नीत्वा अश्रान्त्वा अपरिश्रान्तो भूत्वा वनं चचार उदितो वेति विकल्पेनेट् निरङ्कुशः निरवग्रहः कार्त्स्न्येन कृत्स्नं कार्त्स्न्यं [illegible] कर्त्तुकाम इव शिष्यीत्यादिना विभाषेट् ॥ ४२ ॥ <sub>ज॰म॰</sub>

इमित्वेत्यादि। कपिकेशरी हनूमान् मनुष्यभूपान् इमित्वा [illegible] अश्रान्त्वा अश्रान्तो भूत्वा वनं कार्त्स्न्येन कृत्स्नं [illegible] [illegible] निरङ्कुशो निरवग्रहः सन् चचार <sub>भ॰</sub>

जं॰म॰ आह्वयेत्यादि। अथ रावणः इन्द्रजितमाहूय अन्तिकमवोचत् किमवोचदित्याह वने मत्त इव यथा गजेन्द्रो मत्तः कुञ्जोवने पर्य्यटन् द्विषामन्तं गतवान् तथा त्वं प्रधनेषु संग्रामेष्वटन् द्विषामन्तं ययाथेति वक्ष्यमाणश्लोकेनान्वयः ॥ ४६ ॥

भ॰ आह्वयेत्यादि। अथानन्तरं अन्तिके समीपे इन्द्रजितमाहूय रावणोऽवोचत् उक्तवान् किमवोचदित्याह त्वं क्रुद्धः सन् प्रधनेषु युद्धेषु अटन् परिभ्रमन् वने मत्तो गजेन्द्र इव द्विषामन्तं ययाथेत्यग्रिमश्लोकेनान्वयः मदोमिर्य्यञ्जिहर्षे मेम् डोश्वीदिति इदित्वादेम् ह्मल्पयोदित्यादौ मदवर्ज्जनात् तस्य मः क्रुधुथोकोपे ञोदित्वान्नेम् ॥ ४६ ॥

ययाथ त्वं द्विषामन्तं भूयो यातासि चासकृत्। अशक्थ जेतुं त्वं देवान् मायाः सस्मर्थ संप्रति ॥ ४७ ॥

जं॰म॰ ययेत्यादि। न केवलं ययाथ भूयः पुनरपि यातासि यास्यसि यातेः क्रादिनियमात्प्राप्तस्येटः अचस्तास्वत्थल्यनिटो नित्यमिति प्रतिषेधः तस्य हि तासौ नित्यमनिट्त्वं अजन्ता धातवोऽनुदात्ता इति वचनात् देवान् जेतुं त्वमशकत् वहुधा अशक्थ शकोऽपि उपदेशेऽत्वत इति थलीट्प्रतिषेधः शकेस्तासौ नित्यानिट्त्वं शकि लृकान्त इति वचनात् मायाश्च कूटयुद्धानि सस्मर्थ युद्धे समर्थ ज्ञातवानसि ऋतोभारद्वाजस्येतीट्प्रतिषेधः ॥ ४७ ॥

त्वमित्यादि। असकृत् वारंवारं द्विषामस्त्रं ययाथ प्राप्तवा भ०
नसि सृजदृशोरिति वेम् त्वं भूयः पुनरपि याक्षसि च याचसि च
गेऽवेकाजिति नेम् त्वं देवान् जेतुं अशक्य अक्रोध्भूतोऽसि सृजदृश
जिति वेम् संयति युद्धे मायावक्रीः समर्थं कृतवानसि नेम्त्वमप
इति नेम्॥ ४७॥

त्वं ससर्जिथ शस्त्राणि दद्रष्ठारींश्च दुःसहान्। शस्त्रै
रादिथ शस्त्राणि त्वमेव महतामपि॥ ४८॥

त्वं सेत्यादि। शस्त्राणि त्वं ससर्जिथ त्यक्तवानसि शरींश्च दुःस ज०म०
हान् युध्यतः दद्रष्ठ दृष्टवानसि न पलायितोऽसि विभाषासृजि
दृशोरिति थलि विभाषेट् अनिट्पचे सृजिदृशोर्झल्यमकिति घल
द्धुले महतामपि मध्ये त्वमेव शस्त्राणि परकीयानि शस्त्रैः स्वैरा
दिथ जग्धवानसि इडत्यर्तिव्ययतीनामित्यदेरिट्॥ ४८॥

त्वमित्यादि। त्वं शस्त्राणि च ससर्ज्जिथ त्यक्तवानसि सृजदृ भ०
शेति वेम् दुःसहानरीन् दद्रष्ठ दृष्टवानसि पूर्ववदेम्त्वात् पचेऽ
निम् सृजदृशिति मकृ वर्द्धाकिदिति घतोरः स्वकीयैः शस्त्रैः त्वमे
वाद्वितीयः महतामिन्द्रादीनामपि शस्त्राणि आदिथ भक्षित
वानसि सृजदृशेत्यादौ अदवर्ज्जनात्नेम्नुमित्यादिना नियमात
नित्यमिम्॥ ४८॥

त्वं परिक्लिश्यन् दुर्बुद्धिं कपिं शत्रुममाज्ञया। मानां
क्लीणितमासंनियायाः प्रस्तावीर्मा न विक्रमं॥ ४९॥

ज०म० समेमित्यादि। स त्वमेवंविधः कपिं दुर्बुद्धिं चपलमीदृशमिव चिति मदाज्ञया मैव चन्द्रमीक्षरतीट् वलीकाजिति इत्यत्र गी हाकृतं फलाईमस्य छन्दोविषयत्वात् राक्षसीं मायां मा मा प्राक्षीः मा न व्यक्तीकुरु अपितु व्यक्तीकुर्व्वित्यर्थः अञ्जेःसिचीतीट् विक्रमं न मा प्रस्तावीः मा न प्राद्दुरभूस्व स्तुसुधुञ्भ्य इतीट्॥ ४६॥

भ० मत्वमित्यादि। सएवंविधः अविद्रुत्सं दुष्टमतिं कपिं हनिष्यन् विनाशयिष्यन् ममाज्ञया मा गच्छ स्मसर्त्तेनरति इम् राक्षससम्बन्धिनीर्मायामा न मञ्जीः व्यक्तीकरिष्यसि अपि त्वमस्य मेव अञ्जूधजिव्यक्तिगतिकान्तौ जदित्वादेमत्वे अञ्जःसेरिमिति नित्यमिम् विक्रमं मा न प्रस्तावीः न न प्रस्तुतं करिष्यसि अपि त्वमस्य मेव स्तुसुधोः सेरितीम् अजवदेति ञिः माथोगे इमोऽभावः माटीवेति सदा टी च॥ ४६॥

मा न सावीर्म्महास्त्राणि मा न धावीररिं रणे। वानरं मा न संयंसीर्व्रज दृर्षमशङ्कितः॥ ५०॥

ज०म० मानेत्यादि। रणे महास्त्राणि मा न सावीः मा न अन्तहि मा न मुञ्चेत्यर्थः षुप्रसवैश्वर्ययोरित्यस्य रूपं करीतं मा न धावीः मा न कम्पय अपि तु भीषयस्वेत्यर्थः पूर्व्ववदिट् वानरं मा न संयंसीः मा न बधीः यमरमेत्यादिना सगिटौ समुदाङ्भ्योयमइति तङ् न भवति तथाकर्म्मकादिति वर्त्तते यतएव अस्मादशङ्कितत्वर्षं व्रज॥ ५०॥

मारीत्यादि। मा त्वाक्षि मा न वादीन् न वत्स्याम्यपि तु स्वात्मं करिष्याम्येव एवं व्यरिं मतु मा न ... न कम्पयिष्यसि कपि सर्वस्वमेव वानरं मा न संयंसीः बद्धुं न न करिष्यसि कपि त्वं वध्यमेव तस्मात्त्वं निर्भयः सन् तूर्णं शीघ्रं व्रज गच्छ युध्यस्वाकेड पीडामत्ये भुञ्जनमन्ये आभ्यां सुसूधोःषेरितीम् यमोऽवपरतौ संपूर्वोबन्धनार्थः यमरमेति दमुपनी जिनृत्यन्तेत्यादौ यमको त्समायमदति न मं कर्त्तुः फलवत्त्वाभावात् इति रावणोऽवोच दिति पूर्व्वेण सम्बन्धः ॥ ५० ॥

अनंसीच्चरणौ तस्य मन्दिरादिन्द्रजिद्व्रजन्। गते तस्मिन्नुपारंसीत् संरम्भाद्रक्षसां पतिः ॥ ५१ ॥

अनमित्यादि। एवमुक्त इन्द्रजित् मन्दिरात् व्रजन् गमिष्यन् वर्त्तमानसामीप्ये वर्त्तमानवदिति लट् तस्य पितुश्चरणावनंसीत् नतवान् पूर्व्ववत्सगिटौ गते तस्मिन् रक्षसां पतिः रावणः संरम्भात् क्रोधात् उपारंसीत् निवृत्तवान् पूर्व्ववत्सगिटौ रमेरुपाचेति तिप् ॥ ५१ ॥

अनंसीदित्यादि। एवमुक्त इन्द्रजित् मन्दिरात् व्रजन् गच्छन् तस्य रावणस्य चरणौ अनंसीत् प्रणनाम तस्मिन्निन्द्रजिति गते सति रक्षसां पती रावणः संरम्भात् क्रोधात् उपारंसीत् निवृत्तः ... यमरमणमेति दमुपनी ॥ ५१ ॥

भियोमन्यानो वानरं जितं। संविवक्षिषमाणोऽगान्मायां व्यञ्जिजिषुर्द्विषः ॥ ५२ ॥

ज॰म॰ इन्द्रेत्यादि। वानरं जितं मन्वानोऽवगच्छन् यतो विक्रमाभिज्ञः अगात् गतवान् द्विषः शत्रून् बिभ्रायिषमाणः उपद्रवितुमिच्छन् पूर्ववत्सनइति तदन्तमायां व्यञ्जिजिषुः व्यक्तीकर्त्तुमिच्छुः स्मिपूङ्र ञ्ज्वशां सनीतीट् तथा रुदविदमुषेति न क्वाचित् तदिव्यते॥ ५२॥

भ॰ इन्द्रजिदित्यादि। इन्द्रजित् स्वविक्रमाभिज्ञः अतएव वानरं जितमभिभूतं मन्वानो जानन् द्विषः शत्रोः संविस्मायिषमाणः उपद्रवितुमिच्छुः सन् मायां व्यञ्जिजिषुर्व्यक्तीकर्त्तुमिच्छुः सन् अगात् गतः स्मिङ्पूङित्यादिना स्मिङोऽञ्जश्च सनइम् द्विष इति सम्बन्धे षष्ठी॥ ५२॥

जगत्पिपविषुर्व्वायुः कल्पान्तइव दुर्द्धरः। लोकाना शिशिषोस्तुल्यः कृतान्तस्य विपर्य्यये॥ ५३॥

ज॰म॰ जगत्यादि। कल्पान्ते युगान्ते वायुरिव दुर्धरः जगत्पिपविषुः पवितुमुत्थेप्तुमिच्छुः विपर्य्यये विनाशकाले लोकानाशिशिषोः भक्षयितुमिच्छोः कृतान्तस्य तुल्योऽगादिति पूर्व्वेण सम्बन्धः पूर्व्ववदिट् ॥ ५३॥

भ॰ जगदित्यादि। कीदृशः जगत् भुवनं पिपविषुः पवितुमुत्थेप्तुमिच्छुः कल्पान्ते वायुरिव दुर्द्धरः धर्त्तुमशक्यः विपर्य्यये जगतां विनाशकाले लोकान् आशिशिषोः व्याप्तुमात्मसात्कर्त्तुमिच्छोः कृतान्तस्य यमस्य तुल्यः ईदृश इन्द्रजिदगादिति पूर्व्वेणान्वयः

पूर्व्ववत् वञ्चिपूर्व्वात् आभ्यां सनः विकल्पेनेति भावः। अक्षिदित्यादिना इट्। ऋत्विग्दधृगित्यादौ त्वन्यत्र स्रवे इत्यत्र स्रवे भङ्गतेरिति केचित् ... साधु स्रवे पश्च इत्यूदनुबन्धनिर्देशात्॥ ५३॥

वने चिकरिषोर्वृक्षान् बलं जिगरिषुः कपेः। लसद्विविधशस्त्रौघः संग्रामोमूर्त्तिमानिव॥ ५४॥

वनइत्यादि। वने वृक्षांश्चिकरिषोः विक्षेप्तुमिच्छोः कपेर्बलं सामर्थ्यं जिगरिषुः अपनेतुमिच्छुः कृगोरुगन्तत्वात् सनि ग्रहगुहोश्चेति प्रतिषेधे प्राप्ते इट्सनिवेति विकल्पे किरश्चपञ्चभ्यइतीट् किरतेरिटो दीर्घत्वं नेकन्नोति न दीर्घः लसन् शोभमानोविविधोवज्रप्रकारः शस्त्राणामायुधानामोघः समूहोयस्य समूर्तिमान् शरीरी संग्रामइव इन्द्रजिदगादिति पूर्व्वेणान्वयइत्यर्थः॥ ५४॥

वनेइत्यादि। पुनः कीदृशः वने वृक्षान् चिकरिषोर्विक्षेप्तुमिच्छोः कपेर्बलं सामर्थ्यं जिगरिषुर्भङ्क्तयितुं नाशयितुमिच्छुः लसन् दीप्यमानोविविधोनानाविधः शस्त्रसमूहोयस्य मूर्त्तः संग्रामइव इन्द्रजिदगादिति पूर्व्वेण सम्बन्धः कृविक्षेपे गृनिगरणे आभ्यां सनः पूर्व्ववदिट्॥ ५४॥

रोदिति स्मेव चायाति तस्मिन् पक्षिगणाः शुचा। मुक्तकण्ठं चलान् वृक्षान् बन्धून् बन्धोरिवागमे॥ ५५॥

ज०म० रोदीत्यादि। तस्मिन्निन्द्रजिति आयात्यागच्छति सति पक्षिगणः हतान् वृक्षान् कपिनाशितान् शुचा शोकेन मुक्तकण्ठं यथास्वं नामयाहं रोदिति स्मेव रुदितवानिव नामग्रहणपूर्व्वया रोदनक्रियया व्याप्यमानत्वात् वृक्षाणां कर्म्मसंज्ञा रुदादिभ्यइतीट् बन्धून् बन्धोरिव यथा बन्धोरागमने कश्चित् बन्धून् रोदिति ॥ ५५ ॥

भ० रोदितीत्यादि। तस्मिन्निन्द्रजिति आयाति आगच्छति सति पक्षिगणः शुचा शोकेन मुक्तकण्ठं सशब्दं यथास्यात्तथा हतान् हनूमता विनाशितान् वृक्षान् रोदिति स्मेव क्रन्दति स्मेव यथा बन्धोरागमे लोको हतान् बन्धून् रोदिति सशब्दरोदनक्रियायां रुदिःसकर्म्मकः रुद्भ्योयोहस्स्येतीम् हनस्तोगतौवधे श्रौदित्वात्नेम् ॥ ५५ ॥

आश्वसीदिव चायाति तद्वेगपवनाहतं। विचित्रस्तवकोद्भासि वनं लुलितपल्लवं ॥ ५६ ॥

ज०म० आश्वेत्यादि। तस्मिन्नायाति वनं तद्वेगपवनाहतं सत् आश्वसीदिव सञ्जीवितमिव लक्षि रूपं यतोविचित्रस्तवकोद्भासि लुलितपल्लवञ्च जातं पूर्व्ववदिट् ॥ ५६ ॥

भ० आश्वसीदित्यादि। तस्मिन्नायाति सति वनञ्च आश्वसीदिव संजीवितमिव श्वसप्राणने धौ रुदादयसीति ईम् कीदृशं तद्वेगहनूमतोवेगवायुना आहतं आश्वसतामाह विचित्रैः स्तवकैर्नोद्भासमानं पञ्चादित्वान्नेम् लुलितं मनोहरं पल्लवं यस्य तथा ॥ ५६ ॥

न प्राणिषि दुराचार मायानामीशिषे न च। नेडिषे यदि काकुत्स्थं तमूचे वानरो वचः॥ ५७॥

इतीडधिकारः॥

नप्रेत्यादि। वानरस्तमागच्छन्तमिदं वचनमूचे हे दुराचार न प्राणिषि न जीवसि अनचेत्यस्य रूपं पूर्व्ववदिट् अनितेरिति णत्वं न च मायानामीशिषे नेशिता भवसि ईशः सइति इट् अधीगर्थेति कर्म्मणि षष्ठी यदि काकुत्स्थं नेडिषे न स्तौषि ईडजनोर्ध्वे चेति चकारात्सेचेतीट्। इतीडधिकारः॥ ५७॥ ज०म०

नप्रेत्यादि। वानरो हनूमान् तमिन्द्रजितं वचऊचे किं वच इत्याह हे दुराचार त्वं काकुत्स्थं यदि नेडिषे न स्तौषि तदा न प्राणिषि न जीवसि न च मायानामीशिषे मायानामीश्वरो न भविष्यसि माया यथेष्टं न च विनियोक्ष्यसे इति वा कर्म्मणि षष्ठी धातूनामनेकार्थत्वात् विनियोगार्थता वर्त्तमानसामीप्येऽपि वर्त्तमानवद्विवक्षा तइति न्यायात् सर्व्वत्र की अनद्यप्राणने रुद्धोऽयइति इम् ईशसस्तुती आभ्यां सध्वोरसेमिति इम्। इतीडधिकारः॥५७॥ भ०

ससैन्यश्छादयन् संख्ये प्रावर्त्तिष्ट तमिन्द्रजित्। शरैः क्षुरप्रैर्मायाभिः शतशः सर्व्वतोमुखैः॥ ५८॥

इदानीं विसर्जनीयस्य षत्वाधिकारमाह। ससेत्यादि। ज०म०
: तं वानरं सर्व्वतः शरैः क्षुरप्रैः भल्लैः

ऊः चर्म, मायाभिः शतशोऽनेकधा संख्ये प्रावर्त्तिष्ट प्रवृत्तः सुष्ठ रूपं तत्र ससैन्यश्छादयन् इति विसर्जनीयस्य सत्वं छकारे परे सूलं शरैः चुरप्रैरिति सत्वापवादः शर्परेखरि विसर्जनीयस्य विसर्जनीयः विसर्जनीयस्य विकारनिवृत्त्यर्थः माया भिः शतशः सर्व्वतइति वाशरीति विकल्पः विसर्जनीयःसकारोवा ॥ ५८ ॥

अ० अतः परं विसर्ज्जनीयसत्वाधिकारः। सकारपदमादेशमात्रोपलक्षणं लभते विसन्ध्यधिकारः। ससैन्यइत्यादि। इन्द्रजित् ससैन्यः सैन्यैः सह शरैः चुरप्रैस्स सर्व्वतोमुहुर्व्वारंवारं तं वानरं छादयन् संख्ये युद्धे मायाभिः शतशः शतं शतं वाराम् प्रावर्त्तिष्ट प्रवृत्तः ससैन्यश्छादयन्नित्यत्र वेःसोऽप्रसन्तेछतेइति विसर्गस्य सः स्तुश्चुभिरिति तालव्यत्वं शरैः चुरप्रैरित्यत्र कखपफयोर्मुन्यावित्यस्य न विषयः अप्रसन्तइत्यस्यानुवर्त्तनात् विभक्तिव्यत्ययेन अप्रसन्तयोरिति कखपफयोर्विशेषणात् परे तु शषपरयोःस्याज्जिन्न स्यादिति जिह्वामूलीयनिषेधं षपरयोर्न स्यादित्यनेन उपध्मानीयनिषेधस्याऊः चुरप्रैर्मायाभिरित्यत्र रिचोऽवेइति विसर्गस्य रेफः यद्यपि रवेइति कृते इष्टसिद्धिः स्यात्तथापि रषइति कृतस्य साफल्यमाह देवीदासचक्रवर्त्ती यथा कश्चिदपवादविषये ऽप्युत्सर्गोऽपि प्रवर्त्ततइति न्यायात् अभोंभगोऽघोभ्योऽवेसुविसर्गादिष्वपि [illegible]शङ्कानिरासः तेन हि॰ नेत्यादिविद्धं मायाभिः शतशइत्यत्र शविसवित्य तोमुहुरित्यत्र वतोऽस्त्युरित्यस्य विषयः ॥ ५८ ॥

वानरः कुलशैलाभः प्रसह्यायुधशीकरं। रक्षस्पा शान् यशस्काम्यंस्तमस्कल्पानदुद्रुवत्॥ ५९॥

वानेत्यादि। वानरः कुलशैलाभः संग्रामे स्थिरत्वात् आयुधं जं॰म॰ शीकरमिव नैरन्तर्य्येण पतनात् प्रसह्याभिभूय कुःपोः कःपौ चेति जिह्वामूलीयोपध्मानीयौ रक्षस्पाशान् कुत्सितराक्षसान् पाय्येपाशप् स्वार्थिकाश्रपि प्रकृतितोलिङ्गवचनान्यतिवर्त्तन्ते यश स्काम्यन् आत्मनो यश इच्छन् अत्र तकारे परतोनच्छव्यप्रशानिति रुत्वं विसर्जनीयसकारौ च पूर्व्वस्यानुनासिकः तमस्कल्पान् ईष दसमाप्ततमसः कुःपोरपवादः सोपदादाविति सकारः तच पाशकल्पकाम्येष्विति परिगणनं अदुद्रवत् ढौकते स्म त्रिभीत्या दिना चङ्॥ ५८॥

वानरइत्यादि। वानरः कुलपर्व्वततुल्यः स्थिरचित्तत्वात् भ॰ आयुधं शीकरमिव नैरन्तर्य्येण पतनात् प्रसह्य सोढ्वा रक्षस्पा शान् कुत्सितरक्षांसि अदुद्रुवत् ढौकते स्म द्रावितवानित्यर्थः द्रुग तौ टौ ञिश्रिद्रुस्रुकमइति अङ् कीदृशः यशस्काम्यन् आत्मनो यश इच्छतीति सेःकाम्यक्सेच्छायामिति काम्यक् ततः शतृः कीदृशान् तमस्कल्पान् अन्धकारतुल्यान् त्यादेर्वेषेरिति कल्पः कुत्सितानि रक्षांसि रक्षस्पाशाः पाशःकुत्सायामिति पाशः पुंस्त्व मभिधानात् राजानमिच्छति राजीयतीत्यादि[illegible]सुपूर्व्वेधावि त्वनैवेष्टसिद्धौ नलोपार्थं नलोपश्चकेइति सूत्रं ज्ञापयति सुतवि [illegible] विरामाभिमतकार्य्यसांनिध्यमिति तेन रक्षस्पाशादिषु

विसर्गाभावः किम्वा रचसां शाह्योनश्रोपाद्दिलात् विद्युतः किम्वा
खपफीवेत्यस्य योगविभागात् वाशब्दस्य व्यवस्थावाचित्वाच
पाशकाम्यकल्पेषु विसर्गस्य नित्यं सकारः॥ ५८ ॥

धनुष्पाशभृतः संख्ये ज्योतिष्कल्पोरुकेशरः। दुधाव
निर्नमस्कारान् राक्षसेन्द्रपुरस्कृतान्॥ ६० ॥

ज०म० धनुरित्यादि। धनुष्पाशभृतः कुत्सितधनुर्धरान् राक्षसान्
ज्योतिष्कल्पोरुकेसरः अग्नितुल्यबृहत्सटोवानरः दुषःपइति
पाशादिष्वेव विसर्जनीयस्य षत्वं दुधाव कम्पितवान् यस्मान्निर्न
मस्कारान् अप्रणामान् राक्षसेन्द्रेणेन्द्रजिता पुरस्कृतान् अग्रतः
स्थापितान् नमस्पुरसोर्गत्योरिति विसर्जनीयस्य सकारः इणः
परस्य तु विसर्जनीयस्य षएवाधिक्रियते तत्र नमःशब्दस्य साक्षा
त्प्रभृतिषु पाठात् पुरःशब्दस्य पुरोऽव्ययमिति गतिसंज्ञा॥ ६० ॥

भ० धनुरित्यादि। वानरः संख्ये युद्धे तान् राक्षसान् दुधाव कम्पि
तवान् धूञ्कम्पने ठो कीदृशान् धनुष्पाशभृतः निन्दितधनुर्द्ध
रान् पूर्ववत्पाशः निर्नमस्कारान् नमस्कारवर्ज्जितान् अप्रणता
नित्यर्थः राक्षसेन्द्रपुरस्कृतान् इन्द्रजिताऽग्रतः स्थापितान कीदृशः
ज्योतिष्कल्पोरुकेशरः अग्नितुल्यवर्णविपुलसटः पूर्ववत् कल्पः
सर्व्वत्र पूर्व्ववत् विसर्गाभावः वैःसकारोवा तद्योगात्परस्य सस्य
षत्वमभिनिष्पतन्त्यइत्यत्र व्याख्यातं॥ ६० ॥

स्वामिनोनिष्क्रयं गन्तुमाविष्कृतबलः कपिः। रराज समरे शत्रून् घ्नन् दुष्कृतबहिष्कृतः॥ ६१॥

स्वामीत्यादि। स्वामिनः सुग्रीवस्य निष्क्रयमानृण्यं गन्तुं शत्रून् घ्नन् विनाशयन् कपिः समरे रराज आविष्कृतबलः प्रकटितसामर्थ्यः दुष्कृतबहिष्कृतः दुष्कृतं पापं बहिःकृतमनेनेति वाहिताग्न्यादिषु द्रष्टव्यं सर्व्वत्र इउदुपधस्य चेत्यनेनाप्रत्ययविसर्ज्जनीयस्य षत्वं॥ ६१॥ ज०म०

स्वामीत्यादि। कपिः समरे संग्रामे शत्रून् घ्नन् विनाशयन् रराज दीप्यते स कीदृशः स्वामिनः सुग्रीवस्य निष्क्रयमानृण्यं गन्तुं आविष्कृतं प्रकाशितं बलं सामर्थ्यं येन तादृशः दुष्कृतेन पापेन बहिष्कृतस्त्यक्तः निष्पापइत्यर्थः दुष्कृतं बहिष्कृतं येनेति वा पूर्व्वनिपातस्यानियमात् क्वचित् क्तान्तस्य परनिपातः वाहिताग्न्यादेर्व्वेति परः दुर्निराविर्बहिःप्रादुश्चतुरांषःकखपफेष्विति परस्य दर्शनात् निष्क्रयादिषु सेतुकखपफेवेत्यस्य वाशब्दस्य व्यवस्थावाचित्वात् नित्यं षकारोबोध्यः विकल्पेऽपि न क्षतिः दुःखं दुष्खञ्चेति द्विरूपदर्शनात् मूर्द्धन्यषत्वं पूर्व्ववत्॥ ६१॥ भ०

चतुष्काष्ठं क्षिपन् वृक्षान् तिरस्कुर्व्वन्नलीयसो। तिरस्कृतदिगाभोगोददृशे बहुधा भ्रमन्॥ ६२॥

ज०म० चतुरित्यादि। चतस्रः काष्ठा दिशो यस्मिन् क्षेपणइति क्रियाविशेषणं पूर्व्ववत् षत्वं चतसृषु दिक्षु वृक्षान् रणे भ्रमन् एकोऽपि बहुधा ददृशे दृष्टः कपिः क्षिपन्निति तौदादिकः अरींस्तिरस्कुर्व्वन् अभिभवन् तिरस्कृतदिगाभोगः अपनीतदिग्विस्तारः तिरसोऽन्यतरस्यामिति पक्षे षत्वं ॥ ६२ ॥

भ० चतुरित्यादि। स एकः कपी रणे भ्रमन् बहुधा ददृशे अनैरित्यर्थात् किं कुर्व्वन् चतुष्काष्ठं वृक्षान् क्षिपन् चतस्रः काष्ठा दिश आधारत्वेन यस्मिन् क्षेपणे क्रियाविशेषणमिदं चतसृषु दिक्षु वृक्षान् क्षिपन्नित्यर्थः अरीन् घ्नन् तिरस्कुर्व्वन् अभिभवन् तिरस्कृतदिगाभोगः आच्छादितदिग्विस्तारः पूर्व्ववद्विभाषया विसर्गस्य सकारः ॥ ६२ ॥

द्विष्कुर्व्वतां चतुष्कुर्व्वन्नभिघातं नगैर्द्विषां। बहिष्करिष्यन् संग्रामाद्रिपून् ज्वलनपिङ्गलः ॥ ६३ ॥

ज०म० द्विष्कुर्व्वेत्यादि। असौ कपिराटीदिति वक्ष्यमाणेन सम्बन्धः कीदृशः द्विष्कुर्व्वतां द्वौ वारावभिघातं कुर्व्वतां द्विषां चतुष्कुर्व्वन् चतुरोवारान् नगैर्वृक्षैरभिघातं कुर्व्वन् द्विस्त्रिश्चतुरिति कृत्वोऽर्थे इति विसर्जनीयस्य वा षत्वं अरीन् संग्रामाद्बहिष्करिष्यन् अपनेष्यामीति इसुसोः सामर्थ्यइति विसर्जनीयस्य षत्वं पक्षे सामर्थ्यं चात्र व्यपेक्षानैकार्थीभावः बहिष्करिष्यन्निति द्वयोः परस्परव्यपेक्षत्वात् ॥ ६२ ॥

द्विरित्यादि। असौ कपिराटीदित्यपिमश्लोकेनान्वयः किङ्कुर्व्वन् भ॰
द्वौ वारौ अभिघातं कुर्व्वतां द्विषां नगैः पर्व्वतैश्चतुरोवारान् अभि
घातं कुर्व्वन् द्विस्त्रिश्चतुःकृत्वोऽर्थे इति सूत्रेण विभाषया कस्का
दित्वाद्रूपद्वयमिति परः स्मते इस्तेपाणावित्यादिना साचा
दादित्वात् वा समासः। समासे सेतुकखेति रूपद्वयं निर्व्विरोधं
एवमसमासेऽपि कखपफेवेत्यस्य योगविभागः कार्य्यः समासपचे
षत्वं व्याख्यातमेव असमासेऽपि क्तिलादित्यस्य योगविभागात्
षत्वं मनीषादित्वाद्वा संग्रामात् अरीन् शत्रून् वहिष्करिष्यन्
पूर्व्ववत् वेःसः षत्वञ्च ज्वलनवत् वह्निवत् पिङ्गलः॥ ६३॥

ज्योतिष्कुर्व्वन्निवैकोऽसावाटीत् संख्ये परार्द्ध्यवत्।
तमनायुष्करं प्राप शक्रशत्रुर्द्धनुष्करः॥ ६४॥

ज्योतिरित्यादि। एकोऽपि ज्वलनपिङ्गलः ज्योतिष्कुर्व्वन्निव ज॰म॰
अग्निं दीपयन्निव पूर्व्ववत्पचे विसर्जनीयस्य षः परार्द्ध्यवत् दिव्य
इव परार्द्ध्यो द्युलोकः ब्रह्माण्डसम्बन्धिनऊर्ध्वभागस्योत्कृष्टत्वात्
तत्र भवइति परावराधमेति यत् संख्ये संग्रामे आटीत् परि
चक्राम इटइटीति सिचोलोपः तं वानरमनायुष्करं प्राणाप
हारिणं शक्रशत्रुरिन्द्रजित् प्राप प्राप्तवान् धनुष्करः धनुः करे
यस्येति नित्यं समासेत्यादिना षत्वं॥ ६४॥

ज्योतिरित्यादि। एकोऽसौ कपिः संख्ये परार्द्ध्यवत् अत्युत्कृ भ॰
ष्टसंख्याविशेषावच्छिन्नवत् ज्योतिष्कुर्व्वन् आटीत् परिचक्राम

पराह्वंवत् दिव्यवदिति जयमकृत्वा तं कपिं शक्रशत्रुरिन्द्रजित् आप कीदृशं न आयुः करोतीत्यनायुष्करं कीदृशः धनुः करे यस्य स तथा पूर्व्ववद्देःसः षत्वञ्च इसुसन्तयोः कखपफयोर्नित्यमितिपरः ॥ ६४ ॥

अस्यन्नरुष्करान् वाणान् ज्योतिष्करसमद्युतिः।
यशस्करोयशस्कामं कपिं वाणैरताडयत्॥ ६५ ॥

ज०म० अस्यन्नित्यादि। वाणानरुष्करान् व्रणजनकान् दिवाविभेत्यादिना टः अस्यन् क्षिपन् ज्योतिष्करसमद्युतिः ज्योतिष्करणशीलः आदित्यः कृञोहेतित्यादिना टः तेन तुल्यइत्यर्थः पूर्व्ववत् षत्वं यशस्करोयशोजननशीलः इन्द्रजिद्यशस्कामं यशसि कामोऽस्येति तं कपिं वाणैरवाकिरत् अताडयत् अतः कृकमीत्यादिना न व्यय विसर्जनीयस्य सत्वं ॥ ६५ ॥

भ० अस्यन्नित्यादि। इन्द्रजिदरुष्करान् व्रणजनकान् वाणान् अस्यन् क्षिपन् वाणैः कपिमताडयत् ज्योतिष्करस्य सूर्य्यस्य समा द्युतिर्यस्य यशस्करोयशोजननशीलः कीदृशं कपिं यशस्कामं यशसि कामोयस्य सर्व्वत्र पूर्व्ववद्देःस इत्वात् षत्वञ्च अरुर्ज्योतिर्यशस्करोतीति स्रकुतः ॥ ६५ ॥

चकाराधस्पदं नासौ चरन् वियति मारुतिः। मर्म्मा विद्भिस्तमस्काण्डैर्व्विध्यमानोऽप्यनेकधा॥ ६६ ॥

इति सत्वाधिकारः।

चकारेत्यादि। असौ मारुतिर्वियति चरन् अधस्पदं पृथिव्यां पदं न चकार अधस्पदमिति मयूरव्यंसकादित्वात् कस्कादिषु चेति षत्वं मर्म्माणि विध्यन्तीति क्विप् नहिवृतीत्यादिना पूर्व्वपदस्य दीर्घत्वं। इति षत्वसत्वाधिकारः॥ ६६॥ ज०म०

चकारेत्यादि। असौ मारुतिर्हनूमान् वियति आकाशे चरन् मर्म्माणि विध्यद्भिः कालायसघटितत्वात् तमस्तुल्यैः काण्डैः शरैरनेकधाविध्यमानस्ताड्यमानोऽपि अधस्पदं पृथिव्यां पदं न चकार पूर्व्ववदेः सः अधःशिरसोःपदे तमसस्तु काण्डे नित्यं विसर्गस्य सकारइति परः। इति विसर्ज्जनीयसत्वाधिकारः॥ ६६॥ भ०

पुरुहूतद्विषोधूर्षु युक्तानत्यस्य वाजिनः। आयूंषि
त्वचु निर्भिद्य प्राभञ्जनिरमोचयत्॥ ६७॥

इतः प्रभृति अपदान्तस्य मूर्द्धन्यइत्यधिकृत्याह। पुरुहूतेत्यादि। पुरुहूतद्विषइन्द्रजितः सम्बन्धिनोयानस्य रथस्य धूर्षु युक्तान् वाजिनः त्वचु चर्म्मसु निर्भिद्य प्राभञ्जनिर्मारुतिरायूंषि जीवितानि अमोचयत् त्याजितवान् धूर्षु त्वच्विति आदेशप्रत्यययोरिति षः प्रत्ययसकारत्वात् तत्र हि इण्कोरिति वर्त्तते परेण च णकारेण प्रत्याहारः आयूंषीति नुम्विसर्जनीयेत्यादिना सहेःसाडःसः इति छन्दोविषयत्वाभेदाद्धतं ततः छन्दसि सहइति ण्विप्रत्ययस्य विधानात् एवञ्च पृतनाषाड्भिषइति पाठान्तरमयुक्तं॥६७॥ ज०म०

अथ मूर्द्धन्यषत्वाधिकारः। पुरुहूतेत्यादि। प्रभञ्जनस्यापत्यं हनुमान् पुरुहूतद्विषः शक्रशत्रोर्मेघनादस्य यानस्य रथस्य धूर्षु भ०

भादेषु युक्तान् वाजिनोऽश्वान् लघु षर्मसु निर्भिद्य आयूंषि अमी मचत् त्याजयामास घोऽओर्ञेरिति सूत्रे उपसर्गोनीभूतार्थास्थिपि शब्दार्थादयोगृह्यन्ते इतितु शाप्त्यर्थयोर्निवहोः प्रतिषेधेन प्रापितं तेन वाजिनां प्रयोज्यानां कर्मत्वं अत्र हि मुचिर्मुक्तिपूर्व्विकायां गतौ वर्त्तते अत एवामोचयत् मोचनेन भवान्तरमगमयदित्यर्थः क्षिप्रादित्यादिना धूर्ष्वित्यत्र रेफात् आयूंषीत्यत्र नुविव्यवधानेऽपि लक्षित्यत्र ककारात् मस्य षत्वं पुरुहूतेत्यत्र पृतनाषाडिति क्वचित्पाठः ॥ ६७ ॥

सुषुपुस्ते यदा भूमौ रावणिः सारथिं तदा। आह र्त्तुमन्यानशिषत् प्रोषितत्रासकर्कशः ॥ ६८ ॥

अ॰म॰ सुष्वित्यादि। ते यदा भूमौ सुषुपुः निपेतुः आदेशसकारत्वात्पूर्व्ववत् षत्वं तदा रावणिरन्यानश्वानाहर्त्तुमानेतुं सारथिमशिषत् आदिष्टवान् सर्तिशास्तीत्यङ् शासइदङ्हलोरिति इकारः शासिवसीति षत्वं प्रोषितत्रासः प्रोषिताद्ग्रामादुपगतभयः कर्कशस्य रौद्रः प्रोषितइति यजादित्वात्सम्प्रसारणं षत्वं पूर्व्ववत् ॥ ६८ ॥

भ॰ सुषुपुरित्यादि। ते वाजिनोयदा भूमौ सुषुपुः निपेतुः ञिष्वपोशये भ्वाद्यादिष्वाइति मूर्द्धन्यस्य दन्त्यत्वं ततः क्षिप्रादिति षस्य क्रतत्वात् षत्वं तदा तस्मिन् काले रावणस्यापत्यमिन्द्रजित् अन्यानश्वानाहर्त्तुं सारथिं अशिषत् आदिष्टवान् कीदृशः प्रोषितोऽपग

तस्याशीयवसेति बहुव्रीहिः सचासौ कर्कशवसेति पश्चात्कर्मधारयः शोषितयाशिष कर्कशीवा शासेः शासइदिति कः शासुक्किति इत् वसेः घुषवसेति कस्य इम् यहस्याद्योरिति जिः कित्वादि त्यादौ शासवसेति षत्वं॥ ६८॥

प्रतुष्टुषुः पुनर्युद्धमासिषञ्जयिषुर्भयं। आतस्थौ रथमात्मीयानुत्सिसाहयिषन्निव॥ ६९ ॥

प्रत्थित्यादि। अक्षा आनीतादृति पुनरपि युद्धं प्रतुष्टुषुः प्रस्तो ज॰म॰ तुमारब्धुमिच्छुः सन् अज्झनगमांसनीति दीर्घः सनाशंसभिक्ष उः नलोकेति षष्ठीप्रतिषेधः रथमातस्थौ आरूढवान् भयमासिषञ्ज यिषुः संश्लेषयितुमिच्छुः हनूमता तत्र स्तौतेः सनि षत्वभूते सञ्जेश्च स्तौतिण्योरिति अभ्यासादुत्तरस्य षत्वं आत्मीयान् भृत्यानुत्सि साहयिषन्निव उत्साहयितुमिच्छन्निव युध्यध्वमिति स्तौतीत्यादिना षत्वे प्राप्ते सःस्विदित्यादिना षकारस्य सत्वं॥ ६९॥

प्रतुष्टुषुरित्यादि। इन्द्रजित् पुनः सज्जीभूतं रथमातस्थौ भ॰ आश्रितवान् कीदृशः युद्धं प्रतुष्टुषुः प्रस्तोतुमारब्धुमिच्छुः भयं आसिषञ्जयिषुः हनूमतोभयमासञ्जयितुं संश्लेषयितुं इच्छुः आत्मी यान् अनुचरान् उत्सिसाहयिषन्निव उत्साहयितुमिच्छन्निव स्तौतिण्योरित्यादिना षत्वभूते सनि स्वेः षत्वं तत्रैव सहवर्जनात् उत्सिसाहयिषन्नित्यत्र न षत्वं॥ ६९॥

बलान्यभिषिषिचन्तं तरुभिः कपिवारिदं। विजिगीषुः पुनश्चक्रे व्यूहं दुर्ज्जयमिन्द्रजित् ॥ ७० ॥

ज॰म॰ बलेत्यादि। कपिवारिदं कपिं वारिदमिव बलान्यभिषिषिचन्तं तरुभिः अभिषेक्तुं छादयितुमिच्छन्तं स्थादिष्वभ्यासेत्यादिना तु सकारस्याभ्याससकारस्य च षत्वं तमेवंविधं कपिं विजिगीषुर्विजेतुमिच्छुः इन्द्रजित् सन्लिटोर्जेरिति कुत्वं पुनर्व्यूहं बलसन्निवेशं दुर्जयाख्यं चक्रे हस्त्यश्वादिसैनिकानां मण्डलस्थित्या विरच्यते ॥ ७० ॥

भ॰ बलानीत्यादि। तरुभिर्बलानि अभिषिषिचन्तं छादयितुमिच्छन्तं अतएव कपिं वारिदमिव जेतुमिच्छुरिन्द्रजित् पुनर्व्यूहं बलविन्यासं चक्रे दुर्ज्जयं जेतुमशक्यं व्यूहस्य कपेर्व्वा विशेषणं अभिपूर्व्वसिचः सनः षत्वे ञिस्नोःखेरिति नियमेन क्तिलादित्यादिना गीकइति इत्यादिना च प्राप्तं षत्वं बाध्यते प्रकृतेर्ब्बाधितत्वात् गीकइत्यादिना खेःसकारस्यापि न षत्वमिति केचित् ञिस्नोःखेरित्यनेन खिनिमित्तं षत्वं बाध्यते तेन प्रकृतेः सस्य न षत्वं खेस्तु गीकइत्यादिना षत्वं भवत्येवेति केचित् वस्तुतस्तु षत्वभूते सनि खिनिमित्तस्यैव षस्य निषेधः नतु गिनिमित्तस्य तेनोभयत्र गीकइति षत्वं ॥ ७० ॥

अभिक्रान्तः कपिं क्रोधादभ्यषिञ्चन्निवात्मनः। संप्रहारसमुद्भूतैरक्तैः कोष्णैरसृक्च्युतैः ॥ ७१ ॥

अभीत्यादि। राक्षसाः क्रोधादात्मनोऽभियन्तः अन्तं नयन्तः षोऽन्तकर्मणीत्यस्य शतरि ओतःश्यनीत्योकारलोपः उपसर्गादिति षत्वं सम्प्रहारसम्भूतैः रक्तैः कोष्णैरीषदुष्णैः अहस्रुतैः व्रणान्निर्गतैः कपिमभ्यषिञ्चन्निव अभिषिक्तवन्त इव लङि रूपं प्राक्सितादड्व्यवायेऽपीति षत्वं ॥ ७१ ॥ ज०म०

अभीत्यादि। राक्षसाः क्रोधादात्मनोऽभियन्तोऽन्तं नयन्तः सम्यक् प्रहारजातैः ईषदुष्णैर्व्रणच्युतैः रक्तैः कपिं अभ्यषिञ्चन्निव अभिषिक्तवन्त इव षोयनाशे शतः अभिषेसिचोर्गीकःस्तुस्तुभषो इत्यादिना षत्वं ॥ ७१ ॥ भ०

संग्रामे तानधिष्ठास्यन्निषद्य पुरतोरणं। अविषी दन्नवष्टब्धान् व्यष्टम्भान्नरविष्वणान्॥ ७२॥

संग्रामइत्यादि। ये प्राणिनः अभिषिञ्चन्ति तान्नरविष्वणान् राक्षसान् संग्रामे अधिष्ठास्यन् अस्वतन्त्रीकरिष्यन् कपिः उपसर्गादिति षत्वं पुरतोरणं पुरद्वारं व्यष्टम्भात् आश्रितवान् निषद्य तत्रैव पुरतोरणे स्थित्वा प्राणिनोमाप्रविचुरिति अविषीदन् विषादमगच्छन् निषद्य विषीदन्निति सदिरप्रतेरिति षत्वं अवष्टब्धान् अविदूरान् अवाच्चालम्बनाविदूर्य्ययोरिति षत्वं व्यष्टम्भादिति अड्व्यवायेवेस्तम्भेरिति षत्वं स्तम्भुस्तुम्भुइत्यादिना श्नाप्रत्ययः सशब्दायामभ्यवहारक्रियायां स्वनतिर्वर्त्तते नराणां विष्वणाइति सः नरान् सशब्दमभ्यवहरन्तइत्यर्थः वेश्चस्वनोभोजनइति षत्वं ॥ ७२ ॥ ज०म०

भ॰ संग्रामइत्यादि। हनूमान् संग्रामे निषद्य स्थित्वा अविषी दन् विषस्रो न भवन् तान् राक्षसान् अधिष्ठास्यन् अभिभविष्यन् पुरतोरणं पुरीबहिर्द्वारं व्यष्टभ्नात् आक्रान्तवान् पुरतोरण मधिष्ठास्यन् तान् व्यष्टभ्नादिति वा कीदृशान् अवष्टभ्नान् निकट स्थान् ऊर्ज्जितान् वा नरविष्वणान् मनुष्यं भुञ्जानान् अधिस्थानि विषद्विस्रम्भान्नार्थविस्वनां गीकदृत्यादिना षत्वं अवष्टभ्नानिति गीकदृत्यादौ अवस्थनेत्यस्य योगविभागार्थात् क्वचिदन्नार्थादन्य त्रापि षत्वं मनीषादित्वाद्वा अत्रात्तभेरौर्ज्जित्याश्रयनिकटभो जनेष्विति परः॥ ७२॥

विषह्य राक्षसाः क्रुद्धाः शस्त्रजालमवाकिरन्। यन्न व्यसहतेन्द्रोऽपि कपिः पर्य्यषहिष्ट तत्॥ ७३॥

ज॰म॰ विषेत्यादि। विषह्य सोढ्वा कपिचेष्टितमित्यर्थात् सात्पदाद्यो रिति प्रतिषेधे प्राप्ते परिनिविभ्यइति षत्वं राक्षसाः क्रुद्धाः शस्त्र जालमवाकिरन् विक्षिप्तवन्तः लङि रूपं यच्च शस्त्रजालमिन्द्रो ऽपि न व्यषहत न सोढवान्सः लङि रूपं तत्कपिः पर्य्यषहिष्ट लुङि रूपं सहेःसिवादीनामित्यादिना विभाषा षत्वं॥ ७३॥

भ॰ विषह्येत्यादि। राक्षसाविषह्य सोढ्वा हनूमतः प्रहारमित्य र्थात् क्रुद्धाः सन्तः शस्त्रजालं शस्त्रसमूहं नैरन्तर्य्येण सर्व्वतोविक्षे पात् जालमिव अवाकिरन् विक्षिप्तवन्तः ल्यां रूपं यत्शस्त्रजालं

हृष्टोऽपि न व्यसहत न विसोढवान् कपिसतं प्रस्रजालं पर्य्यष
हिष्ट परिसोढवान् यां रूपं विषहेत्यत्र गीकदत्यादिना षत्वं
व्यसहतेत्यत्र पर्य्यषहिष्टेत्यत्र च निविपरिभ्यञ्जेत्यादिना पाचिक
षत्वं॥ ७३॥

विष्यन्दमानरुधिरो रक्तविस्यन्दपाटलान्। विष्क
न्तॄन् परिघेणाहन्नविस्कन्ता कपिर्द्विषः॥ ७४॥

विष्येत्यादि। विष्यन्दमानरुधिरः चरद्रक्तः कपिः परिघेणा जं०म०
हन् ताडितवान् द्विषः शत्रून् रक्तविस्यन्दपाटलान् रक्तस्रुतिलो
हितान् अनुपर्य्यभिनिविभ्यः स्यन्दतेरिति विभाषाषत्वं रक्तस्या
प्राणित्वात् विष्कन्तॄन् विविधं स्कन्तुं गन्तुं शीलमेषामिति हन् अवि
स्कन्ता कपिः अगमनशीलः स्थानशील इत्यर्थः वेःस्कन्देरनिष्ठा
यामिति विभाषा षत्वं॥ ७४॥

विष्क इत्यादि। कपिर्द्विषः शत्रून् परिघेण अहन् ताडितवान् भं०
कीदृशः विष्यन्दमानरुधिरः चरद्रक्तः अविस्कन्ता अविचलन
शीलः कीदृशान् रक्तविस्यन्दपाटलान् रक्तस्रुतिलोहितान्
विष्कन्तॄन् विविधगतिशीलान् स्यन्दृ स्रुतौ स्कन्दिर् शोषणे
गत्यां अनयोः सयविस्कधानिर्व्विखित्यादिना पचे षत्वं स्यन्देः
कर्त्ते रक्तं तेनाप्राणिकर्त्तृकत्वं स्कन्देस्तॄन् अपशयोरिति दस्य तः
सवर्गात् सवर्गस्य सवर्गेलुम्वेति सूत्रेण पचे दलोपमाज्ञः परे
समते मनीषादित्वात्तद्रूपमपि॥ ७४॥

मेघनादः परिष्कन्दन् परिस्कन्दन्तमाश्वरिं। अव भ्रादपरिस्कन्दं ब्रह्मपाशेन विस्फुरन्॥ ७५॥

ज०म० मेघेत्यादि। मेघनाद इन्द्रजित् परिष्कन्दन् परितोभ्रमन् परिस्कन्दन्तम्परिभ्रमन्तमरिं कपिं ब्रह्मपाशेन ब्रह्मणा दत्तेन पाशेनशीघ्रमबभ्रात् बद्धवान् लङि श्नाप्रत्यये रूपं परेश्चेति वा षत्वं अपरिस्कन्दं अप्राच्यभरतत्वात् तेन परिस्कन्दः प्राच्यभरतेष्विति निपातनं विस्फुरन् द्वेषादुद्वहन्नित्यर्थः स्फुरतिस्फुलत्योरिति विभाषाषत्वं॥ ७५॥

भ० मेघेत्यादि। मेघनाद इन्द्रजित् परिष्कन्दन् परितोभ्रमन् परिस्कन्दन्तं परितोभ्रमन्तमरिं हनूमन्तं ब्रह्मपाशेन आशु शीघ्रं अपरिस्कन्दं निश्चलं यथा स्यात्तथा अबभ्रात् बद्धवान् न विद्यते परिस्कन्दस्खलनं यस्मादन्धनात् क्रियाविशेषणं अरेर्विशेषणमिति केचित् विस्फुरन् कोपात् हर्षाद्वा कम्पमानः परिस्कन्द विस्फुरोः षत्व विस्कभ्नानिर्व्वेत्यादिना विभाषया षत्वं॥ ७५॥

विस्फुलद्भिर्गृहीतोऽसौ निष्फुलः पुरुषाशनैः। विष्कम्भितुं समर्थोऽपि नाचलद्ब्रह्मगौरवात्॥ ७६॥

ज०म० विष्फुलेत्यादि। असौ कपिः पुरुषाशनैः राक्षसैः विस्फुलद्भिः हर्षाच्चलद्भिर्गृहीतः निष्फुलः सतेजाः निस्फुलेति विभाषा षत्वं

विष्कम्भितुं व्यापारितुं समर्थोऽपि ब्रह्मगौरवान्नाचलत् न चलितः माभूदमोघोब्रह्मास्त्रः पाश इति ये स्कथातेरिति षत्वं ॥ ७६ ॥

विष्फुलेत्यादि। असौ कपिर्विष्फुलद्भिर्हर्षाचलद्भिः पुरुषां भ॰ भनैः राक्षसैः गृहीतोऽपि निष्फुलो निष्कम्पः विष्कम्भितुं व्यावर्त्तितुं समर्थोऽपि ब्रह्मगौरवात् नाचलत् न चलितवान् विस्कम्भेत्यादिना विष्कम्भः षत्वं नित्यं स्फुरस्फुलोस्तु विभाषितं ॥ ७६ ॥

ढ़पीढ्वं भर्त्तुरानन्दं मा न प्रोढ्वं द्रुतं वियत्। वानरं नेतुमित्युच्चैरिन्द्रजित् प्रावदत् स्वकान् ॥ ७७ ॥

ढ़पीत्यादि। भर्तुः रावणस्य आनन्दं ढ़पीढ्व कुरुध्वं लिङि जं॰म॰ रूपं अतोवानरं द्रुतं नेतुं वियदाकाशं मा न प्रोढ्वं मानोत्पतिष्ट माङि लुङ् इणः षीध्वमिति धकारस्य मूर्द्धन्यढकारः इत्येवमुच्चैरिन्द्रजित् स्वकान् भृत्यान् प्रावदत् वदेर्लङि रूपं ॥ ७७ ॥

ढ़पीढ्वमित्यादि। यूयं भर्त्तुरावणस्य आनन्दं ढ़पीढ्वं कुरुध्वं भ॰ क्याद्रूपं इगुङुर्मढीति किल्वान्न गुणः टोठीढीधोढिच इति धस्य ढत्वं किलादिति षः वानरं नेतुं द्रुतं यूयं वियदाकाशं मा न प्रोढ्वं न न गच्छत अपि तु प्रोढ्वं प्रगुरुच्चसर्पणे मायोगे टो सिः गुणः धेसलोपेवेति पचे सिलोपः टोठीढीधोढिच इति धस्य ढत्वं इत्युक्तं इन्द्रजित् स्वकान् आत्मीयान् उच्चैर्महता ध्वनिना प्रावदत् प्रोक्तवान् ॥ ७७ ॥

गतमङ्गुलिषङ्गं त्वां भीरुष्ठानादिहागतं । खादि
ष्याम इति प्रोचुर्नयन्तो मारुतिं द्विषः ॥ ७८ ॥

जं०म० गतमित्यादि। अङ्गुलीनां सङ्गः अङ्गुलीषङ्गः तं गतं प्राप्तं ह्रस्व
प्राप्तमित्यर्थः समासेऽङ्गुलेःसङ्ग इति षत्वं भीरोः कातरस्य यत्
स्थानं तस्माद्भीरुष्ठानादिहागतं भीरोःस्थानमिति षत्वं खादिष्या
म इति प्रोचुः द्विषो राक्षसा मारुतिं नयन्तो नेष्यन्तः वर्त्तमानसा
मीप्ये भविष्यति लट्॥ ७८॥

भ० गतमित्यादि। मारुतिं नयन्तो राक्षसा इति प्रोचुः उक्तवन्तः
किमित्याह त्वां वयं खादिष्यामः कीदृशं त्वां अङ्गुलेः सङ्गं गतं
प्राप्तं ह्रस्वप्राप्तमित्यर्थः भीरो रामस्य स्थानादिह लङ्कायामा
गतं समासेऽङ्गुलेः सङ्गस्य भीरोः स्थानस्य चेति षत्वमिति परः
स्मृते क्तिलादित्वस्य योगविभागात् प्रावचनघसमाख्येत्यत्र
चकारस्यानुक्तसमुच्चयार्थत्वादन्येषामपीत्यर्थो वा मनीषादित्वा
द्वा ॥ ७८ ॥

अग्निष्टोमादिसंस्थेषु ज्योतिष्टोमादिषु द्विजान्।
योऽरक्षीत्तस्य दूतोऽयं मानुषस्येति चावदन्॥ ७९॥

जं०भ० अग्नीत्यादि। अग्निष्टोमादिसंस्थेषु यज्ञभेदेषु ज्योतिष्टोमादिषु
यो द्विजानरक्षीत् तस्य मानुषस्यायं दूत इति चावदन् नयन्तो
द्विषः अग्नेः स्तुत्स्तोमसोमाः ज्योतिरायुषः स्तोम इति षत्वं॥

यज्ञेत्यादि। अग्निष्टोमादिषु यज्ञेषु ज्योतिष्टोमादिषु यज्ञेषु भ० योऽद्विजान् अरचीत् आदिशब्दादाश्वमेधादेर्ग्रहणं आयुर्ज्योति रग्निभ्यः स्तोमस्येति षत्वमिति परः समते मनीषादित्वात् तस्य मानुषस्यायं दूत इति च ते द्विषोऽवदन् ॥ ७९ ॥

नासां मातृष्वसेयस्य रावणस्य लुलाव यः। मातुः स्वसुश्च तनयान् खरादीन् विजघान यः॥ ८० ॥

नासामित्यादि। रावणस्य या मातुः स्वसा भगिनी सा मातृ ज०भ० ष्वसा मातृपितृभ्यामिति षत्वं तस्या अपत्यं मातृष्वसेयी मातृष्व सुश्चेति ठगन्तलोपौ तस्याये नासां लुलाव मातुःस्वसुश्च तनयान् खरादीन्विजघान मातृपितृभ्यामन्यतरस्यामिति षत्वाभावपक्षे विभाषास्वसृपत्योरिति षष्ठ्या अलुक् ॥ ८० ॥

नासामित्यादि। यो रावणस्य मातृष्वसेय्या मातृष्वसुर्दुहितुः भ० शूर्पणखाया नासां लुलाव छिन्नवान् मातृस्वसृशब्दात्ढगादि त्वात् ष्णेयः मनीषादित्वाद्गन्तलोपः आदिषस्य षत्वञ्च मातृपि तृभ्यां स्वसुरिति परः यो मातुः स्वसुश्च मातुर्भगिन्याश्च तनयान् पुत्रान् खरादीन् निजघान तस्य दूतोऽयमिति सम्बन्धः स्वसुर्वा मातृपितृभ्यामिति विभाषया षत्वमिति परः समते मनीषादि त्वात् ॥ ८० ॥

प्रादुःषन्ति न यं वासास्तस्य रक्षःसमागमे। तस्य पत्नियधुःपूतेरयं प्रत्यभिरागतः॥ ८१ ॥

ज०म० प्रादुरित्यादि। यस्य रक्षःसमागमे सम्भाषाः भयानि न प्रादुःषन्ति न प्रादुर्भवन्ति उपसर्गप्रादुर्भ्यामित्यादिना दुःशब्दादुत्तरस्यास्ति सकारस्य अस्तेरल्लोपइत्यल्लोपे कृते षत्वं प्रादुःसकारस्य च ष्टुत्वं तस्य चक्रियदुःषूतेः दुष्पुत्रस्यायं प्रणिधिरागत इति चावदन् नयन्तः स्तुयतइति स्तुतिः दुर्निदाघामिति स्तुतेः सकारस्य सुविनिर्दुर्भ्यइति षत्वं॥ ८१॥

भ० प्रादुरित्यादि। रक्षसां समागमे यस्य सम्भाषान प्रादुःषन्ति न प्रादुर्भवन्ति प्रादुर्णीकइति षत्वं तस्य चक्रियदुःषूतेः प्रणिधिस्त्वरोऽयमागतः विनिसुदुर्भ्यः स्तुतिषमसुपामिति षत्वमिति परः स्नमते मनीषादित्वात्॥ ८१॥

दृष्ट्वा सुषुप्तं राजेन्द्रं पापोऽयं विषमाश्रयः। चारकर्म्मणि निष्णातः प्रविष्टः प्रमदावनं॥ ८२॥

ज०म० दृष्टेत्यादि। राजेन्द्रं रावणं दृष्ट्वा प्रमदावनं प्रविष्टः सुषुप्तं गाढनिद्रं वच्यादिना सम्प्रसारणं पापोऽयं विषमाश्रयः सुपीत्यादिना षत्वं चारकर्म्मणि निष्णातः कुशलः निनदीभ्यांस्नातेःकौशलइति षत्वं॥ ८२॥

भ० दृष्टेत्यादि। अयं पापोदुराचारो राजेन्द्रं रावणं दृष्ट्वा प्रमदावनं प्रविष्टः कीदृशं राजेन्द्रं सुषुप्तं गाढनिद्रितं विस्वधानिर्व्विसुनिर्दुःस्वपइति षत्वं कीदृशः विषमाश्रयः कुटिलहृदयः विषमेत्यच मनीषादित्वात् षत्वं चारकर्म्मणि निष्णातः कुशलः निनदीभ्यांस्नः कौशलेइति षत्वमिति परः स्नमते मनीषादित्वात्॥८२॥

कुलकं। सुप्रतिष्णातसूत्राणां कपिष्ठलसमत्विषां।
स्थितां वृत्ते द्विजातीनां रात्रावैक्षत मैथिलीं ॥ ८३ ॥

सुप्रेत्यादि। येषां द्विजातीनां सुप्रतिष्णातानि ग्रन्थतोऽर्थ तश्च निश्चितानि सूत्राणि तेषां सुप्रतिष्णातसूत्राणां सूत्रं प्रतिष्णातमिति निपातनं कपिष्ठलसमत्विषां कपिष्ठलोनामऋषिर्गोत्र प्रवर्त्तकः कपिष्ठलोगोत्रइति साधुः तत्तुल्यतेजसां द्विजातीनां वृत्ते चरिते स्थितां मैथिलीं ऐक्षत ॥ ८३ ॥ जं०म०

सुप्रेत्यादि। अयं रात्रौ द्विजातीनां वृत्ते स्थितां मैथिलीं ऐक्षत दृष्टवान् घ्यां रूपं कीदृशानां सुप्रतिष्णातं ग्रन्थतोऽर्थतश्च विशुद्धं गोभिलादिसूत्रं येषां मनीषादित्वात् सूत्रे प्रतिस्नातस्य षत्वं कपिष्ठलसमत्विषां कपिष्ठलाख्यस्य ऋषेः समा त्विट् येषां मनीषादित्वात् गोत्रे कपेः स्थलस्य सस्य षत्वं ॥ ८३ ॥ भ०

सर्व्वनारीगुणैः प्रष्ठां विष्टरस्थां गविष्ठिरां। अयानां कुष्ठले तारां दिविष्ठामिव निर्म्मलां ॥ ८४ ॥

कीदृशीमित्याह सर्व्वेत्यादि। यावन्तो नारीगुणाः तैः प्रष्ठां अग्रगामिनीं प्रष्ठोऽग्रगामिनीति साधुः विष्टरस्थामासनस्थां वृक्षासनयोर्विष्टरइति साधुः गविष्ठिरां वाचिस्थिरां गवियुधिभ्यामिति षत्वं अस्मादेव वचनात् सप्तम्याअलुक् कुष्ठले अयानां कौ स्थले जं०म०

भूतले भृङ्गे विकुब्जमित्यादिना षत्वं दिविष्ठां दिवि तिष्ठतीति सुपि स्थ इति कः तत्पुरुषे कृतिबहुलमिति सप्तम्या अलुक् गगनस्थां तारामिव निर्मलां अम्बाम्बेत्यादिना षत्वं ॥ ८४ ॥

भ॰ सर्व्वेत्यादि । मैथिलीं कीदृशीं सर्व्वनारीगुणैः प्रष्ठां यावन्तो नारीगुणास्तैरग्रगामिनीं मनीषादित्वात् प्रात्स्थोऽग्रगे षत्वं विष्टरस्थां आसनस्थां मनीषादित्वात् वृक्षासनयोर्विष्टर इति रूपसिद्धिः गविष्ठिरां वाचिस्थिरां सप्तमीतत्पुरुषः अभिधानान्न लोपः मनीषादित्वात् गवियुधिभ्यांस्थिरस्य षत्वं कुष्ठले भूस्थले स्थितां मनीषादित्वात् अमिपरिविकुभ्यः स्थलस्य षत्वं दिविष्ठां तारामिव निर्म्मलां दिवि तिष्ठतीति सुपजनादिति डः अभिधानात् सप्तम्या अलुक् स्त्रियामाप् मनीषादित्वात् षत्वं ॥ ८४ ॥

सुषाम्नीं सर्व्वतेजःसु तन्वीं ज्योतिष्टमां शुभां । निष्टपन्तीमिवात्मानं ज्योतिःसात्कुर्व्वतीं वनं ॥ ८५ ॥

ज॰म॰ सुषेत्यादि । शोभनं साम यस्या इति विगृह्य अनउपधालोपिनोऽन्यतरस्यामिति ङीप् सुषामादिषु चेति षत्वं सुष्ठु प्रियम्वदामित्यर्थः तन्वीं कृशां शुभां कल्याणीं सर्व्वतेजस्सु ज्योतिष्टमां अतिशयेन ज्योतिष्मतीं ह्रस्वात्तादौ तद्धित इति षत्वं एवञ्च कान्त्या निष्टपन्तीमिवात्मानं सन्तापयन्तीमिवात्मानं निसस्तपतावनासेवन इति षत्वं वनं ज्योतिःसात्कुर्व्वन्तीं अज्योतिर्ज्योतिः कुर्व्वाणां कार्त्स्न्येन दीपयन्तीमित्यर्थः कार्त्स्न्ये सातिप्रत्ययः तत्र मुनि

विसर्जनीयस्येत्यादिना प्राप्तस्य षत्वस्य सात्पदाद्योरिति प्रतिषेधः युष्मदित्यादिनोदाहृतं छान्दसत्वात्॥ ८५॥

सुषाम्नीमित्यादि। पुनः कीदृशीं मैथिलीं सुषाम्नीं प्रियम्वदां भ० शोभनं साम यस्यादिति नान्तत्वात् स्त्रियामीप् निःसुदुर्भ्यःसामसेधसन्धीनामिति षत्वमिति परः स्वमते मनीषादित्वात् तन्वीं कृशां गुणादोतदिति पचे ईप् सर्व्वज्योतिःसु मध्ये ज्योतिष्टमां प्रकृष्टप्रकाशरूपां खोकोर्धादिति षत्वं शुभां कल्याणयुक्तां आत्मानं निष्टपन्तीमिव सङ्कन्तापयन्तीमिव हनूमद्दर्शनात् तापस्य नैरर्थ्याभावात् निरस्तपोसकत्सेवनेदति षत्वमिति परः स्वमते मनीषादित्वात् तापस्य सकृत्सेवनमत्र विवचितं वनं ज्योतिःसात्कुर्वतीं कार्त्स्न्येन दीपयन्तीमित्यर्थः कार्त्स्न्याय स्थोःसम्पद्यकादाविति चसात् किसादित्यादौ सादर्ज्जनात् न षत्वं॥ ८५॥

मधुसाद्भूतकिञ्जल्कपिञ्जरभ्रमराकुलां। उल्लसत्कुसुमां पुण्यां हेमरत्नलतामिव॥ ८६॥

मध्वित्यादि। मधुसाद्भूतकिञ्जल्कं कार्त्स्न्येन मधुतामापन्नं ज०म० यत्किञ्जल्कं पुष्पकेसरं तन्मधुसाद्भूतकिञ्जल्कं आदेशप्रत्यययोरिति प्राप्तस्य पूर्व्ववत्प्रतिषेधः तेन पिञ्जराः पिङ्गलाः ये भ्रमराः तैराकुलां उल्लसत्कुसुमां चलत्पुष्पां हेमरत्नलतामिव यथा हेमरत्नमयीं कल्पतरुलतां पुण्यां पवित्रान्तद्वत्तामपीत्यर्थः॥८६॥

भ॰ मधुत्वादित्यादि। पुनः कीदृशीं हेमरत्नलतामिव कल्पतरु लतामिव पुण्यां पवित्रां उत्तमामित्यर्थः हेमरत्नलतां कीदृशीं कार्त्स्न्येन मधुतामापन्नेन किञ्जल्केन पुष्पकेशरेण पिङ्गला ये भ्रमरास्तैराकुलां व्याप्तां अत्रापि सादृश्यमात्र फलं उत्तमत्कुसुमां राजपुत्रीं॥ ८६॥

विलोचनाम्बु मुञ्चन्तीं कुर्व्वाणां परिषेसिचां। हृद यस्येव शोकाग्निसन्तप्तस्योत्तमव्रतां॥ ८७॥

ज॰म॰ विलोचेत्यादि। विलोचनाम्बु अस्रु मुञ्चन्तीं विक्षिपन्तीं हृद यस्य शोकाग्निसन्तप्तस्य परिषेसिचां भृशं निर्व्वाणमिव कुर्व्वाणामैक्ष तेति पूर्व्वेण सम्बन्धः सिचेर्यङन्तात् स्त्रीलिङ्गे भावे अकारप्रत्ययः उपसर्गादित्यादिना अभ्यासव्यवायेऽपि प्राप्तस्य षत्वस्य सिचोय ङीति प्रतिषेधः उत्तमव्रतां पतिव्रतात्वात्॥ ८७॥

भ॰ विलोचनेत्यादि। विलोचनाम्बु मुञ्चन्तीं अस्रु क्षिपन्तीं शोक रूपाग्निसन्तप्तस्य हृदयस्य परिषेसिचां पुनःपुनरतिशयेन वा सेचनं कुर्व्वाणामिव अग्निनिर्व्वाणाय जलसेकः क्रियत इत्युत्प्रेक्षा सिचोयङ्लुकि संज्ञाद इति अः स्त्रियामाप् गोकइत्यादौ षयङ् सिचेति यङवर्ज्जमात्र फलं उत्तमव्रतां पतिव्रतात्वात् ईदृशीं मैथिलीमैक्षतेति सम्बन्धः॥ ८७॥

दृष्ट्वा तामभनग्वृक्षान् द्विषोऽमर्ष परिषेधतः। परिस स्तान् विचिक्षेप क्रुद्धः स्वयमिमानिव॥ ८८॥

दृष्ट्वेत्यादि। तां दृष्ट्वा वृक्षानभनक् चूर्णितवान् द्विषः शत्रून् परिषेधतः आगच्छतः घ्नन् हिंसन् पूर्व्ववत्प्राप्तस्य षेधतेर्गताविति प्रतिषेधः परितस्य समन्तादुद्विचिक्षेप उन्मूलितवान् लिटः संयोगादित्वादकित्त्वे गुणः क्रुद्धः स्वयमिव साक्षादिवानिलः॥ ८८॥ ज॰म॰

दृष्ट्वेत्यादि। अयं तां सीतां दृष्ट्वा वृक्षान् अभनक् भग्नवान् किङ्कुर्व्वन् द्विषः शत्रून् घ्नन् हिंसन् कीदृशान् परिषेधतः सर्व्वतोगच्छतः सीकद्रत्यादौ अगतिषेधेति गत्यर्थवर्ज्जनात् न षत्वं अयं तान् वृक्षान् परितः समन्तात् प्रचिक्षेप क्षिप्तवान् क्रुद्धः सन् स्वयं साक्षात् अनिलइव॥ ८८॥ भ॰

अप्रतिस्तब्धविक्रान्तमनिस्तब्धोमहाहवे। विसोढवन्तमस्त्राणि व्यतस्तम्भद्घनध्वनिः॥ ८९॥

अप्रेत्यादि। घनध्वनिर्मेघनादः अनिस्तब्धोऽनभिभूतः अप्रतिस्तब्धविक्रान्तं अनभिभूतविक्रमं कपि स्तम्भेरिति प्राप्तस्य षत्वस्य अप्रतिस्तब्धा-निस्तब्धौ चेति प्रतिषेधनिपातनं अस्त्राणि महाहवे विसोढवन्तं सोढइति प्रतिषेधः व्यतस्तम्भत् निष्पादितवान् एवं नयकोऽवष्टभ्नाति योऽयं स्तम्भेर्णन्तस्य स्तम्भयितुमहा शक्नोति षत्वप्रतिषेधः॥ ८९॥ ज॰म॰

अप्रेत्यादि। घनध्वनिर्मेघनादः अप्रतिस्तब्धविक्रान्तं अनभि[illegible]मं हनूमन्तं [illegible]स्तम्भत् निश्चलं कृतवान् कीदृशः अनिस्तब्धः अनभिभूतः कीदृशे महायुद्धे अस्त्राणि विसोढवन्तं सहेः भ॰

सवतुः वेमसहेति वेमत्वात् नेम्ङीश्वीदिति नेम् होढः सवर्वाेऽ दोढीति श्रोत्वं गीकइत्यादौ श्रनोङ्सहेति श्रोङ्वर्ज्जनान्न षत्वं स्तम्भेः प्रेरणे ञिः ञिश्रीत्यङ् गीकइत्यादौ श्रनङ्स्तम्भेति श्रङ्वर्ज्जनान्न षत्वं प्रतिस्तम्भनिस्तम्भयोः प्रतिनिशब्दौ उपसर्गप्रतिरूपकौ तेन गीकइत्यादिना न षत्वं प्रतिनिभ्यां स्तम्भस्येति षत्वनिषेधार्थपरसूत्रं ॥ ८६ ॥

ते विज्ञायाभिसोष्यन्तं रक्षौरक्षांसि सव्यथाः। अन्यै रप्यायतं मेवुर्वरत्राशृङ्खलादिभिः ॥ ९० ॥

ज०म० ते इत्यादि। राक्षसाः ये मारुतिं नेष्यन्तः रक्षैः रक्षांसि विसोष्यन्तं अभिषेक्ष्यन्तं कपिं सुनोतेः स्यसनोरिति षत्वं यद्याक्षेप्यमाणेन नीयेत अवश्यं राक्षसान् रक्षैः सोष्यतीति विज्ञाय सव्यथाः सभयाः सन्तः अन्यैरपि वरत्राशृङ्खलादिभिरायतं दीर्घं नेड़ः बध्नन्ति स्म णहबन्धनइत्यस्य लिटि रूपं ॥ ९० ॥

म० ते इत्यादि। ते मारुतिं नयन्तोराक्षसाविज्ञाय हनूमत्पराक्रममित्यर्थात् सव्यथाः सभयाः सन्तः ब्रह्मास्त्रबन्धे सत्यपि अन्यैरपि वरत्राशृङ्खलादिभिरायतं दीर्घं कपिं मेवुः बध्नन्ति स्म मवनहे नहोबन्धनं यां रूपं कीदृशं रक्षैः स्वगात्रसम्भवैरक्षांसि अभिसोष्यन्तं अभिषेक्ष्यन्तं गीकइत्यादौ अस्याकसुनेति स्याक्रवर्ज्जनान्न षत्वं वरत्रा चर्म्मरज्जुः ॥ ९० ॥

विषसादैन्द्रजिद्बुद्ध्वा बन्धे बन्धान्तरक्रियां। दिव्य बन्धोविषहते नापरं बन्धनं यतः॥ ९१॥

इति षत्वाधिकारः।

विषेत्यादि। बन्धे दिव्ये बन्धान्तरक्रियां बन्धनविशेषकरणं बुद्ध्वा इन्द्रजित् विषसाद विषादमुपगतः नियतं दिव्यबन्धं मुक्तवानिति यतोदिव्यबन्धोनापरं स्वयं बन्धनं विषहते अतोविषसादेति योऽयं सदिस्वञ्जोःपरस्य लिटि षत्वप्रतिषेधः पूर्व्वस्य तु सदिरप्रतेरिति भवत्येव विषहतइति न प्रतिषेधः तत्र सोढरूपस्य ग्रहणात्। इति मूर्द्धन्याधिकारः॥ ९१॥ ज॰म॰

विषेत्यादि। इन्द्रजित् बन्धे बन्धान्तरकरणं बुद्ध्वा ज्ञात्वा विषसाद विषादं गतवान् गीकइत्यादिना षत्वे प्राप्ते सदिस्वन्जोश्चांनाखेरिति प्रकृतेः षत्वनिषेधः खेस्तु षत्वमेव यतोयस्मात् दिव्यबन्धोऽपरं बन्धनं न विषहते गीकइत्यादिना षत्वं। इति षत्वाधिकारः॥ ९१॥ भ॰

मुष्णन्तमिव तेजांसि विस्तीर्णोरस्थलं पुरः। उपसेदुर्दशग्रीवं गृहीत्वा राक्षसाः कपिं॥ ९२॥

इतःप्रभृति षत्वमधिकृत्याह। मुष्णेत्यादि। राक्षसाः पुरः कपिमादाय दशग्रीवमासेदुः ढौकितवन्तः नतु दर्शनगोचरं गताः अग्रभागतलात् कीदृशं तेजांसि मुष्णन्तं खण्डयन्तमिव विस्तीर्णोरस्थलं विस्तृतवक्षं तत्र रषाभ्यां णोपइति षत्वं॥ ९२॥ ज॰म॰

भ० अथ णत्वाधिकारः। मुष्णन्तमित्यादि। राक्षसाः कपिं गृहीत्वा पुरोऽपतोदशग्रीवमुपसेदुः कीदृशं तेजांसि मुष्णन्तमिव अपह रन्तमिव स्वतेजसाऽभिभवात् विसीर्णवक्षसं उभयत्र ... क्षोभ इति णत्वं॥ ६२॥

वक्रधाभिन्नमर्म्माणोभीमाः खरणसादयः। अग्रे वणं वर्त्तमाने प्रतीच्यां चन्द्रमण्डले॥ ६३॥

ज०म० वक्रित्यादि। वानरद्विषा राक्षसा ऊचुरिति वक्ष्यमाणेन सम्बन्धः कीदृशाः किमूचुरित्याह वक्रधा भिन्नमर्माणइति यानि काला न्तरे प्राणहराणि मर्म्माणि तानि वक्रधा भिन्नानि येषामिति बहु व्रीहिः अट्पवर्गसमुदायस्य व्यवधानादट्कुप्वाङित्यादिना णत्वं खरणसादयः खरस्येव नासिकायस्येति अञ्नासिकायाइत्यच् नसादेशश्च पूर्व्वपदात्संज्ञायामिति णत्वं खरणसादयोराक्षसाः वनस्याग्रे अग्रेवणं राजदन्तादित्वात्परनिपातः वनं परगेति णत्वं प्रतीच्यान्दिशि यद्वनन्तस्य वनस्याग्रे उपरि वर्त्तमाने चन्द्रमण्डले प्रभातसन्ध्यायामित्यर्थः॥ ६३॥

भ० वक्रधेत्यादि। वानरद्विषोराक्षसाइत्यूचुरित्यग्रिमश्लोकेना न्वयः कीदृशाः वक्रधा भिन्नानि मर्म्माणि जीवितस्थानानि येषां तादृशाः पूर्वोऽदात्क्षेइत्यादिना अवक्रमकारेपीति णत्वं भीमा भयानकाः खरस्येव नसा नासिका येषां ते आद्योयेषां ते तथा पूर्वदत्याक्षुनतहादित्यस्य योगविभागात् णत्वं नसादेश

रूपमिदं लपनं वदनं तुण्डमाननं नासिका नसेति रभसः नसा नासा च नासिकेति कोषान्तरं खरखुराभ्यां नासिकायानसनसा विति परः किमूचुरित्याह चन्द्रमण्डले प्रतीच्यां पश्चिमायां दिशि वनस्याग्रे वर्त्तमाने सति अनेनोद्यानं निर्वणं वनशून्यं कृतमिति परश्लोकेनान्वयः वनस्याग्रे अग्रेवणं तस्मिन् व्यंपूर्व्वमिति अग्रे शब्दस्य पूर्व्वनिपातः अग्रेवणमिति पाठे देशाध्वकालेति ठसंज्ञा अग्रेवणमित्यनुस्वारवत् पाठोऽच प्रमादकृतः सप्तम्यन्तत्वादिति विद्याविनोदः अग्रेवणइति खरणत्वं अग्रे मिश्रकासारिका शिभ्रकापुरगाकोटराभ्योवनस्य संज्ञायामिति परसूत्रे संज्ञाया मिति समत्वपरमुक्तं तेनासंज्ञायामपि णत्वं स्यादिति बोध्यं अग्रेव णेवर्त्तमाने प्रतीच्यां चन्द्रमण्डलइत्यनेन प्रातःसन्ध्या सूचिता ॥ ९३ ॥

निर्व्वणं कृतमुद्यानमनेनाम्रवणादिभिः। देवदारु वनामिश्रैरित्यूचुर्व्वानरद्विषः ॥ ९४ ॥

निर्व्वेत्यादि। उद्यानं संनिवेशविशेषः निर्व्वणं वृक्षरहितं अनेन कपिना कृतं आम्रवणादिभिरुपलक्षितं उभयत्रापि प्रनिरन्तेति णत्वं देवदारुवनामिश्रैरिति विभाषौषधीत्यादिना णत्वं न भवति द्व्यचरत्र्यचरेभ्यइति वक्तव्यमिति वचनात् इत्येवमूचुः ॥ ९४ ॥ ज०म०

निर्व्वणमित्यादि। कीदृशमुद्यानं आम्रवणादिभिरुपलक्षितं कीदृशैः देवदारुवनामिश्रैः देवदारुवनमयैः निर्व्वणाम्रवणयोः भ०

खरणसवणत्वं देवदारुवनेत्यत्र योगविभागस्य कचिद्विषयात्व
णत्वं परमते आम्रशरपीयूक्षशरखदिरनिःप्रकार्ष्याकारिक्षुभोव
नस्य णत्वं तथा ईरिकाभङ्गिकातिमिरवर्ज्जं द्वित्त्यच्चौषधिस्य
पूर्व्वावनस्य णत्वं देवदारुशब्दस्य चतुरचत्वाद्देवदारुवनामिश्रै
रित्यत्र न णत्वं॥ ६४॥

उपास्थिषत संप्रीताः पूर्व्वाह्णे रोषवाहणं। राक्षसाः
कपिमादाय पतिं रुधिरपायिणां॥ ६५॥

ज०म० उपेत्यादि। ते राक्षसाः पतिमुपास्थिषत उपागताः दृष्टिपथं
गतादृत्यर्थः उपाद्देवपूजेत्यादिना सङ्गतिकरणे तङ् स्थाघ्वो
रिच सम्प्रीताः हृष्टाः तेषामनुज्ञातप्रवेशत्वात् पूर्व्वाह्णे प्रत्यूषसि
अह्नोऽदन्तादिति णत्वं रोषवाहणं कपिमादाय रोषस्यासनीकृतं
वाहनमाहितादिति णत्वं रोषस्य तत्राधीयमानत्वात् पतिं रुधि
रपायिणां राक्षसानां पानं देशदृति णत्वं॥ ६५॥

भ० उपेत्यादि। राक्षसाः कपिमादाय संप्रीताः सन्तः पूर्व्वाह्णे
प्रत्यूषसि रुधिरपायिनां राक्षसानां पतिं रावणं उपास्थिषत
उपगताः मैत्राध्वसङ्गाराधदृति सङ्गे मं स्थादोर्ङ्किस्टीमे दृति ङिः
गुणाभावश्च मात्नोऽदनतदृत्यत् कपिं कीदृशं रोषवाहणं आरूढ
क्रोधं पूर्व्वाह्णदृति प्राम्बकोणोऽतोऽह्नस्येति णत्वं रोषवाहणमिति
खरणसवणत्वं परमते वाह्यपुर्व्वाह्नस्य णत्वं रोषस्य वाह्यत्वात्

रुधिरपायिणामिति रुधिरं रक्तं पिबन्तीति ग्रहादित्वात् णिन्
सुपोऽह्रान्त इत्यादौ नैकाचकोस्त्विति पाक्षिकं णत्वं असृक्पाणा
धिपं तूर्णं कपिमादाय राक्षसा इति क्वचित्पाठः तदा असृक्
प्रधानं पानं येषां तेषामधिपं असृजो पानं यत्र सोऽसृक्पाणो
देशः तस्याधिपमिति वा असृगेव पानं पेयं येषामिति वा करणस
वणत्वं देशे पानस्य णत्वं नित्यं भावकरणयोः पानस्य वा णत्व
मिति परः ॥ ९५ ॥

सुरापाणपरिक्षीवं रिपुदर्पहरोदयं। परस्त्रीवा
हिणं प्रापुः साविष्काराः सुरापिणः ॥ ९६ ॥

सुरेत्यादि। सुरापाणात्परिक्षीवं मत्तं रावणं वा भावकरण   अ०म०
योरिति णत्वं रिपुदर्पहर उदयो वृद्धिर्यस्य तं परस्त्रियं वाह
यितुमुपभोक्तुं शीलं यस्य तं परस्त्रीवाहिणं प्रातिपदिकान्त इति
णत्वाभावः पाक्षिकः प्रापुः सुष्ठु निकटीकृताः साविष्काराः साह
ङ्काराः सुरापिणः सुरापैर्युक्ताः सुरां पिबन्तीति गापोष्टक् ते येषां
सन्तीति मत्वर्थीयः एकाजुत्तरपदे ण इति णत्वं उत्तरस्य प्राति
पदिकान्तस्यैकाच्त्वात् ॥ ९६ ॥

सुरेत्यादि। राक्षसा रावणं प्रापुः कीदृशं सुरापाणेन परि   अ०
क्षीवं मत्तं करणस्य वणत्वं भावकरणयोः पानस्य वा णत्वमिति परः
रिपूणां दर्पहारक उदयो यस्य तं परस्त्रियं वोढुं उपभोक्तुं शीलं
यस्य तं सुपीह्रान्तीद्रत्यादिना नैकाचकोस्त्विति पक्षे णत्वं परस्त्री

कामिणमिति पाठे तेनैव कवर्गवत्त्वात् नित्यं णत्वं कीदृशाः शावि
ङ्कारा: शाङ्कारा: सुरापिणः सुरापैर्युक्ता: सुरां पिबन्तीति
सुरापाः इनजनादिति उः ततोऽस्त्यर्थे इन् पूर्ववदेकाच्त्वात्
नित्यं णत्वं ॥ ९६ ॥

संहर्षयोगिणः पादौ प्रणेमुस्त्रिदशद्विषः। प्रहिण्व
न्तोहनूमन्तं प्रमीणन्तं द्विषन्मतीः ॥ ९७ ॥

ज॰म॰ संहेत्यादि। संहर्षयोगिणः स्पर्द्धायोगिनः कुमतिचेति णत्वं ते
अन्योन्याभिभवेच्छया त्रिदशद्विषोरावणस्य पादौ प्रणेमुः उप
सर्गादसमासेऽपीति णत्वं हनूमन्तं प्रहिण्वन्तः ढौकयन्तः द्विष
न्मतीः शत्रुबुद्धीः प्रमीणन्तं अभिभवन्तं मीञ्हिंसायां क्रैयादिकः
हिनुमिनाइति णत्वं ॥ ९७ ॥

भ॰ समित्यादि। राक्षसास्त्रिदशद्विषोरावणस्य पादौ प्रणेमुः
प्रणतवन्तः प्राद्वनोणइत्यादिना नादिधातुत्वाण्णत्वं संहर्षयो
गिणः महाहर्षयुक्ताः कुमतिचइत्यादिना कवर्गवत्त्वात् नित्यं णत्वं
हनूमन्तं प्रहिण्वन्तः प्रापयन्तः कीदृशं द्विषन्मतीः शत्रुबुद्धीः प्रमी
णन्तं अभिभवन्तं प्राद्वनोणइति मीनाहिन्वोर्णत्वं ॥ ९७ ॥

प्रवपाणि शरीरो भूमौ वानरस्य वनच्छिदः। आम
न्त्रय[illegible]: समितिं रक्षसां पतिः ॥ ९८ ॥

प्रवेत्यादि। अस्य वानरस्य वनछिदः शिरोभूमौ प्रवपाणि ज॰म॰
छित्वा पातयामि आनिलोचिति पत्वं वपिरत्र पातने वर्त्तते संक्रुद्धः
रक्षसां पतिः स्वामी समितिं समूहं आमन्त्रयत भाषितवान्॥९८॥

प्रवेत्यादि। रक्षसां पतीरावणः संक्रुद्धः सन् समितिं सभां भ॰
आमन्त्रयत उक्तवान् किन्तदित्याह अहं वनच्छिदोवानरस्य शिरो
भूमौ प्रवपाणि छित्वा पातयामीत्यर्थः वपिरत्र प्रहरणे आम्ब
न्नोणइति आनिपोणत्वं॥९८॥

प्रण्यगादीत् प्रणिघ्नन्तं घनः प्रणिनदन्निव। ततः
प्रणिहितः स्वार्थे राक्षसेन्द्रं विभीषणः॥ ९९ ॥

प्रण्येत्यादि। ततउत्तरकालं विभीषणोराक्षसेन्द्रं प्रणि ज॰म॰
घ्नन्तं हन्तुमारभमाणं प्रण्यगादीत् वक्तुं प्रवृत्तः घनइव प्रणिन
दन् गर्जन् स्वार्थे राक्षसेन्द्रस्य प्रणिहितोऽवहितमनाः सर्व्वत्र
नेर्गदेति णत्वं॥९९॥

प्रण्येत्यादि। ततोऽनन्तरं हनूमन्तं प्रणिघ्नन्तं हन्तुमारभ भ॰
माणं राक्षसेन्द्रं विभीषणोघनइव प्रणिनदन् गर्ज्जन् प्रण्यगादीत्
वक्तुं प्रवृत्तः स्वार्थे रावणप्रयोजने प्रणिहितः सावधानः सर्व्वत्र
प्राग्वन्नोणइति णत्वं॥९९॥

प्रणिशाम्य दशग्रीव प्रणियातुमलं रुषं। प्राणजा
नीहि हन्यन्ते दूतादोषे न सत्यपि॥१००॥

ज॰म॰ प्रणीत्यादि। हे दशग्रीव प्रणिशाम्य दीर्घ त्यज लिटि ख्मनि रूपं शमामष्टानामिति दीर्घः दूषं प्रणियातुमलं न किञ्चित् पूर्व्व वत्णत्वं प्रणिजानीहि अवगच्छ सत्यपि दोषे न हन्यन्ते दूता इति जानातेः शेषधातोरुपदेशावस्थायां अकखाद्यषान्तत्वात् शेषे विभाषेत्यादिना णत्वं ॥ १०० ॥

भ॰ प्रणीत्यादि। हे दशग्रीव प्रणिशाम्य शान्तोभव शमेर्ल्यो रूपं यन्थोशमादिमिदइति दीर्घः इलोपः दूषं क्रोधं प्रणियातुं आश्रयितुं अलं नार्हसि निषेधार्थोऽलं शब्दः उभयत्र शाम्यतोश्च इति णत्वं त्वं प्रणिजानीहि अवगच्छ पूर्व्ववदकखाद्यषान्तात्मने रिति पचे णत्वं दोषे सत्यपि दूता न हन्यन्ते नीतिशैरित्यर्थात् ॥ १०० ॥

प्राणयन्तमरिं प्रोचे राक्षसेन्द्रोविभीषणं। प्राणिणि षुर्न पापोऽयं योऽभाङ्क्षीत्प्रमदावनं ॥ १०१ ॥

ज॰म॰ प्राणेत्यादि। अरिं कपिं यः प्राणयति जीवयति तं प्राणयन्तं विभीषणं अवप्राणने अनचेत्यस्य रूपं अनितेरिति णत्वं प्रोचे राक्षसेन्द्रः न प्राणिणिषुः न जीवितुमिच्छुरयं पापः उभौ साभ्यासस्येति णत्वं द्वयोरपि योऽभाङ्क्षीत् भग्नवान् प्रमदावनं हन्तव्य इत्या ख्यः॥ १०१ ॥

भ॰ प्राणेत्यादि। अरिं हनूमन्तं प्राणयन्तं जीवयन्तं विभीषणं राक्षसेन्द्रः प्रोचे उक्तवान् अनितेर्ण्यन्तस्य रूपं किमुक्तवानित्याह

कथं पापोऽदुराचारोऽन प्राणिषिषुर्न जीवितुमिच्छुः सनितेः सनि रूपं प्राप्वणोपदत्यादिना वालनेति विभाषया णत्वं योऽयं मम द्रावनं प्रभाङ्क्षीत् भग्नवान् त्वां रूपं ॥ १०१ ॥

प्राघाणिषत रक्षांसि येनाप्तानि वने मम। न प्रहण्मः कथं पापं वद पूर्व्वापकारिणं ॥ १०२ ॥

प्राघेत्यादि। मम आप्तानि अक्षप्रभृतीनि येन वने प्राघाणिषत मारितानि कर्म्मणि लुङ् चिण्वदिट् हो हन्तेरिति घत्वं तपर परिछिन्नाकारपूर्व्वस्य नकारस्य हन्तेरत्पूर्व्वस्येति णत्वं न भवति तं पूर्व्वापकारिणं पापं कथं न प्रहण्मः न मारयामइति वद कथय त्वोर्व्वेति णत्वं ॥ १०२ ॥ अ॰म॰

प्राघेत्यादि। येन ममाप्तानि रक्षांसि अक्षप्रभृतीनि रणे प्राघा णिषत मारितानि कर्म्मणि टी हनयद्दमच इति मिण् खेरौघो ञ्णितिचेनि घः हनोऽह्नोऽप्नोऽणन इत्यच प्रद्रत्युपलक्षणं हस्रान्यथा ले णत्वाभावइति बोध्यं तेन घत्वेऽपि णत्वनिषेधः हो घत्वे इति णत्व निषेधार्थं परसूत्रं तं पूर्व्वापकारिणं पापं कपिं कथं वयं न प्रहण्मः इति त्वं वद प्राप्वणोपदत्यादौ मवान्तहनइति पचे णत्वं पूर्व्वा पकारिणमिति भुर्णदत्यादिना कवर्गवत्वात् नित्यं णत्वं ॥ १०२ ॥ भ॰

वेश्मान्तर्व्वर्णनं कोपान्मम शत्रोः करिष्यतः। मा कार्षीरन्तरयणं प्रयाणार्थमवेहमुं ॥ १०३ ॥

ज०म० वेश्मेत्यादि। अचोर्वेश्मान्तः गृहमध्य एव हननं कोपात् मम करिष्यतः अन्तरदेशइति नकारस्य णत्वं हननस्याभावरूप स्यादेशत्वात् अन्तरयणमन्तरायणं विघातं मा कार्षीः अयन स्येति णत्वं प्रयाणार्हं दीर्घप्रस्थानार्हममुमवेहि अवगच्छ कृत्यच इति णत्वं अचउत्तरस्य नकारस्य कृत्स्थत्वात्॥ १०३॥

भ० वेश्मेत्यादि। वेश्मान्तर्गृहमध्ये अचोर्हननं करिष्यतोमम अन्तरयणं विघ्नं त्वं मा कार्षीः न कुरु हे विभीषण अमुं वानरं प्रयाणार्हं दीर्घप्रस्थानार्हं मरणयोग्यं अवेहि जानीहि अन्तर्हण नमिति प्राग्वलोपइति णत्वं अन्तरोऽदेशेहनइति णत्वमिति परः अन्तरयणमिति स्वरणमवणत्वं अन्तरोऽदेशेऽयनस्येति णत्वमिति परः प्रयाणार्हमिति नोऽचोऽन्तरदुर्गेरिति णत्वं॥ १०३॥

प्रहीणजीवितं कुर्य्युर्ये न शत्रुमुपस्थितं। न्याय्याया अपि ते लक्ष्म्याः कुर्व्वन्त्याशु प्रहापणं॥ १०४॥

ज०म० प्रहीत्यादि। शत्रुमुपस्थितं प्रहीणजीवितं ये न कुर्य्युः ओहाते रोदितश्चेति निष्ठादेशनकारस्य पूर्व्ववत्त्वं ते न्याय्याया अपि कुल क्रमादागताया अपि लक्ष्म्याः प्रहापणं त्याजनं कुर्व्वन्ति णेर्विभा षेति णत्वं॥ १०४॥

भ० प्रहीत्यादि। ये उपस्थितं शत्रुं प्रहीणजीवितं त्यक्तप्राणं न कुर्य्युः ओहाक् त्यागे हामागेहागिति की ओदित्वात् कस्य नः

दन्तच्छदे प्रज्वलिताग्निकल्पे ताम्बूलरागस्तृणभा रतुल्यः। न्यस्तः किमित्यूचुरुपेतभावा गोष्ठीषु नारी स्तरुणीर्युवानः॥ २३॥

ज०म० दन्तच्छद इत्यादि। प्रज्वलिताग्निकल्पे स्वभावलोहितत्वात् दन्तच्छदे ओष्ठे ताम्बूलरागः किमिति न्यस्तः तृणभारतुल्यः निष्प्रयोजनत्वात् इत्येवमूचुर्युवानः प्रातरित्यर्थात् उपेतभावाः जातानुरागाः गोष्ठीषु स्थिता नारीस्तरुणीरिति॥ २३॥

भ० दन्तेत्यादि। दन्तच्छदे ओष्ठे ताम्बूलरागः किमर्थं न्यस्तः कीदृशे प्रज्वलितवह्निसदृशे स्वभावतो लोहितत्वादस्य हाहक स्याच कीदृशः तृणभारसमो निष्प्रयोजनत्वादत्युद्दीपकत्वाच वह्नौ तृणप्रक्षेपोभृशमुद्दीपको भवति इत्येवं युवानस्तरुण्या उपेत भावा उपगतरागाः सन्तस्तरुणीनारीगोष्ठीषु स्त्रीसभासु स्थिता जगुः॥ २३॥

युग्मकं।

सुखावगाहानि युतानि लक्ष्म्या शुचीनि सन्तापहराण्युरूणि। प्रबुद्धनारीमुखपङ्कजानि प्रातः सरांसीव गृहाणि रेजुः॥ २४॥

ज०म० सुखावगाहानीत्यादि। प्रातः प्रभाते गृहाणि सरांसीव रेजुः सुखावगाहानि निरुपद्रवत्वात्सुखेनावगाह्यन्ते युतानि लक्ष्म्या देवतारूपया शुचीनि पवित्राणि सन्तापहराणि घर्मादिक्लेशाप

शारीणि वरूणि महान्ति प्रबुद्धानि विनिद्राणि नारीमुखान्येव पङ्कजानि यत्रेति ॥ २४ ॥

सुखेत्यादि। प्रातः प्रभातकाले गृहाणि सरांसीव रेजुः शोभ- भ० न्ते स्म कीदृशानि सुखहेतुरवगाहो यत्र तानि लक्ष्म्या सम्पत्त्या शोभया वा युतानि शुचीनि पवित्राणि सन्तापहराणि घर्मादि क्लेशापहारीणि वरूणि महान्ति प्रबुद्धानि विनिद्राणि नारी मुखान्येव पत्ते तानीव पङ्कजानि येषु ॥ २४ ॥

संमृष्टसिक्तार्च्चितचारुपुष्पैरामोदवद्रव्यकृतगन्ध भागैः। लक्ष्मीर्व्विजिग्ये भवनैः सभृङ्गैः सेव्यस्य देवै रपि नन्दनस्य ॥ २५ ॥

संमृष्टेत्यादि। देवैः सेव्यस्यापि नन्दनस्य लक्ष्मीर्भवनैः प्रात ज०म० र्व्विजिग्ये विजिता आदौ संमृष्टरजांसि अपनीतरजांसि पश्चा त्सिक्तानि पूर्व्वापरकालसमासः अर्च्चितानि पूजितानि प्रशस्तानि चारूणि शोभनानि पुष्पाणि येषु भवनेषु संमृष्टसिक्तानि च तानि अर्च्चितचारुपुष्पाणि चेति विशेषणसमासः आमोदवन्ति यानि द्रव्याणि चन्दनादीनि तैः सुगन्धभागएकदेशो येषां तैः गन्धस्ये तदेकान्तपदत्वादित्वं न भवति सभृङ्गैरामोदभृतत्वात् ॥ २५ ॥

संमृष्टेत्यादि। देवैरिन्द्रादिभिरपि सेव्यस्य नन्दनवनस्य लक्ष्मीः भ० सम्पत्तिः शोभा वा भवनैर्गृहैः प्रातर्विजिग्ये जिता कर्म्मणि ढो

कीदृशैः पूर्व्वं संसृष्टानि अपनीतरजांसि पश्चात् सिक्तानि संसृष्ट सिक्तानि पूर्व्वकालस्यापरकालेनेति कर्म्मधारयइति परः समस्ते एकार्थतात्स्थेव अर्च्चितानि पूजितानि चारूणि शोभमानानि पुष्पाणि येषु तानि पश्चात् संसृष्टसिक्तानि अर्च्चितचारुपुष्पाणि चेति पुनः कर्म्मधारयः आमोदवद्भिर्द्रव्यैश्चन्दनादिभिः सुग न्धाभागाएकदेशायेषां सुसुरभिपूतेरित्यादौ गन्धशब्दोगुण वाचीति टीकाकृद्वचनादभिधानाद्वा इप्रत्ययाभावः भृङ्गैरामो दानुसारिलाद्भ्रमरैः सह वर्त्तमानानि नन्दनमप्येवं भवति उदा त्तता गुणोऽसंसृष्टसिक्तेत्यादिभिर्व्विशेषणैर्योगात् यैर्व्विशेषणैर्यो गोयस्तु साम्यादुदात्तता ॥ ३५ ॥

अक्ष्णोः पतन्नीलसरोजलोभाद्भृङ्गः करेणाल्पधिया निरस्तः। ददंश ताम्राम्बुरुहाभिसन्धिस्तृष्णातुरः पाणितलेऽपि धृष्णुः ॥ ३६ ॥

ज०म० अक्ष्णोरित्यादि। नीलसरोजलोभात् नीलकमलमेतदित्य क्ष्णोः पतन्निलीयमानोभृङ्गः अल्पधिया अल्पबुद्धा कयाचित् करेण निरस्तः चिप्तः सन् ताम्राम्बुरुहाभिसन्धिः रक्तपद्ममेत दित्यभिसन्धिरभिप्रायोयस्य भृङ्गस्य स धृष्णुः प्रगल्भः पाणितले ऽपि ददंश दष्टवान् तामित्यर्थात् ॥ ३६ ॥

भ० अक्ष्णोरित्यादि। नीलसरोजमेतदिति मत्वा तल्लोभात् चक्षु षोः पतन् भृङ्गः कयाचिदल्पधिया मुग्धया करेण निरस्तः सन्

पाणितलेऽपि तां दृष्टेव दृष्टवान् यतः करं दृष्ट्वा रक्तपद्ममि त्यभिसन्धिरभिप्रायोयस्य कीदृशः तृष्णातुरः तृष्णाव्ययः धृष्णुः प्रगल्भः सौकुमार्य्यमत्र गुणः अह्नोः करस्य चोत्पलत्वेन निरूप णात् अनिष्ठुरत्वं यत् प्राह्णः सौकुमार्य्यं तदुच्यते॥ २६ ॥

विलोलतां चक्षुषि हस्तवेपथुं भ्रुवोर्व्विभङ्गं स्तनयुग्म वल्गितं। विभूषणानां क्वणितञ्च षट्पदोगुरुर्यथा नृत्यविधौ समादधे॥ २७॥

विलोलतामित्यादि। यथा गुरुर्नृत्याचार्य्योनृत्यकर्म्मणि अ०म० काञ्चिच्चक्षुषि विलोलतां चलतां हस्तवेपथुं हस्तकम्पं भ्रुवो र्विभङ्गं नतोन्नतिं स्तनयुग्मवल्गितं प्रचलितं भूषणानां क्वणितं शिञ्जितं जनयति तद्वत् षट्पदोऽपि तत्समादधे विहितवान् ॥२७॥

विलोलतामित्यादि। यथा गुरुर्नृत्याचार्य्योनृत्यकर्म्मणि भ० शिष्यायां कस्याश्चिच्चक्षुषि विलोलतां चाञ्चल्यं हस्तयोर्वेपथुं कम्पं भ्रुवोर्व्विभङ्गमन्यथाकरणं स्तनयुगलस्य वल्गितं चलनं विभूष णानामलङ्काराणां क्वणितं शिञ्जितं समादधे जनयति तथा षट्पदोऽपि समादधे कृतवान् भ्रमरबाधया काचिन्नृत्यमिव च कारेत्यर्थः प्रौढिरत्र गुणस्तुर्विलोलताप्रभृतिभिर्नृत्यस्य निर्व्वा हात् विवक्षितार्थनिर्व्वाहः काव्ये प्रौढिरिति स्मृता ॥ २७ ॥

अथानुकूलान् कुलधर्म्मसम्पदो विधाय वेशान् सुदिवः पुरीजनः। प्रबोधकाले शतमन्युविद्विषः प्रचक्रमे राजनिकेतनं प्रति॥ ३८॥

ज०म० अथानुकूलानित्यादि। अथानन्तरं पुरीजनो लङ्कानिवासि जनः प्रतिदिनमवाप्तकल्याणत्वात् सुदिवः सुप्रातेत्यादिना समासान्तनिपातनं च शास्त्रं कुलधर्म्मस्य पुरस्य या संपद्विभूतिः तस्या अनुकूलान् वेशान्नेपथ्यानि विधाय कृत्वा शतमन्युविद्विषो रावणस्य प्रबोधकाले राजनिकेतनं प्रत्यभिलक्ष्य प्रचक्रमे गन्तुं प्रवृत्तः प्रोपाभ्यां समर्थाभ्यामिति तङ्॥ ३८॥

भ० अथेत्यादि। अनन्तरं पुरीजनो लङ्कानिवासिजनो वेशान् विधाय कृत्वा शतमन्युविद्विषइन्द्रशत्रो रावणस्य प्रबोधकाले निद्राभङ्गसमये राजगृहं प्रति लक्ष्मीकृत्य प्रचक्रमे गन्तुं प्रवृत्तः प्रोपादारम्भे इति मं कीदृशान् कुलधर्म्मस्य कुलाचारस्य या सम्पद्विभूतिस्तस्या अनुकूलान् सदृशान् कुलोचितानित्यर्थः कीदृशः सुदिवः प्रतिदिनं प्राप्तकल्याणत्वात् शोभनं दिवा यस्य दिवाशब्दः सप्तम्यन्ताव्ययइति ये वदन्ति तन्मते शोभनं दिवा दिवसे कर्म्म यस्येति विग्रहः राजादित्वात् सुदिवो निपातितइति कालापाः खादिभ्यो दिवादेरिति सूत्रेण डप्रत्ययमाह क्रमदीश्वरः स्वमते स्वार्थेष्णः तस्याल्पविवक्षया वृद्धेरभावः॥ ३८॥

शैलेन्द्रशृङ्गेभ्यइव प्रवृत्तावेगाम्भसौघाः पुरमन्दिरेभ्यः। आपूर्य्य रथ्याः सरितोजनौघाराजाङ्गनाम्भोधिमपूरयन्त॥ ३९॥

शैलेन्द्रशृङ्गेभ्यइत्यादि। यथा जलानां पूराः शैलेन्द्रशृङ्गात् प्रवर्त्तन्ते तद्वत्पुरमन्दिरेभ्यः प्रवृत्ताः जनौघारथ्याः सरितइवापूर्य्य राजाङ्गनमम्भोधिमिवापूरयन्त पूरितवन्तः॥ ३९॥ ज०म०

शैलेन्द्रेत्यादि। यथा जलानां वारीणामोघाः पूराः प्रवाहाः शैलेन्द्रशृङ्गेभ्यः प्रवृत्ताः सरितोनदीरापूर्य्य वेगात् सागरं पूरयन्ति तथा जनौघाः लोकसमूहाः पुरमन्दिरेभ्योलङ्कागृहेभ्यः प्रवृत्तारथ्याः प्रतोलीरापूर्य्य वेगात् राजाङ्गनं रावणस्य चत्वरमपूरयन्त तवर्गपञ्चमोपान्तमङ्गनमिति विश्वः पृषोदरादित्वात् णत्वमिति पाणिनीयाः स्वमते मनीषादित्वादिभाषया णत्वं॥ ३९॥ भ०

प्रबोधकालात् त्रिदशेन्द्रशत्रोः प्रागूर्द्धशोषं परिशुष्यमाणाः। हीनामवाप्तस्य समत्वमीयुर्दास्यैरवश्यापद्यभिदृष्टाः॥ ४०॥

प्रबोधकालादित्यादि। त्रिदशेन्द्रशत्रोरावणस्य प्रबोधकालात्प्राक्पूर्व्वं ऊर्द्धशोषं परिशुष्यमाणाः राजाङ्गने ऊर्द्धभूता एव प्रबोधकाले शोषं शोष्यमाणाइति अन्तर्भावितण्यर्थोऽत्र शुषः ज०म०

एवञ्च कृत्वा कर्मण्यात्मनेपदं अन्ये परिशोष्यमाणाइति पिठे पठन्ति ऊर्द्ध्वमुखीति णमुल् हीनाः महान्तश्च सेवकाः समत्वं तुल्यत्वमीयुः द्वाःस्थैर्दौवारिकैः द्वारि तिष्ठन्तीति सुपिस्थइति कः खरवसानयोर्विसर्जनीयइति विसर्जनीयस्य सः अवज्ञया अनादरेण पक्ष्मभिरर्धं यद्चि तेनाक्ष्णा दृष्टाः ॥ ४० ॥

भ० प्रबोधेत्यादि । चिद्गोन्द्रस्य रावणस्य प्रबोधकालात् निद्राभङ्गसमयात् प्राक् पूर्व्वं हीनामहान्तश्च जनाः समत्वं तुल्यतां ईयुः प्राप्ताः दौवारिकैः सर्व्वेषां प्रवेशनिषेधात् कीदृशाऊर्द्ध्वशोषं परिशुष्यमाणाः ऊर्द्ध्वशोषमिति यदुक्तं तद्विशेषेण सुमुखादिशोषणं सूचनार्थं ऊर्द्ध्वात्शुषिपूरेः स्वार्थेण्यमिति परः किमयं करिष्यतीति चासात् शुष्कास्यकण्ठतालुकाआसन्नित्यर्थः द्वाःस्थैः दौवारिकैरवज्ञया अनादरेण यत्पक्ष्मं कृच्छ्रमचि चक्षुस्तेन दृष्टा द्वारि तिष्ठतीति द्वाःस्थः स्थनजनादिति डः मनीषादित्वाद्विभाषया विसर्गलोपः कादियुक्तशषसेलुम्वेति क्रमदीश्वरसूत्रं ॥ ४० ॥

गुरुरुचश्चलत्करकर्णजिह्वैरवश्यया शाङ्कुलिसंगृहीतैः । रत्नांस्यनायासहतैरुपास्थुः कपोलसीनालिकुलैर्गजेन्द्रैः ॥ ४१ ॥

ज०म० गुरुदर्पश्चदित्यादि

चलन्तः कराः कर्णजिह्वाश्च येषां गजेन्द्राणां तैरवज्ञया

अग्राङ्गुलिसङ्गृहीतैः पदाङ्गुष्ठाग्रेण यन्त्रस्थाने परिगृहीतैः अङ्गुले रग्रमिति राजदन्तादित्वात् पूर्व्वनिपातः अनायासहतैः शनैः शनैः प्रचोदितैः मत्तत्वात् कपोललीनालिकुलैः रक्षांसि उपास्थुः सेवामकार्षुः ॥ ४१ ॥

गुर्व्वित्यादि। कतिचिद्रक्षांसि राक्षसा गजेन्द्रैरुपास्थुः मत्तहस्तिनो गृहीत्वा रावणं सेवितवन्तः कीदृशैर्गुरवोऽलघवः उरवो महापरिमाणाः चञ्चन्तः चञ्चलाः कराः शुण्डाः कर्णाजिह्वाश्च येषां तैः अवज्ञया अनादरेण अङ्गुल्यग्रेण संगृहीतैः धृतैः अङ्गुलेरग्रं अग्राङ्गुलिरिति राजदन्तादिरिति परः स्वमते एकदेशेऽपि समुदायोपचारात् कर्मधारयः अग्रे अग्रतः स्थाने अङ्गुल्यापादाङ्गुष्ठेन संगृहीतैरिति केचित् अनायासेन हतैः शनैः शनैः प्रेरितैर्मत्तत्वात् कपोले लीनानि भ्रमरकुलानि येषां तैः ॥ ४१ ॥

निकृत्तमत्तद्विपकुम्भमांसैः संपृक्तमुक्तैर्हरयोऽग्रपादैः। आनिन्यिरे श्रेणिकृतास्तथान्यैः परस्परं वालधिसन्निबद्धाः ॥ ४२ ॥

निकृत्तेत्यादि। अन्यैः सेवार्थं हरयः सिंहाः आनिन्यिरे आनीताः निकृत्तानि मत्तद्विपकुम्भमांसानि यैरग्रपादैः अतएव संपृक्तमुक्तैः लग्नकुम्भमुक्ताफलैः उपलक्षिताः श्रेणीकृताश्चपङ्क्तयः

श्रेण्यः क्षताः श्रेण्यादयश्चेति सः परस्परं वालधिसंनिबद्धाः अन्योन्यस्य पुच्छेन संयताः ॥ ४२ ॥

भ० निकृत्तेत्यादि। अन्यैराक्षसैर्हरयः सिंहाश्चानिन्यिरे आनीताः तथा पूर्व्वापेक्षया अग्रपादैः पादाग्रैरुपलक्षिताः कीदृशैः निकृत्तानि छिन्नानि मत्तद्विपानां कुम्भमांसानि यैः संपृक्ताः संयुक्ताः गजकुम्भस्थमुक्ताश्च कीदृशाः श्रेणिक्षताश्चश्रेण्यः श्रेणयः क्षता अभिधानं नियामकमित्युक्तेः श्र्यर्थे श्रेण्यादेः क्षतादिना स मासः इति बोध्यं परस्परमन्योन्यस्य पुच्छेन बद्धाः षष्ठ्या अमादेशोलोकोपचारादिति विद्यासागरः क्रियाविशेषणमिति केचित् स्वमते मनीषादित्वात् ॥ ४२ ॥

उपेक्षिता देवगणैस्तसद्भिर्निशाचरैर्वीतभयैर्निकृत्ताः। तस्मिन्नदृश्यन्त सुरद्रुमाणां सजालपुष्पस्तवकाः प्रकीर्णाः ॥ ४३ ॥

।०म० उपेक्षितेत्यादि। सुरद्रुमाणां पारिजातानां सजालाः कलिकासहिताः पुष्पस्तवकाः वीतभयैर्निशाचरैर्निकृत्ताः छिन्नाः वीतदयैरिति पाठान्तरं तत्र किमेतैः स्थितैरिति निर्दयैः सजाला एव छिन्नाः छिद्यमानाश्च देवगणैस्तसद्भिरुपेक्षिताः वाश्चाशेत्यादि विकल्पेन श्यन् तस्मिन्नाजाङ्गने प्रकीर्णाश्चदृश्यन्त सेवकर्णनेन ॥ ४३ ॥

उपेचितेत्यादि। तस्मिन् राजाङ्गने सुरद्रुमाणां पारिजाता भ०
दीनां प्रकीर्णाविक्षिप्ताः जालेन कलिकया सहिताः पुष्पस्तवका
अदृश्यन्त दृष्टाः सेवकैरित्यर्थात् कीदृशाः नैषज्ञिस्तासं गच्छद्भि
र्देवगणैरुपेचिताः अरचिताः क्रमक्रमभ्रमेत्यादिना यसेर्विकल्पेन
श्यन् विहितइति पचे शप् वीतभयैर्विगतचासैर्निशाचरैर्निलूनाः
च्छिन्नाः वीतदयैरिति पाठे किमैतैः स्थितैरिति निर्दयैः जालं
गवाचे आनाये कोरके दम्भभेदयोरिति विश्वः॥ ४३॥

निराकरिष्णुर्द्विजकुञ्जराणां तृणीकृताशेषगुणोऽ
तिमोहात्। पापाश्रयानभ्युदयार्थमार्चीत् प्रागप्रबुद्ध
रचःप्रवरान् दशास्यः॥ ४४॥

निराकरिष्णुरित्यादि। दशास्योविबुद्धः सन् अतिमोहाद ज०म०
त्यन्ताज्ञानात् निराकरिष्णुर्निराकरणशीलः द्विजवरानित्य
र्थात् द्विजकुञ्जराणां प्रशस्तद्विजानां अभ्युदयहेतूनां सम्बन्धिनो
ऽशेषाः गुणाः तृणीकृतायेन स तृणीकृताशेषगुणः प्राक् पूर्व्वं सभा
प्रवेशात् पापाश्रयान् पापचित्तवृत्तीन् अप्ररचःप्रवरान् अभ्युद
यार्थमार्चीत्॥ ४४॥

निराकरिष्णुरित्यादि। दशास्योरावणः प्रबुद्धः सन् सभा भ०
प्रवेशात्प्राक् पूर्व्वं पापाश्रयान् पापचित्तवृत्तीन् अप्ररात्तसश्रे
ष्ठान् श्रेष्ठतोनभ्युदयार्थमार्चीत् पूजितवान् कीदृशः अतिमोहात्

अत्यमानात् द्विजकुञ्जराणां विप्रश्रेष्ठानां निराकरिष्णुः द्विजश्रेष्ठान्निराकृत्य अद्वारावसान् पूजितवानिति मोहः इधेत्तमीत्यादिना उदन्तवद्योगे षष्ठी न भवतीति सम्बन्धे षष्ठी यद्वा द्विजकुञ्जराणां तृणीकृता अवधीरिताः सकला गुणा येनेति सम्बन्धः अतएव निराकरिष्णुस्तानित्यर्थात् ॥ ४४ ॥

मायाविभिस्त्रासकरैर्ज्जनानामाप्तैरुपादानपरैरुपेतः। सतां विघातैकरसैरविचत् सदः परिक्षोभितभूमिभागं ॥ ४५ ॥

ज०म० मायाविभिरित्यादि। आप्तैरव्यभिचारिभिर्मायाविभिर्वञ्चकैः परेषां त्रासकरैः जनानामतिरौद्रत्वात् उपादानपरैः सतां सन्मार्गस्थितानां विघातैकरसैर्विनाशैकस्वभावैः उपेतो दशास्यः सदः सभामविचत् प्रविष्टः अलङ्गुपधानिटः क्सः कीदृशं रावणैश्चरणभागेन परिक्षोभितभूमिभागं ॥ ४५ ॥

भ० मायाविभिरित्यादि दशास्यः सदः सभामविचत् प्रविष्टवान् इगुपधोऽनिमिति सक् कीदृशः आप्तैरात्मीयैराप्तैरुपेतः उपगतः सन् कीदृशैर्मायाविभिर्वञ्चकैर्जनानां त्रासकरैः अतिरौद्रत्वात् उपादानपरैः स्वाम्यर्थसम्पादनपरैः सतां साधूनां विघातमाचेक्षुभिः सदः कीदृशं रावणचरणभरेण परिक्षोभितः सञ्चालितो भूमिभागो यत्र ॥ ४५ ॥

नावर्णैर्मणिभिर्विचित्रं सुमेरुशिखरमध्येवं प्रोन्नतमिति पाठे उच्चै रिति रावणविशेषणं प्रतिककुभमिति अपनदीति पचे अप्रत्ययः तड़िल्वानिति तद्वत्साहित्यमात्रमत्र विवक्षितमुपमेये प्राध्वरत्न प्रभासाहित्यादतोनात्र पौनरुक्त्यं॥ ३७॥

इति मद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लिकात्मजश्रीभरतसेनकृतायां भट्टिटीकायां मुग्धबोधिन्यां प्रसन्नकाण्डे गुणद नाम द्वितीयः परिच्छेदः काव्यस्य प्रभातवर्णनं नामैका ।११॥

इति भट्टिकाव्यस्य प्रथमोभागः
समाप्तः।

---